१८४२ शकीया

# संस्कृतसाहित्यपरिषत्

पत्रिका ।

वैशाखात् चैत्रपर्यन्ता ।

चतुर्थवर्षस्य


सम्पादकौ—

श्रीयुतदुर्गाचरणसांख्यवेदान्ततीर्थः,

श्रीकालीपदतर्काचार्यश्च ।

सहकारिसम्पादकः—

श्रीयुतअमरेश्वरठाकुरः एम, ए ।



वार्षिकमूल्यम् ३५

# संस्कृतभाषा लौकिकी आसीन्न वा ?

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीसदानन्दभादुड़ी बि, ए । )

निपुणपरीक्षितेतिवृत्ताः सम्यक् पर्य्यालोचितलोकव्यवहारा नाट्यगुरवो रूपकादिरचनाविधानोपस्थापकेषु नाट्यशास्त्रेषु यं यं भाषाविभागं निवेशितवन्तः, सर्व्वोऽप्यसौ तत्तल्लौकिकत्वस्यैव निःसंशयतया निश्चायको भवितुमर्हेत्। "पुरुषाणामनीचानां संस्कृतं स्यात् कृतात्मनाम्" इति विधिराद्याचार्य्यकर्त्तृको यदा प्राथमिकप्रस्तावोऽभूत् तदानीन्तनयुगीयानीचपुरुषाणां वाग्व्यवहारः संस्कृतभाषाश्रय एवासीदित्यत्र निरवकाशा विप्रतिपत्तिः। रूपकादीनामाङ्गिकवाचिकाहार्य्यसात्त्विकानुकारविषयकाणां विरचनं वास्तवलोकरीत्यविरुद्धतयैव भवेत्। अतः स्वभावतः संस्कृतवादिनामिव संस्कृतोच्चारणविधिर्निर्वाहितः। अद्यापि नाटकादिषूपलभ्यमानस्य संस्कृतवादिनः पुरुषजनस्य प्राकृतभेदवादिन्या महिलया यदालापादिकं, तदपि प्राङ्निर्दिष्टयुगीयवनितानां संस्कृतभणनाशक्तानामपि तद्बोधक्षमत्वे प्रमाणम्। अपरमप्यत्र द्रष्टव्यं विद्यते। दृश्यकाव्यापराभिधानं रूपकादिकं द्रष्टृश्रोतृप्रमोद-सम्पादन-प्रयोजनम्। द्रष्टृश्रोतॄणां मध्ये तु पण्डितेतर-प्राकृत-जनानामेव बाहुल्यमासीत्। यदि ते संस्कृतां वाणीं न बुध्येरन्, कथं वा तेषां श्रवणरसायनं भवेद्रूपकाभिनयः, कथं वा सम्पादित-प्रयोजना स्यात् रूपकरचना।

४। मानवीयधर्म्मशास्त्रस्य द्वितीयाध्याये यादृशोऽभिवादन-विधिर्दृश्यते, यथाविधस्वाध्यापनविधिः सर्व्वोऽप्यसौ निरर्थक एव स्यात् संस्कृतभाषाया लौकिकत्वानङ्गीकारे। अभिवादन-विधिर्यथा—

"अभिवादात् परं विप्रो ज्यायांसमभिवादयन्।
असौ नामाहमस्मीति स्वं नाम परिकीर्त्तयेत्॥
नामधेयस्य ये केचिदभिवादं न जानते।
तान् प्राज्ञोऽहमिति ब्रूयात् स्त्रियः सर्व्वास्तथैव च॥
भोः शब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः॥
आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरप्लुतः॥" इति

(२य अः। १२२-२५)

अध्यापनविधिर्यथा—

"अध्येष्यमाणं गुरुभिर्नित्यकालमतन्द्रितः।
अधीष्व भो इति ब्रूयाद्विरामोऽस्त्विति चारमेत्॥ इति

(२य अः। ७३)

तत्रैव पुनर्दशमाध्याये—

मुखबाहूरुपज्जानां या लोके जातयो बहिः।
म्लेच्छवाचश्चार्य्यवाचः सर्व्वे ते दस्यवः स्मृताः॥ (१०।४५)

इति श्लोकाद्दस्यूनां भाषाद्वयप्रयोक्तृत्वमुपलभ्यते। तत्र न "म्लेच्छितवै" इत्यार्य्यजनस्य सम्बन्धे प्रतिषिद्धं यन्म्लेच्छवचनं तद्व्यवहारपरत्वं केषाञ्च नासीत्। आर्य्यजनाभिमता सुरभारती तु अपरेषां वाग्व्यवहारसाधिका स्थिता।

५। वाल्मीकीयरामायणे दृश्यन्ते केचन श्लोका ये खलु संस्कृतभाषालौकिकत्वं निश्चाययितुमलम्। तत्र प्रविष्टदशकन्धर-मन्दिरस्य, रघुनन्दनसन्देशं कथमहं जनकसुतायै निवेदयामीति चिन्तयतो हनुमतो वचनम्;—

"अनेनाश्वासयिष्यामि शोकेनाभिहतेन्द्रियाम्।
अहं ह्यविदितश्चैव वानरश्च विशेषतः॥

यदि वाचं वदिष्यामि द्विजातिरिव संस्कृताम्।
सेयमालक्ष्य रूपञ्च जानकी भाषितञ्च मे।
रावणं मन्यमाना मां पुनस्त्रासं गमिष्यति॥" इति

( सु: का: । २८ अ: स: । १६,१७; )

ततश्च द्विजातिवत् संस्कृतोच्चारणं नूतनविपदापादकं भविष्यतीति ज्ञातनिश्चयस्य पवनतनयस्योक्तिः ;—

"राममक्लिष्टकर्म्माणं निमित्तैरनुकीर्त्तयन्।
तस्माद्वक्ष्याम्यहं वाक्यं मनुष्य इव संस्कृतम्॥
नैनामुद्वेजयिष्यामि तद्बुद्धिगतमानसाम्॥

( सु: का: । २८ अ: स: । १८; १९; )

अत्र वैदेहीप्रबोधनविषये द्विजगणोच्चारितामरगिरामप्रयुक्तत्वे हेतुर्न तावत् तस्यास्तदवबोधाक्षमत्वशङ्का, किन्तु तद्भीत्यनुपादनाभिनिवेशः। अस्मादेव लिङ्गादासीत् रामायणरचनासमयेऽनीचवनितानां संस्कृतभाषाश्रयभाषणादर्थग्रहपाटवम्, अनीचपुरुषाणां तु तत्प्रयोगपरत्वमपीत्यनुमानावतारस्तावत् सुलभ एव। "द्विजातिरिव संस्कृताम्" "मनुष्य इव संस्कृताम्" इति भेदनिर्देशः खलु द्विजेतरजनस्य योषिच्छूद्रादेः संस्कृतेतर-तत्सदृश-प्राकृतभेदवादितायामेव प्रमाणम्। तत्रैव पुनररण्यकाण्डे—

धारयन् ब्राह्मणं रूपमिल्वलः संस्कृतं वदन्।
न्यमन्त्रयत विप्रान् स श्राद्धमुद्दिश्य निर्घृणः॥

( अ: का: । ११ अ: स: । १४ )

इति श्लोकादुपलभ्यमानं यदिल्वलराक्षसस्य ब्राह्मणामन्त्रणावसरे संस्कृतवादित्वं, तत् संस्कृतभाषाया ब्राह्मणाभिमतत्वमेव प्रतिपादयति। वस्तुत एव संस्कृतवादिनामपि द्विजातीनां मध्ये भूदेवा एव प्राधान्येन दैवीं भारतीमङ्गीकृतवन्तः।

६। अस्मिन् विषये तावदन्यो दोषो मन्तोऽप्येको विद्यते ;—

"चत्वारि वाक्परिमितापदानि
तानि विदुर्ब्राह्मणा ये मनीषिणः।
गुहा त्रीणि निहिता नेङ्गयन्ति
तुरीयं वाचो मनुष्या वदन्ति ॥" इति

मन्त्रस्यास्योपव्याख्यानं यास्कमुनिकृतं निरुक्तपरिशिष्टे स्वच्छेताद‍ृशं द‍ृश्यते।

"कतमानि तानि चत्वारि पदानि? ओङ्कारो महाव्याहृतयश्चेत्यार्षम्। नामाख्याते चोपसर्गनिपाताश्चेति वैयाकरणाः। मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः। ऋचो यजूंषि सामानि चतुर्थी व्यावहारिकीति नैरुक्ताः। सर्पाणां वाग्वयसां क्षुद्रस्य सरीसृपस्य चतुर्थी व्यावहारिकीत्येके। ...................... अथापि ब्राह्मणं भवति, सा वै वाक् सृष्टा चतुर्धा व्यभवदेष्वेव लोकेषु त्रीणि पशुषु तुरीयम्। या पृथिव्यां साग्नौ, सा रथन्तरे। यान्तरीक्षे सा वायौ, सा वामदेव्ये। या दिवि सादित्ये, सा बृहति, सा स्तनयित्नौ॥ अथ पशुषु, ततो या वागत्यरिच्यत तां ब्राह्मणेष्वदधुस्तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणा"मिति।

अथ यास्कमुनिनिर्दिष्टेषु मन्त्रार्थनिरूपकेषु त्रिविधश्रेणीयानां चतुर्थी वाक् व्यावहारिकीत्यत्रैकमत्यम्। इयं तु व्यावहारिकी वाक् न संस्कृतेतरेति सुगमैव कल्पना। अतोऽदृतं ब्राह्मणवचनमपि ब्राह्मणानां लौकिक-वैदिकभाषायुगलाभिज्ञत्वं प्रतिपादयति। प्रयोक्तारस्तु ते स्वभावत एवासन् लौकिकभाषामात्रस्य, कचित्तु प्रयोजनविशेषानुरोधात् वैदिकभाषाया अपि। "या च देवानां या च मनुष्याणा"मिति ब्राह्मणांशस्य वैदिकी लौकिकी चेत्येवमर्थो दुर्गाचार्य्येणापि निर्द्धारितः। अतः सिद्धं सुरगिरां लौकिकत्वं वेदादिशब्दप्रमाणविषयत्वात्।

७। तत्र पुनर्यास्कमहर्षिप्रकाशिते निरुक्तग्रन्थे, तथा पाणिनीयाष्टाध्यायीसूत्रपाठे, तथा च पतञ्जलिकृतमहाभाष्ये केचन प्रयोगा उपलभ्यन्ते, ये तावत् पूर्व्वोदाहृताखिलानुमाननिरपेक्षेणैव निखिल पूर्व्वपश्चिमतनिराकरणपुरःसरं संस्कृतभाषाया लौकिकत्वं सिद्धान्तयितुमलम्। एवम्भूतानां प्रमाणीभूतप्रयोगाणां केषाञ्चन निर्द्देशोऽत्र विधीयते यथाक्रमम्।

(क) महर्षियास्को भगवान् पाणिनिश्च व्यवहारबाह्यां छान्दसीं भारतीं व्यावहारिकसंस्कृतभाषातः सर्व्वदा पृथक्कृतवन्तौ। यत्र तावत् प्रयोगादिविषये वैदिकलौकिकयोर्भेदस्तत्र तौ वैदिकप्रयोगम् "अन्वध्यायम्" "आर्षम्" इत्यादि विशेषणपदेन, छन्दोनिगममन्त्रब्राह्मणादिशब्देन वा विशेष्य, तथा लौकिकभाषासम्बन्धे भाषाशब्दं च प्रयुज्य, यथानयोः प्रसिद्धो भेदो न व्याहन्येत, तादृशरीत्या तत्तद्विषयकविधिव्यापारादिकं सम्पादयामासतुः। तत्र निपाताधिकारे महर्षियास्कः—

"तेषामेते चत्वार उपमार्थे भवन्तीति। इवेति भाषायाञ्च। अन्वध्यायञ्चाग्निरिवेन्द्र इवेति। नेति प्रतिषेधार्थीयो भाषायाम्। उभयमन्वध्यायम्।" इति।

( १मः अः। ४र्थः खः )

निर्वचनरीतिप्रकरणे च तेनैव पुनरुक्तम्—

"अथापि भाषिकेभ्यो धातुभ्यो नैगमाः कृतो भाष्यन्ते दमूनाः क्षेत्रसाधा इति। अथापि नैगमेभ्यो भाषिका उष्णं घृतमिति।"

इति। ( २यः अः। २यः खः )

एवञ्च पाणिनीयाष्टाध्याय्यां "विभाषा छन्दसि" "कृत्वाचान्द्रोत्तरपदे मन्त्रे" "वा षपूर्व्वस्य निगमे" "बन्धने वर्षौ" "ऋचि तुनुघमक्षुतङ्कुत्रोरुष्याणाम्" इत्यादिकानि यानि छन्दःप्रभृतिशब्दाञ्चितानि सूत्राणि तानि केवलं छान्दसप्रयोगविधायकानि। लोकप्रसिद्धा

लौकिकी या भाषा तन्मात्रविषयकास्तु "स्थे च भाषायाम्" "भाषायां सदवसश्रुवः" इत्यादिका विषयः। पतञ्जलिरपि स्वकीये महाभाष्ये लौकिकवैदिकशब्दाभ्यां व्यावहारिकीं छान्दसीं च भाषां लक्षितवान्।

(ख) संस्कृतभाषायाः शब्दप्रयोगविषये, प्रादेशिका विशेषाः समुपलभ्यन्ते। इयं तु विशेषोत्पत्तिः सम्भवेत् परिवृत्तिस्वभावाया लौकिकभाषाया एवेति सिद्धं संस्कृतभाषाया लौकिकत्वम्। प्रदेशीयविशेषाणामुल्लेखो यथा पातञ्जल-महाभाष्ये,—

"प्रियतद्धिता दाक्षिणात्याः; यथा लोके वेदे चेति प्रयोक्तव्ये लौकिकवैदिकेष्विति प्रयुञ्जते।" इति॥

यथा च निरुक्ते,—

"शवतिर्गतिकर्मा कम्बोजेष्वेव भाष्यते;.....विकारमस्यार्य्येषु भाषन्ते शव इति। दातिर्लवनार्थे प्राच्येषु दात्रमुदीच्येषु।" इति
(अः २; खः २;)

पाणिनि कात्यायनावपि बहूनि सूत्रवार्त्तिकानि प्रादेशिक-भेदपराणि शब्दानामारचितवन्तौ।

(ग) संस्कृतव्याकरणसाहित्यादिषु केचन विशिष्टाकाराः प्रयोगप्रकारा वर्त्तन्ते, येषामुत्पत्तिः स्थितिश्च लौकिकभाषायामेव सम्भवेत्, नान्यत्र। तत्र 'दण्डादण्डि' 'केशाकेशि' 'खादतमोदता,' 'अश्नीतपिवतेत्यादि-समासोदाहरणानि, तथा खादखादेति खादति, कुरु कुर्व्विति करोतीत्येवंविधानि वचनानि, तथा च हस्तग्राहं गृह्णाति, उदरपूरं भुङ्क्ते, यथाकारमहं भोक्ष्ये किं तवानेनेत्येतादृशानि चामुलन्तप्रयोगपराणि वाक्यानि तादृशप्रयोगदृष्टान्ततयोपस्थापयितुं शक्यानि। एतेषामुत्पत्तिस्तदैवाभूत्, यदा संस्कृतभारती विद्वदङ्गना-गोपालबालिकानां विश्रम्भालापादिमाधिका स्थिता।

(घ) पाणिनिः स्वकीये व्याकरणे प्लुताभिधं स्वरविशेषं त्रिमात्रवर्णं निर्दिष्टवान्। तस्य च स्वरविशेषस्य दूराह्वाने गाने रोदनादौ

चोपयोगः। एवं सिद्धं दूराह्वानस्य गानस्य रोदनादेश्च संस्कृत-भाषाश्रयत्वम्। अनुपपन्नं तु स्यादेतत् सर्व्वं तल्लौकिकत्वानङ्गीकारे।

(ङ) शब्दानुशासनशास्त्रप्रयोजनानुबन्धनिरूपणप्रकरणे महा-भाष्यकृता तावदेकः पूर्व्वपक्षः समुट्टङ्कितः,—

"वेदान्नो वैदिकाः सिद्धा न हि लोकाच्च लौकिकाः;
अनर्थकं व्याकरणमिति।" इत्येवंरूपः।

सत्यमेव कात्यायनीये पतञ्जलीये च समये केचन स्थिता व्याकरणानर्थक्यवादिनः, येषां मते स्वाभाविकप्रयोगपरिदर्शनाधीन-मिचमेव शब्दसंयोजनापाटवम्। इयं च शब्दव्यवहारस्य व्यवहार-मात्राधीनत्वकल्पना तादृश्येव युगे सम्भवेत्, यदेयं भारती व्यवहार-बाह्यतां न गता। पुनरपि "पृषोदरादीनि यथोपदिष्टम्" इति पाणिनीय-सूत्रस्य व्याख्यानावसरे तेनैव शिष्टानां स्वभाविकी संस्कृत-शब्दप्रयोगकुशलता प्रदर्शिता। तद्यथा—

"नूनमस्य दैवानुग्रहः स्वभावो वा योऽयं न चाष्टाध्यायीमधीते, ये चास्यां विहिताः शब्दास्तांश्च प्रयुङ्क्ते।" इति।

एवञ्च महाभाष्ये सर्व्वत्रैवोदाहृतं लौकिकप्रयोगाधीनाकार-प्रकारकत्वं शब्दानां, निष्पादिता च शब्दानुशासनविधीनां सिद्धिः, व्यवहारानुगुणतया। अन्योऽपि सुरगिरां लौकिकत्वव्यवस्थापको भाष्यांशो विद्यते; स यथा—

"भूयांसोऽपशब्दाः। अल्पीयांसः शब्दाः। एकैकस्य हि शब्दस्य बहवोऽपभ्रंशाः। तद्यथा गौरित्यस्य शब्दस्य गावी गोणी गोता गोपोतलिकेत्येवमादयो बहवोऽपभ्रंशाः।" इति।

अत्राभिधीयमानं विकारभूयस्त्वं भाषायाः प्रचुरप्रयोगविषयत्व-निबन्धनमेवेति सिद्धं तस्यास्तात्कालिकं व्यावहारिकत्वम्। अत्रापर-मपि द्रष्टव्यं विद्यते। सत्स्वपि पाणिनीयसूत्रेषु शब्दप्रयोगविधानेषु पुनरप्यब्दशतान्ते कात्यायनस्य वार्त्तिकरचनायां प्रवृत्तिर्भाषायाः

परिवृत्तिपरिचायिकैव। यथाविधपदकदम्बयोगनियोगवती विबुधभारती स्थिता पाणिनीये समये, ततोऽतितरामन्यथाभूता जाता कात्यायनीये युगे; अस्मादेव कारणात् नूतनतरव्यवहारविषयकविधिपराणां वार्त्तिकानां सम्पादना। इदं च परिवृत्तिमत्त्वं स्वनीकजनीयभाषाया भूलोकेऽपि लौकिकत्वं निःसंशयतया प्रमाणयति।

अत एवाखिलभारतवर्षीयसंस्कृतसाहित्यसम्मेलनस्य विगतवर्षीयाधिवेशने सभानायकोयाभिभाषणे श्रीयुक्त-हरनारायणशास्त्रिभिः समीचीनमेव निगदितम्—

"यदि नाम नैव भवेत् सुरभारती पुरा प्रचलिता भाषा, तर्हि न तदैव सर्व्वाणि शास्त्राणि सर्व्वाः शिल्पकलाः सर्व्वे च लोकोपयोगिनो व्यवहारा अर्थेरन्।......अत एव सुस्पष्टमनुमीयते, यदासीत् कोऽपि तादृक्समयः समयो यस्मिन् केवलं सुरभारती व्यावहारिकी भाषैवासीत्, अपि तु नः परं काष्ठामुपगताया अस्याः सौभाग्यसूर्य्योदयः स्वं न कुर्व्वतिसमा निखिलं भुवनमण्डलं प्रकाशयामास।"

इति शम्।

## रत्नपरीक्षा।

(लिखक, श्रीराजेन्द्र नाथ भारतो)

यद्यपि "जातौ जातौ यदुत्कृष्टं तद्धि रत्नं प्रचक्षते" इत्यादि रत्नलक्षणशास्त्रमम्। यथा अश्वरत्नं, गजरत्नं, स्त्रीरत्नम् इत्यादि,... "अश्वरत्नं समासाद्य। ऊचे:श्रवसमंस्तात् प्रणिपत्य समर्पित"मिति देवीमाहात्म्ये। "एतस्य धनुषो भङ्गं चतस्य च समुन्नतिम्। स्त्रीरत्नस्य कथं नाम मृग्यते भार्गवोऽधुना॥" इति च महावीरचरिते। यद्यपि अश्वरत्नं स्त्रीरत्नमित्यादौ अश्वः रत्नमिव स्त्री रत्नमिवेत्युपमितसमासेनैव गता लादव रत्नशब्दस्य जातुरत्कृष्टवस्तुवाचकत्वे

विशिष्टमानाभावः, तथापि स्वारस्यादत्र स एवार्थः कल्पनीयः, टीकाकृद्भिरपि तत्र तत्र तथैव व्याख्यानत्वात्। जातुरत्कृष्टवस्तुवाचकस्य रत्नशब्दस्य प्रकृष्टोदाहरणन्तु—"यानि रत्नानि मणयो गजाश्वादीनि वै प्रभो" इत्यत्र। तथाच यानि रत्नानि स्वजातिश्रेष्ठवस्तूनि इत्यर्थः, अन्यार्थकल्पने च पुनरुक्तिप्रसङ्गः। मणिरत्नशब्दयोर्यथाकथञ्चिद्भेदसङ्कोचेन च व्यापकार्थस्य मणिशब्दस्य प्रकृतार्थसङ्कोचेन प्रस्तुतार्थानुपयोगित्वं दुर्व्वारं स्यात्। अत्र हि निशुम्भस्य निखिलभेदविशिष्टमण्यधिकारित्वं विवक्षितम्, तच्च मणिमुक्तादिकं रत्नञ्च माणिक्यमिति भेदकल्पने सङ्कुचितार्थं सत् तादृशार्थप्रतीतिं व्यगयति, तस्मादत्र रत्नशब्दस्य स्वजातिश्रेष्ठे एव शक्तिः। तथाप्येतल्लक्षणलक्षितो रत्नपदार्थो नास्माकमद्य प्रबन्धप्रतिपाद्यो विषयः। एतादृशरत्नपदार्थस्यापरिच्छिन्नसंख्याकतया पुरुषायुषेणापि तद्गुणदोषविचाराणां वाचस्पतेरपि कर्त्तुमशक्यत्वात्। उत्कृष्टापकृष्टवस्तुनिर्णयस्य च रुचिवैचित्र्यानियामकतया जातौ जातौ किमुत्कृष्टमितीयकपुरुषीयया बुद्ध्या निर्णेतुमयुक्तत्वाच्च। तथाहि दृश्यन्ते केचिज्जनाः विहङ्गमादिजातिषु कोकिलं रत्नभूतं मन्यन्ते, केचित्, हंसं केचिच्च शिखिनमिति। पुष्पेषु च केचित् निशान्तविकाशि शुद्रं कुन्दकुसुमं, केचिद्वा प्रखरसूर्य्यकरोज्ज्वलाम् दिवाविकाशमुपेयुषीं हास्योज्ज्वलमुखीं सरोजिनीं बहुमन्यन्ते। इदानीं यावदीदृशे सिद्धान्ते स्वां तुष्टिं न केऽपि उपानेषुः, यदेतल्लक्षणलक्षितमीदृशमियत्परिमितं वा वस्तु एतज्जातीयेभ्यो वस्तुभ्यः सुतरामुत्कृष्टमपकृष्टं वेति। अस्यां जातौ इदमुत्कृष्टमिदञ्च निकृष्टमिति निर्णेतुं शास्त्रकाराणामप्यौदासीन्यात्। अथवा प्रबन्धशिरोभूतं रत्नमित्येकमेव पदं हिरावर्ज्जं पठनीयं, तथाच यस्यां कस्याञ्चित् जातौ यदुत्कृष्टं तस्यापि रत्नमित्याख्या भवत्यभावात्। प्रस्तरजातौ किमुत्कृष्टमिति जिज्ञासायां रत्नमेवेतुरन्तरयतामस्माकं तत्परीक्षणं युज्यत एवेति सर्व्वमनवद्यम्। एकशब्दस्य

द्विरावृत्तिरपि दृश्यते, तथाच साङ्ख्यकारिकायां प्रत्यक्षमनुमानमाप्तवचनञ्चेति सर्व्वप्रमाणसिद्धत्वात्। त्रिविधं प्रमाणमिष्टं प्रमेयसिद्धिः प्रमाणाद्धि" ॥ इत्यत्र त्रिविधं प्रमाणमित्युक्तं, तत्र किं प्रमाणलक्षणमित्याकाङ्क्षायाम् "अत्र प्रमाणमिति समाख्यया लक्षपरम्" इति वाचस्पतिमिश्राः। समाख्यया सम्यगुच्चारणेन द्विरावर्त्तनेनेति यावत्। लक्षपरं लक्षणबोधाभिप्रायेण उच्चारितम्। तथाच द्विरावृत्तस्य प्रमाणपदस्य प्रकृतिप्रत्ययविभागेन एकं प्रमाणस्य लक्षणमिति निष्कृष्टार्थः। अत एव नायं मयैव द्विरावृत्तिरूपो नूतनः पन्थाः समवलम्बितः। तस्मादस्य मण्यर्थप्रत्यायकं रत्नपदमेवाभिमतमस्माकमिति विदितमस्तु तत्रभवतां श्रोतृमुख्यानाम्। ईदृशरत्नपदार्थस्य गुणदोषविचारेषु च तत्रभवन्तः शास्त्रकारा एव प्रमाणमिति नाहं प्रतिवादिरक्षास्यनेत्रगोचरतामापद्ये य। अस्मिंश्च अनेकमनोरमवस्तुसन्तानकान्ते बहुलमहार्घद्रव्यसम्भारविभ्राजिते संसारप्रचारे रत्नतुल्यमधिकमूल्यवद्वस्तु किञ्चिदपि नास्ति। इदन्तु मनःसु वर्त्तते सहृदयानां यदेतेनैवास्य सर्व्वोत्कर्षेण विशेषज्ञा कवयोऽपि प्रतिजातौ प्रधानतमं वस्तुजातं रत्नशब्देनाभ्यदधुः। सन्ति चास्य बहवो गुणभेदा निखिलमानवसमाजोपकारकाः अपरापरवस्तुगुणातिशायिनः, ते च यथाकालं प्रकाशं नेष्यन्ते। इदानीमवसरप्राप्तमस्योत्पत्तिप्रकारं सविस्तरमुपवर्णयामः,—पुरा बलनामा कश्चिदसुरः देवदेवाक्षुब्धवीर्य्यातिशयः शाश्वतिकवैरतया देवानामिन्द्रादीनां मर्द्दनं कर्त्तुमारभत। ते च देवा दुर्ब्बलतया युद्धे प्रतिकर्त्तुमक्षमाः वरव्याजेन तमसुरेन्द्रं यज्ञीयपशुत्वमयाचन्त। तथाविधदुर्वृत्तस्यापि तस्यासुरस्य शरणागतरक्षकत्वम् अर्थिषु च कल्पतरुस्वभावत्वमशेषत एव प्रसिद्धमासीत्, देवैर्याचितः स तथाविधमात्मदुःखकरमपि वरमतिशौण्डीर्य्येण तेभ्यः प्रत्यजानात्। एवं प्रतिज्ञापाशबद्धो बलः स्वाराज्यलोभात् इन्द्रादैर्यज्ञे पशुरिव हन्यते स्म अधिकसत्त्वस्य तस्येदृशेनावदा-

तेन कर्म्मणा शरीरस्य सर्व्वे अवयवा रत्नबीजत्वं समागताः। तथाच गारुड़े—"वच्मि परीक्षां रत्नानां बलो नामासुरोऽभवत्। इन्द्राद्या निर्जितास्तेन निर्जेतुं तेन शक्यते। वरव्याजेन पशुतां याचितः स सुरैर्मखे। बलो ददौ स्वपशुतामतिसत्त्वो मखे हतः। तस्य सत्त्वविशुद्धस्य सुविशुद्धेन कर्म्मणा कायस्यावयवाः सर्व्वे रत्नबीजत्वमाययुः॥" इति तस्य चावयवस्य किञ्चन यत्र क्वचन समुद्रे पर्व्वते वंशे वा पतितमासीत्, तत्तत्स्थानं आधारवशेन गुणप्रकर्षेण वज्रस्य सहता वा रत्नस्याश्रयो भूत्वा न्यूनाधिकगुणां रत्नाकरतामुपाययौ। तथाच तत्रैव गारुड़े—'तेषान्तु (अवयवानां) पततां वेगात् विमानेन विहायसा। यत् यत् पपात रत्नानां बीजं क्वचन किञ्चन। महोदधौ सरिति वा पर्व्वते काननेऽपि वा। तत्तदाकरतां यातं स्थानमाधेयगौरवात्। एकस्मात् शरीरादुत्पन्नानां रत्नानां गुणतारतम्य च इदमेव आधारवैषम्यं कारणमस्माभिरुपपाद्यते. तथाच कानिचित् रत्नानि रक्षोभयविनाशीनि, कानि च भीषणविषधरविषवेगोपशमनानि, कानिचिद्वा पावकशिखा शोषणान्यस्माभिरुपलभ्यन्ते। एवमेतेषां गुणदोषाश्च अनेकेषामेव प्रत्यक्षगोचराः। तथाहि केषाञ्चित् रत्नानां धारणेन नितान्तनिःस्वोऽपि अकारणोपगतेन धनादिना सुखस्वाच्छन्द्यमुपगतः परं सुखेनैव कालमतिवाहयति, केषाञ्चिच्च धारणेन हस्त्यश्वरत्नवान् महाधनेश्वरः पृथ्वीपतिरपि अनाशङ्कनीयोपनिपातेन विघ्नराशिना पुनः पुनरुपद्रूयमानः अचिरेणैव कालेन दीनां दशामाश्रयते। तस्मादस्य परीक्षाशुद्धस्यैव धारणं सर्व्वेषामेव विधेयम्। परीक्षाशुद्धञ्च रत्नं मानवानां सर्व्वविधं मङ्गलमानयति द्रवयति च विपदं शरीरबाधाविधायिनीमशेषतः। पूर्व्वं च राजानः अस्य बाहुल्येनैव व्यवहारं चक्रुः, रत्नहारः पूर्व्वेषामासीदत्यादरणीयं वस्तु, ते च बहुभिरत्नादिसंग्रहेण मनोरमं हारादिकं निर्म्ममुः। तथाच सप्तविंशमुक्तामयी नक्षत्रमाला एकावली इत्यादि हारनाम श्रूयते। चतुरुज्ज्वलरत्नञ्च ते शोभार्थं मुकुटचूड़ायां स्थानम-

लभ्यत्, तच्च चूड़ामणिशब्देनाद्यापि प्रसिद्धिमभिगच्छति। रत्नहार-मध्ये च विशिष्टशोभासम्पादनार्थम् अत्युज्ज्वलमेकं रत्नमासीत् शिल्पिना विरचितं, तस्य च सर्व्वरत्नातिशायिना तेजःपुञ्जेन सर्व्वमणिमध्यगत-त्वेन च नेतृत्वमेवोचितमिति नायक इति नाम प्रदत्तं कविभिः। तथाच—"तवाङ्गहारे रुचिरोऽपि नायकः, शिवार्मणिश्च द्विजराड्-विदूषकः"। इति दमयन्तीवर्णनायां श्रीहर्षः। "प्रालम्बपार्श्वप्रहारादि-मालायामधिकद्युतिः। एकार्थतन्तुप्रोतानां नायको नायकायते" इति च शिशुपालवधे माघः।

भगवान् नारायणोऽपि रत्नाकरसुतां कुर्व्वन् नायिकां बहुमानमस्य प्रकाशयति लोकसमाजे, तच्च "ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसन्निविष्टः केयूरवान् कनककुण्डलवान् किरीटी हारी" इत्यत्र। तथा "वपुषा पुराणपुरुषः पुरः स्थितो परि-पुञ्जमानपृथुहारयष्टिना" इत्यत्र च स्फुटमस्माभिरुपलभ्यते॥ रत्नानामशेषो गुणः केनापि ज्ञायते, न तु सर्व्वैः; "यतः गुणी गुणं वेत्ति न वेत्ति निर्गुणः"। गुणिन एव गुणानां यथायथमादरं जानन्ति। सोऽयं भगवान् निखिलगुणग्रामैकाश्रयः खलु गुणज्ञत्वं ज्ञापयितुमिव अत्युज्ज्वलमहामणिं कौस्तुभमणिं स्वीयवक्षःस्थल एव स्थान-मलम्भयत। कौस्तुभमणेरिव प्रभासम्पन्नः कश्चित् मणिषु विद्यते एव, तथाच "कौस्तुभस्तु महातेजाः कोटिसूर्य्यसमप्रभः। इदं किमुत वक्षस्थं प्रदीपार्हमिमानिति"। इति भागवतामृते। अहो सौभाग्यं कौस्तुभ-मणेः! यस्य हि भगवच्चरणकमलं आश्रयितुकामा आत्मारामाः मुनयो निर्वीजं समाधिं समाश्रयन्तो बहव आयासमसाध्यं बहुवर्षनिष्पाद्यं वेदविधिबोधितं यज्ञादिकं सम्यगनुतिष्ठन्ति, तपवातातपान् सहमानाः क्रियन्ते वा तपोऽनुष्ठानानि कुर्व्वते, तस्य भगवतो नामस्मरणविधूत-मनोमलस्य वक्षःस्थलमनायासेनैव समाश्रिताय। एतच्च प्रायश एव दृश्यते जगति यस्य किञ्चिदपि वाञ्छनीयं नास्ति, यस्य वा मङ्गला-

मङ्गलस्नानविरहः सर्व्वदैवोपलभ्यते, तस्यैव सर्व्वाः सम्पदः समुपतिष्ठन्ते नत्वभिलाषवतां शुभाशुभविचारशक्तिसम्पन्नानाम्। तथा सति जगत् सृष्टिसारभूता ध्यानपरायणा मुनयोऽपि कथं भगवत्चरणकमल' मासादयेयुः, प्रस्तरजातीयः कौस्तुभमणिर्व्वा कथं तस्य वक्षःस्थल माश्रयेत। सोऽयं कौस्तुभमणिः देवासुराणां समुद्रमन्थने समुत्पन्नः मथितसामग्रीसारभूत इति भगवते दत्तः। स्यमन्तकाख्यश्चापरो मणिः श्रीकृष्णहस्तस्थितः प्रकटयति जगति मणीनामिव प्राधान्यमनन्य साधारणम्। इमञ्च मणिं सत्राजिन्नामा कश्चिद्राजा आराधन-परितुष्टात् भगवतः सूर्य्यादध्यगच्छत्। अशेषगुणसम्पन्नोऽयं मणिः स्वावस्थाने दुर्भिक्ष' सर्पभय' आधिव्याधीन् मायिनां मायाजालञ्च निरस्य तं देशं सर्व्वथा रिष्टिशून्य' करोति। अन्यच्चायमष्टौ सुवर्ण-भारान् प्रतिदिन' सृजति, तेन च यत्रायं तिष्ठति, स हि देशः स्वत एव समृद्धः सन् सर्व्वोत्कर्षेण वर्त्तते। तथाच—"दिने दिने स्वर्णभारानष्टौ संसृजति प्रभो! दुर्भिक्षमार्य्यरिष्टानि सर्पाधिव्याधयोऽशुभाः। न सन्ति मायिनस्तत्र यत्रास्तेऽभ्यर्च्चितो मणिः।" इति भागवते। अस्य च रत्नस्य बहवो भेदाः यथा—पद्मरागः, हीरकः, मुक्ता, मरकतम् इत्याद्याः। तत्र पद्मरागः शोणवर्णमणिः 'माणिक' इति तस्य भाषा। अस्यापि देशभेदेन नामवर्णयोर्भेदो दृश्यते। यथा—"सिंहले तु भवेद्रक्त' पद्मरागमनुत्तमम्। पीत' कानपुरोद्भूत' कुरुविन्दमिति स्मृतम्॥ अशोकपल्लवच्छायं प्रसु' सौगन्धिकं विदुः। तुम्बुरे च्छायया नीलं नीलगन्धि प्रकीर्त्तितम्॥" इति अस्य उत्तमाधमभेदोऽपि क्षेत्रभेदेन भवति। यथा—"उत्तम' सिंहलोद्भूतं निकृष्ट' तुम्बुरोद्भव'। मध्यम' मध्यम' ज्ञेय' माणिक्य' क्षेत्रभेदतः॥" इति युक्तिकल्पतरौ पद्मरागपरीक्षा। अत एव पद्मरागस्य नानावर्णत्वेऽपि "प्रधानरूपदेशाद्व्यपदेश" इति न्यायात् उत्तमस्य सिंहलोद्भवस्य रक्तत्वात् पद्मरागः शोणमणिरिति अमरकोषोऽपि संगच्छत एव। अस्य च पद्मरागस्य मानवानामिव वर्णविभागः परिलक्ष्यते,

यथा —"रक्तश्वेतो भवेद्विप्रस्त्व नरक्तस्तु क्षत्रियः । रक्तपीतो भवेद्वैश्यो रक्तनीलस्तथान्त्यजः ॥" इतिः ।

एतेन चैतेषां वर्णविभागेन मध्ये गत् शुक्तिकागङ्गानाविद भाकर-स्थितानामेवासम्यागन् गाणाः पद्मा ततत् थानो वानये प्रति-ष्ठोनाः कृता इति । कथमन्यथा घटपटादोनामपि जोवनहानानापि रेषां वर्णविभागः संगच्छते । गुणदोषविचारेणास्य धारणं कर्त्तव्यं, दुष्टः पद्मरागः महान्समापत्सम्भारं जनयनोति सर्व्वथा तस्य परोहारः कर्त्तव्यः । तस्य येन दोषेण यादृशं भयमुत्पद्यते, तस्य दोषस्य नाम भयाभिधानञ्च समुल्लिख्यते —दोषाश्च अष्टौ पद्मरागस्य यथा— "द्विच्छायश्च द्विरूपश्च सश्चेदः कर्करस्तथा । असाजनं कोकिलश्च जल धूम्रावपि च ये ॥ छायाद्वितयसम्बन्धात् द्विच्छायं बन्धुनाशनम् । द्विरूपं द्विपदन्तेन माणिक्येन पराभवः । सश्चेदो पितृमित्रादि ग्रस्त-पातविधायकम् । कर्करं कर्करायुक्तं पशुबन्धुविनाशकृत् । दुग्धेनेव समालिप्तमपतापुटमुच्यते । असाजनं समुद्दिष्ट माणिक्यं बहुदुःखकृत् । मधु विन्दुसमच्छायं कोकिलं परिकीर्त्तितं आयुर्लक्ष्मीयशो हन्ति सदोषं तन्न धारयेत् । रागहीनं जलं प्राहु धनधान्यादिकृत् । धूम्र धूमसमाकारं वदन्ति भयनावहेत् ॥" रत्नस्य च परीक्षा यत्नमेव कर्त्तव्या, अपरीक्षितं रत्नं न धारयेत्, परीक्षाविशुद्धरत्नं सर्व्वदोष मुपहन्तीति तदेव धारयेत् । परीक्षा च निपुणबुद्धिभिः सूक्ष्मलोचनैः निपुणभावेनैव कर्त्तव्या । सा चेत्थं परीक्षा, —"बालार्ककरसम्पर्कात् यः गिरां लोहितां वमेत् । रञ्जयेदाश्रमं वापि स महागुण उच्यते । दुग्धे शतगुणे क्षिप्तो रञ्जयेद् यः समन्ततः । वमेच्छिखां लोहितां वा पद्मरागः स उत्तमः ॥ अन्धकारे महाघोरे यो न्यस्तः सन् महामणिः । प्रकाशयति सूर्य्याभः स श्रेष्ठः पद्मरागकः ॥" इत्यादयं, नेह सम्प्रपञ्चमुद्भ्रियते सर्व्वं विस्तरभयात् । एषामाकारमानव्यवहारपरिमाणानि विचार्य्यन्ते, तत्रै-तेषामुर्त्तनम् आकारपरिमाणं विम्बीफलतुल्यं, मानव्यवहारपरिमाणं

समानत्वात् तुम्बुरुदेशोद्भवाः, कृष्णवर्णतया सिंहलदेशोत्थाः, अतिनीलस्वभावत्वाच्च मुक्तामानीयाः, दीप्तिहीनतया च श्रीपर्णिकाः विजातीयत्वमुपव्रजन्ति। तथाच—"तुषोपसर्गात् कलसाभिधानमाताम्रभावादपि तुम्बुरुत्थम्। काष्ण्यात् तथा सिंहलदेशजातं, मुक्ताभिधानं नभसः स्वभावात्॥ श्रीपर्णकं दीप्तिनिराकृतित्वात् विजातिलिङ्गाश्रय एष भेदः।" अस्य विभागप्रकारस्य लिख्यते। तथा हि यः पद्मरागः अतिशयश्यामवर्णः, यो वा तुषाणामिव मध्यदेशेन चूर्णीकृतः, यश्च स्निग्धतया नोपलक्ष्यते, यो वा मृदितः सन् स्वां दीप्तिं जहाति, स एव विजातीयः, यस्य वा अङ्गुलीभ्यामग्रभागे स्पृष्टस्य पार्श्वे कालिमा समुपजायते, यश्च वा ऊर्द्ध्वमुत्क्षिप्त[illegible] गुणसम्पन्नो दृष्टिभिरुपलभ्यते, तुल्यप्रमाणस्य तु सजातीयेन गुरुत्वे[illegible] तुल्यं भवेत, स चापि विजातीयः। एवमनयापि परीक्षया यदि सन्देहो न निरस्येत्, तदा तं शिलायां घर्षयेत्, शिलाया घृष्टो यः पूर्व्वशोभामन्यक्तेन पुनरितोऽप्यधिकां शोभामस्यदं पुष्येत्, स एव सजातीयः, तदितरास्तु तदितरजातीया इति ज्ञातव्यम्। ततोऽप्ययमुत्कृष्टः पन्थाः पद्मरागपरीक्षणस्य यत् पद्मरागमन्यं वा यं कञ्चिन्मणिं परस्परं विलिखेत्, एवं विलिख्यमानो यो न क्षतचिह्नं विभर्त्ति, स एव पद्मरागः। नहि वज्रेण कुरुविन्देन वा भङ्गस्त्वचेष्टयापि पद्मरागस्य लेखनं कर्त्तुं शक्यम्।" तानि चैतेषां प्रमाणानि—"यः श्यामिकां पुष्यति पद्मरागो यो वा तुषाणामिव चूर्णमध्यः। स्नेहप्रदिग्धो न च यो विभाति, यो वा प्रमृष्टः प्रजहाति दीप्तिम॥ आक्रान्तमूर्त्ति च तथाङ्गुलिभ्यां, यः कालिकां पार्श्वगतां विभर्त्ति। सम्प्राप्य चात्क्षेपपथानुवृत्तिं विभर्त्ति यः सर्व्व गुणानतीव॥ तुल्यप्रमाणस्य च तुल्यजातेर्यो वा गुरुत्वेन भवेन्न तुल्यः॥ प्राप्यापि रत्नाकरजां स्वजातिं, लक्षन्तु गुरुत्वेन गुणैन विद्वान्।···अप्रणश्यति सन्देहे शिलायां परिघर्षयेत्। दृष्टा योऽत्यन्तशोभावान् परिमाणं न मुञ्चति॥ स ज्ञेयः शुद्धजातिस्तु श्रेयांस्यानीय विजातयः॥

स्वजातकं समुत्थेन विलिख्येद्वा परस्परम्। वज्रं वा कुरुविन्दं वा विमुच्यान्येन केनचित्, न शक्यं लेखनं कर्त्तुं, पद्मरागेन्द्रनीलयोः॥ इति॥ पद्मरागरत्नपरीक्षा।

(क्रमशः)

---

## काशीनिवासाष्टकम्।

( लेखक—महामहोपाध्याय श्रीप्रमथनाथतर्कभूषण। )

विश्वोद्भवस्थितिलयैकनिदानमाद्यम्
विश्वेश्वरं त्रिविधतापहरं प्रणम्य।
याचे सदा शरणदाऽशरणस्य काश्याम्
काशीश्वरास्तु वसतिर्मम ते प्रसादात्॥ १॥

विद्याकीर्त्तिकलत्रवित्ततनया मोहान्धया सेविता
त्यक्त्वा ते चरणारविन्दयुगलं सर्व्वार्थदं नाथ हे।
सम्प्रत्युत्कटरोगदुर्व्वहजराभीतौ न ते शर्म्मदा
त्वं शम्भो करुणानिधे निरवधिक्लेशं न मां सन्त्यज॥२॥

भागो रोगकरो धनं मतिहरं कीर्त्तिर्मदोद्दीपनो
दारा बन्धनहेतवः सुतसुतापौत्रादयोऽनर्थदाः।
विद्याशुष्कमरित् त्वमेव शिव हे सर्व्वात्मना शान्तिदो
दुःखस्याशरणस्य मेऽद्य गिरिश त्वं पाहि मामाश्रितम्॥३॥

कथं वा वस्तव्यं तव पुरि पुरारे न विदितम्
न शौचं नाचारो मम पशुपते नापि विरतिः।
तथाप्यस्यां वासो भवतु यदहो प्रार्थयत इदम्
विना ते कारुण्यं शिव सफलतामेष्यति कथम्॥४॥

दम्भस्तम्भितमानसेन गुरवो नोपासिता न श्रुता
वेदान्ता विधितः कुतोऽस्तु मननं दूरे निदिध्यासनम्।

नित्यं कर्म्म निरस्तमस्ति च महान् लोभोऽपि भोगेऽधुना
वार्द्धक्ये करुणानिधे तव कृपां हित्वा न मेऽन्या गतिः ॥५॥

कीर्त्तिर्यातु रसातलं सुतसुहृत्कान्ता द्दिपन्तूत्सुके-
र्मान्या मौनमुपासतां च रिपवो माद्यन्तु निन्दन्तु वा।
भिक्षां देहि गिरीन्द्रनन्दिनि शिवं नित्यं सुधामश्नुवे
काश्यामातनुपातमस्तु वमतिर्नान्यत् किमप्यर्थये ॥ ६ ॥

यस्याः सङ्गसुखाब्धिमज्जनकृते भागीरथीपूर्व्वतः
प्रत्यावृत्य कुवेरदिग्गतिमतो धत्ते विचित्रां श्रियम्।
ब्रह्मोपेन्द्रसुरेन्द्रमुख्यवमतिर्भोगापवर्गप्रदा
सा काशी जयताज्जरामरणहृद् विश्वेश्वरप्रेयसी ॥ ७ ॥

निखिलविबुधसेव्या तीर्थसार्थैरुपास्या
कलुषनिचयहन्त्री सर्व्वमोक्ष्ये कृदाक्षी।
पुरहरनगरीयं मंस्कृतद्धारिणी मे
भवतु भवतु काशी सर्व्वदा वासभूमिः ॥८॥

## वृत्तकथा।

( पूर्व्वतोऽनुवृत्ता। )

( लेखकः—श्रीदुर्गाचरणसांख्यवेदान्ततीर्थः। )

वत्स, ये चैते स्तब्धमूर्त्तय ईषदाकम्पितशिरसो भृशकर्कशवपुषः खर्जूरतरवः पुरतो विलोक्यन्ते, न खल्वेतानपि तरुसामान्यतया अवजानीहि। एते हि पुराभवे सदसद्विवेकनिदर्शनदर्शनशास्त्र-निष्णातमतयो दार्शनिकपदलाञ्छनाः केचनासन्। तदिह प्राक्तन-संस्कारशेषमशेषतः चपयन्त ईदृशीं दशामधिगताः। तथाहि— दार्शनिका यथा निपीततत्त्व-रसतया कषायितमानसा मानसारतया

स्वान्तसन्ततशान्तरसा अपि बहिरतिकर्कशाः जातपुलकैरन्यै राजन्यमा-
नाश्च प्रथमं वचनकण्टकैस्तुदन्तोऽपि पश्चात् सुधास्वादसहोदरं तत्त्वरस-
मुद्वमन्ति। तथा एतेऽपि नितरामनम्रशिरसः फल्गुनटावत्
बहिरुच्छ्रुष्कवपुषोऽपि सदा सरसान्तराः तीक्ष्णकण्टकास्त्वं शस्कन्द-
कारिणः सदा तुदन्तोऽपि कुशलैराकृष्यमाणाः सुधासारमनोरमा-
नामरसानुद्गिरन्ति। तदन्वयोऽस्य नैते प्राकृतास्तरव इति।

अथानुगम्यमाना सा वनदेवता विचतुराणि पदानि गत्वा पुरतो
वंशस्तोममङ्गुल्या निर्दिश्य मां च सस्मितमाभाषत —"वत्स, य एते
वंशविटपिना विलोक्यन्ते पुरतः; कौतूहलं चेत्, एतेषामपि पूर्ववृत्तं
ते कथयामि। क्षणमिह प्रणिधानं वितीर्यताम्।

य इमे पुरत उच्चावचाकारमा विलोक्यमाना वन्यावनिविशा वंशविट
पिनः कट् क्वणन्तो विराजन्ते, एत इह तर्कतर्कणमनयः परमाणवोऽथ-
शतयः पूर्वजन्मनि तर्कशास्त्रविदो जल्पाभिप्राया आसन्, प्राक्तन
संस्कारसाचिव्यात्तु वर्त्तमानभवेऽपि तं तमेवानुभावमावेदयन्ति।
तथाहि—

यथा खलु वाक्प्रपञ्चमवधिनन्ताकिका वाक्सारतयैवात्मगौरव-
माविष्कुर्वन्तो नान्तःसारसतामपेक्षन्ते, तथैतेऽपि।

यथाहि वाक्चातुर्येण दृढाग्रपथकर्कशकर्कशसूक्ष्ममतयस्तर्क-
रसिकाः साङ्कारैर्महारवैर्गोष्ठीप्रकोष्ठं मुखरयन्तः कुलिशकर्कशै-
स्तर्कशरैर्विपक्षपक्षान् विखण्डयन्तश्च प्रायेण वाक्सारतयैवात्म-
महत्त्वमावेदयन्तो नान्तःसारसतामाद्रियन्ते, सन्निहितनराश्चेतरे
सर्वतः स्थितिमन्तः कृतिमन्तोऽपि तन्निश्वासोपहता इव न वा स्थिति-
मापि प्रतिष्ठामातिष्ठन्ति। तथा—तरुजातिव्यपदेशभाजः खल्वेते-
ऽपि अन्योऽन्यसंघर्षमन्थैः श्रुतिपरुषैर्नीरसै रवैराशामुखं मुखरयन्त-
श्चायससूक्ष्ममुखीभिः शाखासूचीभिर्नितरां सन्निहिततरान् अनिशं

तुदन्तश्च रिक्तगर्भा अपि त्वक्सारतयैव च गौरवमुद्दीपन्तो नान्तःसारगौरवमपेक्षन्ते। न चैषामन्तिके अमरकल्पा दूर्व्वापि स्थितिपदमुपयाति, रम्भास्तम्भोऽपि न पुष्टिमश्नुते। अत एव ब्रवीमि नैते स्थावरसामान्यदृष्ट्या समुपेक्षणीया इति।

अथैवमनुपदमननुभूतचरं प्रमोदभरमन्थरं सुधासारसरसं मधुरमधुरं वाङ्मयमुद्गिरन्ती सा वनदेवता मामग्रहस्तेन समादाय शनैः शनैरग्रतश्चलन्ती पुरतः कण्टकारीगुच्छमदर्शयत् अवदच्च मां स्मितपूर्व्वकम्—

"वत्स, ये चैते कण्टकारीनाम्ना परिचीयमानाः क्षुद्रावयवा नियतमानतशिरसः सूक्ष्मैः कण्टकाग्रैरनतिकठिनां भुवमनिशमालिखन्तः प्रेक्ष्यन्ते, एतानपि हि स्थावरसामान्यतया मावजानीहि, परन्त्वेतान् जन्मान्तरसंवादात् संदेशपत्रसम्पादकानवेहि।

यथा हि सम्पादकाः प्रायेण दुरन्तचिन्ताभारं बाढ़ं मगक्रुवन्त इव सकम्पमानतशिरसं नितरां कदर्थनभिया दूरमपजिगमिषुं वाग्देवतां निरोद्धुकामा इव वाचंयमाः, चक्षुर्लज्जापरिजिहीर्षयेव प्रायेण निमीलितनयनाः, दिवानिशमात्मकर्त्तव्यतया सार्थमपार्थञ्च वाक्यजातमालिखन्ति, व्यथयन्ति च जितकण्टकैः पदप्राचरैः पदे पदे शान्तशीलानपि सामाजिकान्। प्रशान्तचेतसः क्षतिभयेनेव तदुपसर्पणं यत्नतः परिवर्ज्जयन्ति, आपन्नाश्च यत्नेनैतानुपचारेणार्च्चन्ति।

तथा खल्वेतेऽपि सिकताप्राये प्रदेशे भूयसा लब्धप्रसरा मन्दमारुतान्दोलितनम्रशिरसः कण्टकाग्रैरनिशं सैकतभुवमालिखन्ति; कथञ्चिदास्कन्द्यमानाश्च निरागसः पथिकानपि कण्टकैर्निसुदन्ति। हस्तैः परामृश्यमाना अपि स्वकर्त्तव्यतां न विजहति। तदेते जन्मान्तरसहचरीमात्मीयां प्रकृतिं परिपालयन्तः साम्प्रतं स्थावरजन्म यापयन्ति। अतःपरमन्यतस्त्वामुपनयामि, तत्रापि परमरमणीयं कौतुककरञ्च किमपि तत्त्वं ते निवेदयामि ; येन त्वमध्वश्रमं माप्स्य-

खेदस्यापनेष्यसि, इत्युक्त्वा सा वनदेवता भूयोऽपि मामुपादाय अग्रतश्चलितुं प्रवृत्ता।

अथ सा कियन्तं भूभागमतिक्रम्य मामिदं साकूतमाह—"वत्स, य एते मणिमयदीपिकासहस्राणीव कनकोज्ज्वलानि गुञ्जन्मधुकरमालाकलितविग्रहाणि सुरभिसुकुमाराणि कोरकाणि विटपकरेषु समादाय मामग्रतो नीराजयन्त इव चम्पकतरवो विराजन्ते,—एतानपि प्राकृततरुसजातितया मावज्ञासीः। एते खलु पूर्व्वस्मिन् जन्मनि प्रयत्नसम्पादितपुण्योपजातजनुषोऽयत्नोपनतसुखभोगोपचितवपुषो यशःसौरभशालिनो विद्याविलासिनो गुणानुरागिणः श्रीविशेषभूमयो धनिकतनया आसन्। साम्प्रतं कर्म्मविपाकवशेन वृक्षयोनिमापन्नाश्चम्पकनाम्ना प्रतीयन्ते लोकैः। नन्वस्मिन्नपि जन्मनि प्राक्तनधर्म्मान् बलवतः सम्यगनुवर्त्तन्त एव। पश्य तावत्—

तथाविधा धनिका हि स्वभावमधुरैर्देहावयवैरयत्नोपनतविभवविशेषैर्भवनमुल्लासयन्तः, स्वकर्म्मोपाहृतैः सद्गुणसौरभैर्दिग्वलयानि प्रमोदयन्तः अनल्पजल्पकुशलानां कुशलानां पेशलालापैरात्मानं विनोदयन्तः आत्मसर्व्वस्वानि धनरत्नानि गुणग्राहिलेभ्यः समुत्सर्ज्जनेन सफलयन्तः एवमन्यानि वावदातकर्म्माणि निर्व्वर्त्तयन्तो जीवलीलामुद्यापयन्ति। तथा खल्वेतेऽपि स्थावरमूर्त्तयश्चम्पकाः प्रयत्नविशेषेणोपचितवपुषः ( अन्यथा म्रियेरन्। ) स्वभावसुभगैः कुसुमैरुद्यानमुद्योतयन्तः, अनन्यसाधारणैरामोदभरैर्दश दिशः सुरभयन्तः तद्गुणग्राहिलैर्गुञ्जनकुशलैरलिकुलैरनिशमात्मानं विशेषयन्तः, सारसर्व्वस्वानि कुसुमरत्नानि च परं परेभ्यः प्रयच्छन्तश्च प्रारब्धशेषमतिवाहयन्ति। तदेवमन्योऽन्यसामान्यमुन्नयन्तः सन्तोषसन्ततिमनुभवन्ति सन्तः। तत् त्वमपि चैतान् तथैव विजानीहि इत्युक्त्वा विरराम सा।

# दुर्गेशनन्दिनी ।

( पूर्व्वतोऽनुवृत्ता । )

( लेखक.—श्री...... '' )

## एकविंशः परिच्छेदः

### खड्गाखड्गि

विमलामवलोक्य जगत्सिंहः 'कस्यैष कोलाहल' इति पप्रच्छ ।

विमला प्रत्यभाषत—"पाठानानां विजयशब्दघोषा । त्वरितमुपायः कश्चित् प्रतिविधीयताम् । मुहूर्त्तेनैव शत्रुर्गृहमेतत् प्रवेक्ष्यता"ति ।

जगत्सिंहः क्षणं विचिन्त्याह—"किमिदानीं वीरेन्द्रसिंहेन क्रियते ?"

विमला प्रत्यभाषत—"स खलु शत्रुभिर्बन्दीकृतस्तिष्ठति ।" सहसा तिलोत्तमाकण्ठादव्यक्तचीत्कारध्वनिर्निर्गतः । सा पर्य्यङ्के विगत-चेतना पतिता ।

जगत्सिंहो विच्छायवदनो विमलामुवाच—"अवेक्षस्व अवेक्षस्व तिलोत्तमान् ।"

विमला सपदि भाजननिःसृतकमलगन्धजलेन तिलोत्तमामुख-कमलं मृदुसिक्तं विधाय व्याकुलचित्तं तां वीजयामास । शत्रु-कोलाहलः समासन्नतरो बभूव । विमला रुदती अभाषत—"अयमागच्छति, कुमार, किं भविष्यति ?'

जगत्सिंहस्य नयनाभ्यां अग्निस्फुलिङ्गं निर्गतम् । स प्रोवाच—"किमेकाकिना मया कर्त्तुं शक्यते । तव प्रियसख्या रक्षार्थं प्राणान् खलु त्यक्ष्यामि ।" शत्रूणां भीषणकोलाहल, समासन्नतरो बभूव । अस्त्राणां झनत्कारश्च श्रुतः । विमला उच्चैः रुराव 'तिलोत्तमे, कथमधुना त्वं निःसंज्ञा सञ्जाता । कथं वा त्वां रक्षिष्यामी'ति ।

तिलोत्तमा चक्षुरुन्मीलितवती। विमला प्राह—"तिलोत्तमा लब्धसंज्ञा संजाता। कुमार अधुनापि तां रक्ष।"

राजपुत्रः प्रोवाच—"गृहमध्यस्थामेनां को नाम रक्षितुं समर्थः। अधुनापि यदि गृहान्निर्गच्छेत यूयं, तदाहं नो दुर्गाद् बहिर्नेतुं शक्नुयाम्। तिलोत्तमा तु चलितुमसमर्था। विमले, पाठाना इमे सोपानमार्गं प्राप्ताः। मया तु पूर्व्वमेव प्राणास्त्यक्ष्यन्ते एव। किन्तु प्राणैरपि युष्मान् न रक्षितुं समर्थोऽस्मि इत्येव मे परितापः।" विमला निमेषेण तिलोत्तमामुत्सङ्गे कृत्वा उवाच—"आगच्छतु भवान्, मया तु तिलोत्तमा नीयते।" विमला जगत्सिंहश्च दीर्घतर-चङ्क्रमणेन कक्षद्वारं समागतौ। तदैव चत्वारः पाठानसैनिकाः सवेगं धाविताः कक्षद्वारं समागताः। जगत्सिंहः प्रोवाच—"विमले, न तावत् गन्तुं शक्यते। मम पृष्ठतस्तिष्ठ।"

पाठानास्तावत् 'मृगव्य" पुरतः प्राप्य 'आल्ला-ल्लाहो' इति रवेण पिशाचा इव अनृत्यन्। कटितटस्थानि अस्त्राणि झनझनि-तानि। कोलाहले तस्मिन् अनिवृत्ते एव जगत्सिंहस्य खड्गः कस्यचित् पाठानस्य हृदये समूलं समारोपितः। भीषणरवेण स प्राणांस्तत्याज।

पाठानस्य वक्षसः खड्गप्रतिसंहारात् प्रागेव अन्यस्य भल्लः जगत्सिंहस्य ग्रीवादेशे पतितः। पतनात् पूर्व्वमेव विद्युद्वत् हस्तसञ्चालनेन कुमारस्तं भल्लं वामकरेण धृतवान्। तत्क्षणात् तद्भल्लस्यैव प्रतिघातेन भल्लनिक्षेपकारी भूमौ शायितः, शेषौ च निमेषेण जगत्सिंहस्य मस्तकं लक्षीकृत्य खड्गं चालितवन्तौ। जगत्सिंहो निमेषात् पूर्व्वमेव दक्षिणहस्तस्य खड्गस्य आघातेन तयोरेकस्य सखड्गं प्रकोष्ठं छित्वा भूतले निचिक्षेप। अपरस्य तु प्रहारं निवारयितुं न शशाक।

न तावत् स खड्गः शिरसि पतितः। किन्तु जगत्सिंहस्तेन

स्कन्धदेशे खड्गमाहन्त:। आहत: कुमार: वेदनया व्याधशरस्पृष्ट: व्याघ्र इव द्विगुणं प्रचण्ड: सञ्जात:। पाठानस्य पुनराघातोद्योगात् पूर्वमेव कुमारो हस्तदण्डेन दृढमुष्टिबद्धं भीषणमसिं पाठानस्य मस्तके आजघान। शीर्षोषं पाठानमस्तकं द्विधा विभक्तं बभूव। अत्रान्तरे छिन्नहस्त: सैनिक: वामहस्तेन कटितटाच्छुरिकामादाय राजपुत्रस्य शरीरं लक्ष्यीकृतवान्।

भूतलावतीर्ण एव उत्पतनोत्थिते राजकुमारशरीरे छुरिका तस्य विशालबाहुमध्ये विद्धा। कुमारस्तमाघातं सूचिवेधमिव मत्वा तस्य कटिदेशे पर्व्वतपातवत् पदाघातं चकार। यवनश्च दूरं निक्षिप्त:।

सवेगं धावमानेन राजपुत्रेण तस्य शिरश्छेदोद्योगे विहिते एव 'आल्ला-ल्ला हो' शब्देन अगणितपाठानसैनिकास्तस्मिन्कक्षमध्ये प्रविष्टा:। तदा युद्धं तावत् समाप्तमिति ज्ञातं राजकुमारेण।

तस्य अङ्गं रुधिराक्तम्। रुधिरपातेन देह: क्रमश: क्षीणो बभूव। तदानीमपि विगतचेतना तिलोत्तमा विमलाया उत्सङ्गे न्यस्त-मस्तका, विमला च तिलोत्तमां क्रोडे कृत्वा क्रन्दनरता अवर्त्तत। तस्या अपि वसनं शोणितरुधिरेण आर्द्रम्।

कक्ष: पाठानसेनया पूरिताऽभवत्।

अथ राजकुमार: खड्गाग्रविन्यस्तभार: निश्शश्वास। कश्चित् पाठान: प्राह—"दास्या: पुत्र, शस्त्रं परित्यज, त्वां प्राणेन न हनिष्यामि।"

निर्व्वाणोन्मुखे अनले घृताहुतिरिव प्रदत्ता। ज्वलनशिखावत् उत्पत्य कुमारो गर्व्वितस्य पाठानस्य मस्तकं छित्त्वा स्वचरणतले पातयामास। असिञ्च सञ्चालयन् प्रोवाच—"पश्य दुरात्मन्, राजपुत्रा: केन प्रकारेण प्राणांस्त्यजन्ती"ति।

अथ विद्युद्वत् कुमारस्य असिर्विद्योतते स्म। एकाकिनो युद्ध-मसम्भवमिति बुद्ध्वा यथाशक्ति शत्रुनिपातेन प्राणत्याग एव तस्य अभि-लषित: अभवत्। अनेनाभिप्रायेण शत्रुतरङ्गमध्ये पतित: वज्र-

मुष्टिभ्यां खड्गं धृत्वा सञ्चालयामास। आत्मरक्षायाम् अनवहितः केवलं निरन्तरमाजघान च। प्रत्याघातमेव कश्चित् पाठानो धराशायी कश्चिद्वा छिन्नाङ्गो बभूव। राजपुत्रस्य अङ्गे तु समन्तात् वृष्टिधारावत् अस्त्रधाराः वर्षिताः। हस्तः क्रमेण शिथिलो बभूव। आघातबाहुल्येन रुधिरपतनात् बाहुः क्षीणोऽभवत्। मस्तकं विघूर्णितम्। स सर्व्वं शून्यमयं ददर्श। कर्णयोश्च अस्पष्टं कोलाहलः प्रविष्टः। "राजपुत्रः प्राणैर्न वध्यः, जीवित एव पिञ्जराबद्धः कर्त्तव्य इति।" अतःपरं न किमपि कुमारेण श्रुतम्। ओसमान एव एवम् उक्तवान्।

राजपुत्रस्य बाहुयुगलं शिथिलं लम्बितम्। बलहीनायाः मुष्टेः खड्गः सशब्दं भूतले पतितः। विचेतनो राजकुमारः स्वकरनिहतस्य कस्यचित् पाठानस्य मृतदेहोपरि मूर्च्छितः पपात। विंशतिः पाठानसैनिकाः कुमारस्य मुकुटमणिहरणाय धाविताः। ओसमानो वज्रगम्भीरस्वरेण प्रोवाच—"न केनापि राजपुत्रः स्प्रष्टव्यः।" सर्व्वे विरताः।

तदा ओसमानः कश्चिदन्यश्च सैनिकस्तं धृत्वा पर्य्यङ्के शाययामासतुः। जगत्सिंहो मुहूर्त्तपूर्व्वमेव क्षणमपि आशंसत तिलोत्तमां परिणीय कदाचिदपि तस्मिन् पर्य्यङ्के तया सह विराजिष्यति, स एव पर्य्यङ्कस्तस्याधुना मृतुशय्या बभूव।

शायिते जगत्सिंहे ओसमानः सैनिकान् पप्रच्छ—"कुत्र तावत् स्त्रीजनाः ?"

न दृष्टा तेन विमला तिलोत्तमा वा। द्वितीयवारं सेनाप्रवाहे कक्षमध्यं प्रविष्टे विमलया भविष्यत् ज्ञातम्। सा उपायान्तरविरहे तिलोत्तमां समादाय पर्य्यङ्कतले लुक्कायिता इति न केनापि दृष्टम्। ओसमानस्ता अदृष्ट्वा प्राह—"कुत्र तावत् स्त्रीजनाः? यूयम् तावत् दुर्गमध्ये अन्विष्यत। दासी तु अतीव चतुरा। पलायितायां

तस्यां न मे मनो निश्चिन्तं भविष्यति । परं सावधानैर्भवितव्यम्, वीरेन्द्रकन्यां प्रति यथा न कश्चित् अत्याचारो भवेत् ।"

केचित् सैनिका दुर्गस्य अपरदेशम् अन्वेष्टुं गताः । द्वित्राः कक्षमध्ये अनुसन्धानपरा बभूवुः । अपरः कश्चित् अन्यत्र विचित्य प्रदीपमादाय पर्य्यङ्कतले दृष्टिं ददौ । सन्धातव्यस्य दर्शनेन चोवाच— "अत्रैव वर्त्तते ।" ओसमानस्य मुखं हर्षप्रफुल्लं सञ्जातम् । स प्रोवाच— "यूयं निर्गच्छत । कापि चिन्ता न वर्त्तते ।" विमला निर्गत्य तिलोत्तमां बहिरानीय उपावेशयत् । तदा तस्याश्चैतन्यम् पुनरागतम् । साधुना उपवेशनसमर्थाभवत् । मृदु विमलां पप्रच्छ च—"कुत्र वयम् ?"

विमला कर्णे अवदत्- -"नास्ति कापि चिन्ता । अवगुण्ठिता उपविश ।" कृतानुसन्धानो जन ओसमानमाह—"देव, दासेन विचित्य प्राप्तम् ।"

ओसमान उवाच—"त्वं पुरस्कारं प्रार्थयसे ? किं ते नाम ?"

स उवाच—"दासः करिमवक्सो नाम । परमिदानीं तेन नाम्ना नाहं परिचितः । आसम् पूर्व्वमहं मोगलसैनिकः । अतः सर्व्वे मां मोगलसेनापतिरिति वदन्ति ।"

विमला एतच्छ्रवणेन सञ्जातरोमाञ्चा जाता । अभिरामस्वामिनः ज्योतिर्गणना तस्याः स्मरणपथमागता ।

ओसमानः प्रोवाच—"बाढ़म्, काले स्मरिष्यामि ।"

प्रथमखण्डं समाप्तम् ।

---

# आयुर्वेदे वसन्तचर्य्या ।

( लेखकः—श्रीताराचरणआयुर्व्वेदशास्त्री । )

हेमन्ते निचितः श्लेष्मा दिनकृद्भाभिरीरितः ।
कायाग्निं बाधते रोगांस्ततः प्रकुरुते बहून् ॥
तस्माद्वसन्ते कर्म्माणि वमनादीनि कारयेत् ।
गुर्व्वम्लस्निग्धमधुरं दिवास्वप्नञ्च वर्जयेत् ॥
व्यायामोद्वर्त्तनं धूमं कवड़ग्रहमञ्जनम् ।
सुखाम्बुना शौचविधिं शीलयेत् कुसुमागमे ॥
चन्दनागुरुदिग्धाङ्गो यवगोधूमभोजनः ।
शारभं शाशमैणेयं मांसं लावकपिञ्जलम् ॥
भक्षयेन्निगदं सीधुं पिबेन्माध्वीकमेव वा ।”

( चरकः )

अत्र हि मसूरिकारोगप्रायता नियता। तस्मात्तदनुत्पत्त्यर्थमुत्पन्नरोगप्रशमार्थञ्च प्रयतेरन्। तत्र तदनुत्पत्तौ चिकित्सकानुशासनाद्यथासंभवं वमनविरेचने प्रयुञ्जीत। तदसम्भवे च देहबलमात्रादीन्यभिसमीक्ष्य तत्प्रतिषेधकतुलसीपत्रस्वरसः केवलं, रसेन्द्रसारसंग्रहोक्तलक्ष्मीविलासरससहितो वा सप्ताहं सेव्यः। उत्पन्नरोगप्रशमने च बहुशोऽनुभूतं दृष्टफलञ्च चिकित्सासूत्रं समुदाह्रियते। तद्यथा—मसूरिकारोगस्य प्रथमावस्थायां तुलसीपत्रस्वरसयोगेन प्रातर्निशि च लक्ष्मीविलासरसः प्रयोज्यः। मध्याह्ने च मसूरिकाधिकारे चक्रदत्तोक्तनिम्बादिकषायः, पानार्थं प्रदेयः। अनेन मसूरिका ( Small-pox ) रोमान्तिका ( Chicken pox ) च बहिर्निःसरति। ततश्च पाकमागते स्रुते च पानार्थं खदिराष्टकः कषायो देयः। अनेनैव च कषायेण यथासम्भवं परिषिक्तः

कार्य्यः। अथ विगतज्वरे शरीरेऽभ्यङ्गार्थं पिण्डतैलं गुडूचीतैलं वा यथालाभं व्यवस्थेयम्। यत्तु तैलादौ न्वर्ज्ये "ज्वर"मिति चक्रपाणिः, तदाभ्यन्तरिकप्रयोगमभिप्रेत्यैव मन्तव्यम्।

अत्रात्ययिके व्याधावुपद्रवे च कुशलाः प्रतिपत्तिज्ञा भिषज एव प्राणाभिसराः भवन्ति। अत्र च प्रतिजनपदप्रसिद्धं दैवव्यपाश्रय-मपि कर्म्म प्रत्यक्षोक्रियते। तदपि नास्माभिः प्रतिकूलं मन्यते, अन्यत्र कुसंस्कारभ्रान्तिमूलकल्पितगजकल्पापेभ्यः। इदमेकञ्च नः प्रत्यक्षं यदेकं पाल्लविकाः भिषक्कच्छपवराः मसूरिकारोगे आयुर्वेदीयचिकित्सकाना किमपि कारणीयं नाप्नोति भारन्ते। तदनङ्गतमप्रामाणिकञ्च। न खलु तथाविधानां वचसि कदापि श्रद्धा समास्थापनीया। अनुपहतसत्त्वबुद्धिपौरुषपराक्रमैरिहामुत्र च लोके श्रेयस्कामैर्मनुजैः।

## धूलिः।

( लेखक —श्रीदविणाचरणभट्टाचार्य वि, ए )

धूलिरुपद्रवविशेषः इत्येवास्माद्दशाः साधारणाः प्रायेण विगणयन्ति। धूलानां न्यक्काराय राजपथाः प्रतिदिनमार्द्रीक्रियन्ते गृहिणीभिश्च ताः सयत्नं गेहान्नियतं बहिष्क्रियन्ते, परिपूर्णं कृत्स्नं गगनतलं क्षुद्राभिर्धूलिकाभिः सूर्य्यालोकस्थे ताः सविशेषं विस्फुरिताः स्पष्टं प्रतीयन्ते।

लोकास्तु प्रायशोऽवधीरणास्पदं धूलिरिति मन्यन्ते, वदन्ति च ते आभाणकं कञ्चित् "धूलिः परगृहादपो"ति समुपन्यस्तं साम्प्रत-मितस्याः सम्यगुपयोगित्वं विशेषपरीक्षणात् संशयच्छेदिभिर्विज्ञान विद्भिः।

क्षपमानैर्धूलिकणैरनारतं ताण: समुद्भूतं दिनकरकिरणसमुच्चयात् येन च सुविशालं नभोमण्डलं प्रोतिप्रदं प्रतिपदं प्राणवतामुपजायते। अन्तरेण धूलिका: सूर्य्यकिरणा यथान्यायं सर्व्वतोऽन्तरीक्षं प्रसर्पितुं न शक्ता:। विपुलमखण्डं भूमिजातं वस्तुतो नैवाभविष्यत् यदि तु धूलिसमुच्चय: साकल्येन पृथिव्यां नावेत्स्यत।

शिलोच्चयानां चूर्णपेषणेन प्राय: समुत्पत्तिरस्या: पृथिव्यां जाता। सर्व्वं शस्यजातं वातमार्गे दोधूयमानाद्बीजात् समरोहतीति प्राचीनानामर्व्वाचीनानाञ्च संशयगिरा नयितृणाम् अविसंवादि मतम्। लतौषधयस्तु सर्व्वा धूलिकणान् विहाय लोके न जातु रोढ़ुं प्रभवन्ति। प्रत्युत तैर्युक्ता वृक्षाद्या बहुशस्यदा भवन्ति।

अलक्ष्यं वस्तुजातमाभिरेव दृग्गोचरतां याति। सर्व्वथा नीरज: काचभाजनं वाष्पपूरितमपि न सम्यक् तादृक् प्रत्यक्षतां व्रजति। किमपरं गगनस्थितोऽत्रवयोऽपि वर्ज्जयित्वेतान् सूक्ष्मावयवान् धूलिकणान् न कदाचिद्दृष्टिविषयतामाप्नोति। पांशूनामप्यसद्भावे भूमिष्ठं तृणं किं बहुना जगतीगतं सर्व्वं वस्तुजातं नि:शेषेण हिमतामादधीत।

## शिवचन्द्रचरितम्।

( पूर्व्वतोऽनुवृत्तम् )

( लेखक:—मदीय: कश्चन शिष्य:। )

तस्य महात्मनस्तान्त्रिकदीक्षापि सर्व्वथा लोकविलक्षणं प्रकारं दधाना निरपद्यत। स हि कदाचित् स्वप्ने पर्य्यालोकयामास, यथा तस्य कनिष्ठतातो जयरामन्यायभूषण: तमिष्टमन्त्रं कञ्चन समुपदिशतीति, तदनन्तरदिवसे पितु: समीपे सर्व्वमिदं महात्मा शिवचन्द्र: प्रका-

श्रावयामास स्वप्नवृत्तम्, स्वप्ने कथं कीदृशो मन्त्रो लब्ध इति। तेन च पिता विद्याभूषणः परं विस्मयमासाद्य स्वप्नलब्धे मन्त्रे स्वीयकुलानुरूपतादिकञ्च पर्य्यालोच्य सर्व्वं वृत्तमनुजस्य कथयामास। न्यायभूषणोऽपि सुविस्मितः शुभं समयं निरूप्य तमेव मन्त्रं बालकस्य शिवचन्द्रस्य परमोपास्यतया प्रादात्। शिवचन्द्रोऽपि परेणैकाग्र्येण तस्य मन्त्रस्य सम्यगुपासनां प्रतिदिनमेव प्रवर्त्तयन् परमेण तेजसा सम्भृतो महतीमुन्नतिमात्मनः सम्पादयन् लोके वरणीयचारित्रो निखिलविद्योपदेशकवरिष्ठो विशिष्टपदवीलाभेन काञ्चन लोकविलक्षणतामेव समाश्रित्य सकलस्वजनानां सकलनागराणां सकलदेशवासिनाञ्च आशास्थानमभूत्, शिव इव शिवगताधिष्ठानतामासाद्य सद्य एव प्रचारयामास महतस्तेजसो निदर्शनमिति।

*अल्पतमे वयस्येव महात्मा शिवचन्द्रः पण्डितप्रवरश्रीयुक्तपञ्चाननतर्करत्नस्य भगिनीं असितकरां नाम परिणीतवान्। प्रागेवोक्तमस्माभिः यत् शिवचन्द्रो नाम शिवचतुर्द्दशीदिने जन्म परिगृहीतवानिति गुरवस्तं शिवचन्द्रेति केचिच्च शिवरामेति नाम्ना सम्बोधयामासुः। स्वयं शिवचन्द्रस्तु स्वनाम शिवचन्द्रेत्येव प्रतिपादितवान् परिचयप्रदानाद्यवसरेषु।

शिवचन्द्रः शैशवे सुपद्मव्याकरणं तदानीं चतुष्पाठीषु पाठ्यतया प्रचलितं काव्यग्रन्थममरकोषं कतिपयान् काव्यग्रन्थांश्च सम्यगधीत्य लब्धव्युत्पत्तिविशेषः पृथिवीतनपण्डितमण्डने राखालदासन्याय रत्नं अध्यापकतया स्वीकृत्य न्यायशास्त्रमध्येतुमारेभे। वाशिष्ठकुलचन्द्रमाः शिवचन्द्रः वाशिष्ठकुलवृहस्पतिमेव गुरुमित्य तदानीं प्रचलितान् प्रसिद्धन्यायग्रन्थान् कतिपयमात्रानेव समधीत्य लोकविलक्षणां व्युत्पत्तिमासाद्य पण्डितमण्डलीषु महान्तं विस्मयं सञ्जनयामास। नासीत्तदा वर्त्तमानसमय इव प्रथमद्वितीयचरमपरीक्षाभिः शिष्याणां विद्यायाः परीक्षणं। सभासु विचारणादिभिरेव विज्ञाय

तदीयं पाण्डित्यातिरेकं पण्डितमण्डलो तं महात्मानं सार्व्वभौमेत्युपाधिना समलञ्चकार। तस्य पाण्डित्यमिव चारित्रमपि लोकातीतगुणगरिम्णा प्रसिद्धिमगात्। प्रकृष्टजननिदर्शने वर्त्तमानः सार्व्वभौमो न केवलं पण्डितानां परं चारित्रवतामपि प्रीतिमनन्तामुत्पाद्य गुरुजनानाममोतमल्लोषविशेषान् समुदपादयत्।

अत्र प्रसङ्गतो वाशिष्ठकुलस्य किमपि वृत्तमनुसन्धोयते—यथा, भट्टपल्ली नाम सुनिरं पण्डितानामधिष्ठानेन सुविदितैव नगरी। अत्र हि वाशिष्ठकुलं प्रायेण वर्षाणां शतत्रयं यावत् वसतिं कुरुते। अतत्यानां वाशिष्ठकुलधराणां पूर्व्वपुरुषो नारायणठाकुरो महाराजप्रतापादित्याधिष्ठितयशोहरप्रदेशात् एत्य धुलियापुरग्रामे समवसत्। अस्य पूर्व्वपुरुषो गङ्गाधरशर्म्मा नाम कान्यकुब्जदेशात् ७जगन्नाथदेवदर्शनार्थं वङ्गेषु समाजगाम। तदा च सन्ततया विष्णुपुरसन्निहिते श्यामपुकुरनामके ग्रामे समुपागत्य स्थितिञ्चकार। ततेत्र कश्चन नारायणशर्म्मा नाम महाराजप्रतापादित्यस्याभ्युदयदशायां धुलियापुरग्राममध्यतिष्ठत्। अद्यापि श्यामपुकुरग्रामे विद्यन्ते बहवो वाशिष्ठाः, ये गङ्गाधरवंशजत्वमात्मनां प्रकाश्य स्मारयन्ति भट्टपल्लीयवाशिष्ठैरेकतामात्मनाम्। महात्मा नारायणशर्म्मा तपःसिद्धः पुरुषः समभवत्। श्रूयते, स हि महात्मा तपःप्रभावेण प्रत्यहं प्रातः धुलियापुरग्रामात् आकाशमवलम्ब्य भट्टपल्लीसन्निहितं भागीरथीतीरमुपागत्य निर्व्वाहितस्नानतर्पणादिनित्यकृत्यः पुनरप्याकाशे तथैव स्वगृहं प्रत्यागमत्। भट्टपल्लीभूपतिवंशधराणां आलदारनाम्ना विदितानां पूर्व्वपुरुषः कश्चन नर्तिको ब्राह्मण आसीत्। सोऽपि प्रत्यहं गङ्गातीरे स्नानाह्निककर्म्मसम्पादनाय प्रातः समुपस्थितः परिलक्षयामास आमतो नारायणेन यथा आगतं यथा च प्रतिगतमिति, ततस्तेन सह सञ्जातपरिचयस्तस्य पाण्डित्येन सदाचारेण च मुग्धः स भूमिपतिः तदीयशिष्यत्वं परिगृह्य ततो मन्त्रदीक्षां जग्राह ; प्रददे च तस्मै तत्र

वासाय भूयसोभूमीः, ततः प्रभृतेव नारायणस्य तदीयसन्ततीनाञ्च तत्र भट्टपल्ल्यां वसतिः प्रारब्धा। अद्य यावदत्र भट्टपल्ल्यां नारायण-ठाकुरात् प्रभृति गणनया द्वादश पुरुषाः समवतिष्ठन्ते। पुरा तावदस्य वाशिष्ठकुलस्य निष्ठया सदाचारादिभिश्च सर्व्वत्र महती प्रतिष्ठा बभूव वङ्गेषु सर्व्वत्रैव शिष्याः सुविस्तृता प्रभूवन्। परतश्च यदा निष्ठया सदाचारेण च सह पाण्डित्यविशेषाः सम्मिलिता आसन्, तदा वङ्गेषु नास्ति तथा स्थानं, यत्रास्य वंशस्य शिष्यादिसम्पद्धा प्रतिष्ठा न पदमकरोत्, यत्र वा नायं वंशः प्रशस्तिमगात्। एतद्वंशीयेषु वक्ष्यमाणपण्डितनामानि सुतरामुल्लेखयोग्यतां दधते, तद्यथा—वीरेश्वरन्यायालङ्कारः, रामगोपालविद्यावागीशः, रामकान्तसार्व्वभौमः, हलधरतर्कचूड़ामणिः, यदुनाथसार्व्वभौमः, गोविन्दविद्यावागीशः, हरिरामतर्कवागीशः, रघुमणिविद्याभूषणः, दयालतर्करत्नः, राखाल-दासन्यायरत्नः, ताराचरणतर्करत्नः, शिवचन्द्रसार्व्वभौमः, मृत्युञ्जय-शिरोमणिः, उमाकान्तन्यायपञ्चाननः, जयरामन्यायभूषणः, मधुसूदन-स्मृतिरत्नः, हृषीकेशशास्त्री, नन्दलालन्यायरत्नः, राममयविद्याभूषणः, चन्द्रनाथविद्यारत्नः, चन्द्रनाथचूड़ामणिः, दिगम्बरतर्कसिद्धान्तः, प्रमथनाथतर्कभूषणः, प्रियनाथतत्त्वरत्नः, रामकृष्णन्यायतर्कतीर्थ-श्चेति। अपरे च कतिपये सन्ति समुल्लेखयोग्यनामानः, ते विशेष-जिज्ञासुभिरनुसन्धेयाः। एतेषु केचन नैयायिकाः, केचन स्मार्त्ताः, केचित् पौराणिकाः, केचन तान्त्रिकाः, केचिच्च ज्योतिषिका आसन्। ईदृशे वाशिष्ठकुले ईदृशे च पण्डितकुलाधिष्ठाने परिगृहीतजन्मा शिवचन्द्रः स्वल्पमात्रे वयस्येव महामहोपाध्यायपदभाजो नैयायिक-कुलमुकुटमणेः राखालदासन्यायरत्नमहोदयात् न्यायाध्ययनं समाप्य भट्टपल्ल्यां निजपितृभवने चतुष्पाठीं संस्थाप्य दारिद्र्येणातिपीड़ितोऽपि शिष्याणां भोजनादिदानेनाध्यापनं प्रवर्त्तयामास, नातिचिरञ्च सर्व्वत्र प्रशान्तिमासादयामास। ( क्रमशः। )

# परिषत्सन्देशः ।

विदितमस्तु पारिषदानां यथा परिषदः मार्गशीर्षस्य तथा पौषस्य मासिकाधिवेशने यथाकालं निष्पन्ने इति । आदौ तावत् मार्गशीर्ष-मासिकाधिवेशने श्रीमतः न्यायदर्शनायुर्व्वेदादिशास्त्रपारङ्गमस्य योगीन्द्रनाथतर्कव्याकरणदर्शनतीर्थायुर्व्वेदाचार्य्यमहाशयस्य सभा-पतित्वेन परिषदाचार्य्यश्रीकालीपदतर्काचार्येण न्यायशास्त्रीय-"जातिबाधकविचार"-शीर्षकः प्रबन्धोऽनुवाचितः । तस्य प्रबन्धस्य न्यायशास्त्रविषयमात्रशरणतया साधारणानामगम्यतया अंशमात्रेणैव प्रबन्धकारेण वाचनं कृतम् । परतः पत्रिकायां प्रकाशेन विद्वांसः तद्गौरवमनुलक्षयिष्यन्ति ।

तावताप्यंशेन पठितं प्रबन्धमधिकृत्य पण्डितप्रवर-श्रीयुक्तकृष्ण-प्रसन्नपञ्चतीर्थप्रभृतिभिः समालोचना कृता, अथामितसारसहितेन मितेन वचसा सभापतिभिः कृते सभाभिभाषणे प्रायेण रात्रेर्नवम-घटिकायां सभाभङ्गो जातः ।

अथ पौषे मासि महामहोपाध्यायानां श्रीमतां कालीप्रसन्न-भट्टाचार्य्यविद्यारत्नमहाशयानां सभापतित्वेन प्रवृत्ते सभाधिवेशने नानाविषयविज्ञेन पण्डितवरश्रीयुक्तदुर्गामोहनभट्टाचार्य्य बि ए, काव्यसांख्यपुराणतीर्थमहोदयेन "गोत्रप्रवरविषयको" गभीरार्थसार्था-वेदको निबन्धः पठितः ।

प्रबन्धस्य विषयाणां सत्यपि महति गौरवे नैपुण्येन श्रीमता निबन्धकृता साधितः सर्व्वविषयप्रकाशस्तथा, यथा संस्कृतनामसमात्र-श्राविणोऽपि गोत्रप्रवरविशेषज्ञा भवितुमर्हन्ति । नानाशास्त्र-पर्य्यालोचनया नैपुण्येन यद्येतादृशाः प्रबन्धाः प्रबन्धनिर्म्माणकुशलैः सम्पाद्येरन्, तदैव प्रमोदो विदुषाम् स्यात् । अथ प्रबन्ध-

शास्त्रिमहाशयेन प्रबन्धस्य समालोचनाप्रसङ्गतो नानाशास्त्रकथाः समवतारिताः, अथ सभापतेरभिभाषणानन्तरं प्रायो रात्रेर्नवमघटिकायां सभाभङ्गो जातः ।

## विविधकथा ।

**प्राच्यसम्मेलनम् ।**—विगतमाघस्य चतुर्द्दशदिवसात् दिवसपञ्चकं प्राच्यसम्मेलनस्य द्वितीयमधिवेशनं कलिकाताविश्वविद्यालयभवने निर्व्वाधं निरपद्यत। फ्रान्स- (France) देशवास्तव्यः संस्कृतचैनादिविविधभाषानिपुणो अध्यापकप्रवरः श्रीयुक्तडक्टर-सिल्भें लेभि महोदयः (Dr. Sylvain Levi, Ph. D.) सभापतिपदमलमकार्षीत् ।

तत्र प्रथमदिवसे अधिवेशनाध्यक्षेण श्रीमता वङ्गाधिपेन लर्ड रोणाल्ड्से महोदयेन (Lord Ronaldshay) उद्बोधिते अधिवेशने स्वागतकारिसमितिसभापतिना स्यार श्रीयुक्त-आशुतोषमुखोपाध्यायसरस्वतीमहाशयेन कयाचित् मधुरमधुरया विविधतथ्यभूयिष्ठया भारतपुरातत्त्वालोचकपरिचयपूर्णया वक्तृतया सदस्या नानादेशात् समुपागताः प्रतिनिधिवर्य्याश्च समभिनन्दिताः। तदनन्तरं सभासमिति सभापतिवरण-पूर्व्वाधिवेशनविवरणपाठादिके अधिवेशनाद्यकृत्ये सभापतिपादानां प्रोत्साहयितृकं मनोहरम् अभिभाषणं वाचितम्। विविधदेशेषु विततं भारतस्य प्राचीनां गौरववार्त्तामालोच्य प्रवर्त्तमानाञ्चावलोक्य भारतीयानां दुर्गतिं खेद एवाधिगतस्तेन, यतो नेदानीं प्रायेण भारतीयास्तेषां प्राचीनां गौरवकथां सम्यक्तयावगच्छन्ति समालोचयन्ति वा, संस्कृतसाहित्यस्य विविधदेशेषु विस्तृतिं कतिपयान् आलोचकानन्तरा प्रायेण न कोऽपि जानन्ति ज्ञातमीहन्ते वा ।

द्वितीयदिवसात् विभागीयाधिवेशनानि समभूवन्। इदानीं विभागाः विभागाधिपतीनां च नामानि कीर्त्त्यन्ते।

| विभागाः | विभागाधिपतयः |
|---|---|
| वेदः | डक्टर एस, के, वेलभेलकर एम, ए,पि, एच, डि |
| बौद्धः | अनागारिकधम्मपालः। |
| इराणीयान् | जे, जे, मोडि, |
| शब्दतत्त्वम् | डक्टर आइ, जे, एस्, तारापुरवाला बि, ए, पि एच्, डि। |
| संस्कृतप्राकृतसाहित्यम् | महामहोपाध्यायश्रीयुक्तहरप्रसादशास्त्री एम, ए। |
| आरबीयपारस्यसाहित्यम् | जि, एस, राान्किन् |
| दर्शनं धर्म्मश्च | श्रीयुक्तकुप्पुस्वामी शास्त्री एम, ए। |
| इतिहासः | श्रीयुक्त आर, नरसिंहाचारः |
| समाजधर्म्मेतिहासः | श्रीयेत्तडक्टरआर, श्यामशास्त्री पि एच, डि। |
| प्राचीनभूगोलः | के, पि, जयस्वालः एम्, ए। |
| विज्ञानम् | रायवाहादुर श्रीयुक्त योगेशचन्द्ररायः विद्यानिधिः एम्, ए। |
| प्रत्नतत्त्वम् | डक्टर डि, वि, स्पुनार बि-ए, पि, एच् डि। |
| जातितत्त्वम् | राओवाहादुर एल्, के, अनन्तकृष्णआयार। लि-ए। |

अधिवेशनकृत्यजातं आङ्गलभाषयैव निष्पादितम्। केवलम् संस्कृतसाहित्यपरिषत्सहकारिसभापतिश्रीमदनन्तकृष्णशास्त्रिमहाशयेन "गीतायाम् अद्वैतवाद" इति, श्रीरामचन्द्रचालुमहाशयेन "रामजातकम्" इति च संस्कृतभाषया, केनचिद् बौद्धभिक्षुणा च पालिभाषया प्रबन्ध एक इति प्रबन्धत्रयम् अनुवाचितम्।

पञ्चमदिवसे साधारणेऽधिवेशने निर्द्धारितं यद् वर्षद्वयात् परं

मद्रदेशविश्वविद्यालयकर्त्तृपक्षीयाणां आम्नानानुसारतो मद्रदेशे एवाधिवेशनं भवितेति। सभापतिनिर्व्वाचितैः कैश्चिद् विबुधवर्य्यैर्वर्त्तमानप्राच्यसाहित्यालोचनावस्थामालोचयद्भिर्निर्दिष्टं यत् साहित्यालोचनेन साकं यथा प्रत्नतत्त्वभूगोलादीनामपि आलोचनं यथा प्रत्येकं च्छात्रेण कर्त्तव्यं भवेत्, तथा पठनरीतिः प्रवर्त्तयिता। यत इदानीं एम्, ए परीक्षायां समुत्तीर्णा अपि च्छात्राः प्रत्नतत्त्वादिविषयेषु सम्पूर्णमज्ञा एव भवन्ति।

एतदपि निर्द्धारितं 'राजकीयगवर्णमेण्टं प्रार्थ्यतां यथा इतः प्रभृति प्रतिष्ठापनं संस्कृतशिक्षार्थं इयोरोपदेशीयगमनेच्छुभ्यो भारतीयच्छात्रेभ्यो वृत्तिद्वयं प्रदीयते इति।

आगामिनोऽधिवेशनात् मुद्रालावजनिभागाऽपि कश्चिद्भविता।

एशियाममितिसङ्घेन ( Federation of Asiatic Societies ) मिलित्वा यथास्य सम्मेलनस्य कार्य्यं सम्पद्येत, तथा सद्सम्पादकसमापि आविदनीयम् इत्यपि निरधारि।

प्रत्नितागतवर्त्तनपुरस्सरं रंगाचारियस्य गुरुसंस्करणं यदुपक्रान्तं विगताधिवेशननिर्द्देशानुसारतः तस्योपक्रमस्य कार्य्यविवरणमपि पठितम्।

एतदनन्तरं सभापतिमहोदयेन साधुवादकीर्त्तनात् परम अवसितम अधिवेशनकृत्यमिति शम्।

---

## शिवकुमारभवनम् ।

- विगते श्रीश्रीभगवत्सरस्वतीपूजनदिवसे अपराह्नद्वितीयघटिकायां कलिकातान्तिकवैठकखानारोडप्रतिष्ठिते शिवकुमारभवने प्राचीनानां कतिपयसुप्रसिद्धपण्डितानां तैलचित्रप्रतिष्ठाकुद्दिश्य महती पण्डितपरिषत् सम्मिलिताभूत्। तत्र वाराणसीवास्तव्यः सुप्रसिद्धः पण्डितवरो गोविन्दनारायणमिश्रमहोदयः सभापतिपदमलङ्कारोत्। महामहोपाध्यायः श्रीयुक्तलक्ष्मणशास्त्रिमहोदयः

आलेख्यगतानां काकारामशास्त्रि राजारामशास्त्रि-बालशास्त्रि-वासुदेवशास्त्रि-रामकृष्णशास्त्रि-राममिश्रशास्त्रि-राखालदासन्यायरत्न-कैलाशचन्द्रशिरोमणि-गङ्गाधरशास्त्रि-सुब्रह्मण्यशास्त्रि-वृन्दावनजो-वेदान्ति-दामोदरशास्त्रि पादानां संक्षेपेण परिचयं प्रकाशितवान्। संस्कृतसाहित्यपरिषदः सहकारिसभापतिः वेदान्तविशारद-श्रीअनन्तकृष्णशास्त्रि-श्रीअतुलकृष्णगोस्वामिविद्याभूषणमहोदयप्रभृतयः सरलमधुराभिर्वाग्भिः सभ्यानां मनो रञ्जयामासुः। राजोपाधिकस्य श्रीयुक्तदामोदरदासवर्म्मणः प्रस्तावानुसारेण प्रतिवर्षं माघपञ्चम्याम् ईदृशं सम्मेलनं प्राचीनपण्डितचित्रप्रतिष्ठापनञ्च कर्त्तव्यतया निर्द्धारितमभूत्।

अस्य कृत्यस्य प्रधानसमुद्योगी महामहोपाध्यायः श्रीलक्ष्मणशास्त्री प्रधानार्थसाहाय्यकारी श्रीदामोदरदासखान्नामहोदयश्च सर्व्वथा धन्यवादमर्हत इति शम्।

**विचित्रो वटतरुः।**—बांकुड़ागते गोकुलनगराभिधे ग्रामे वटतरुविषयकं विचित्रं किञ्चित् समापतितं वृत्तम्। प्रायेण हायन-युगलात् प्राक् प्रभञ्जनवेगेन भूतलम् आपादितः कश्चिद्वटतरुः नृपतिना छिन्नपरिगृहीतशाखादिकः काण्डमात्रेणावशिष्यमाण आसीज्जनानां लोचनगोचरीभूतः। विगतश्रावणसंक्रान्तिवासरे मध्याह्ने भीमरवेण भूमिमपहाय समुत्थितः स तरुवर इदानीं नवीन-पत्रादिभिः शोभमानः सुतरां विस्मयमादधाति सर्वेषां जनानाम्। वैज्ञानिकवर्य्याः कथम् अयं व्याख्यास्यते व्यापार इति जिज्ञासमाना सन्तिष्ठामहे वयम्।

**व्याघ्रगुहायां नरशिशुः।**—मेदिनीपुरमयूरभञ्जसन्निहिते कुत्रचित् प्रदेशे व्याघ्राकुलिते गुहाविशेषे नरकन्यकाद्वयं साम्प्रत-मधिगतं तत्रत्यैः। एका एकादशवर्षीया, अपरा च सार्द्धद्विवर्षीया। उभे एव चतुष्पदा इव जन्तवः हस्ताभ्यां पादाभ्याञ्च चलतः, व्याघ्रवत्

शब्द' कुरुतश्च। मानवालयमानीते ते दुग्धाम्नादिकं भक्षयित्वैव रोगेणाभिभूते। मांसमेव तयोः स्वाभाविक' भोज्यम्। तयोः कनीयसी साम्प्रतम् कालकवलिता, ज्यायसी तु जनानां कुतूहलम् आतन्वतीदानीमपि जीवति।

**पुत्रवलिः।**—नरवलिरीतिः साम्प्रतम् जगतो विलोपमेव समासादितेति सर्वैः ज्ञायते। वार्त्ता पुनरियमिदानीमस्माभिरधिगता यथा मयमनसिंहवास्तव्यः कश्चित् धीवरो बलिरूपेण नवमे वर्षे स्थितम् स्वमेवात्मज' कालिकायै दत्तवानिति। तत् विपुलायामस्यां पृथिव्यां केचन केचन राजन्ते येऽधुनापि पुरातनीमेव रीतिं साग्रहमुररीकुर्वन्ति।

## समालोचनम्।

**श्राद्धतत्त्व।**—( श्राद्धतत्त्वम् )। वङ्गभाषामयी श्राद्धतत्त्वनिर्देशप्रयोजना पुस्तिका। राजोपाधिकश्रीयुतशशिशेखरेश्वरराय-महोदयेन सङ्कलिता, वाराणसीगताखिलभारतवर्षीयब्राह्मण-समाजरक्षामहासभापक्षतः श्रीमता ताराचरणशर्म्मणा प्राकाश्यं नीता। मूल्यम् आनकत्रयम्।

प्रबन्धोऽयं हिन्दुसमाजमुखपत्रे त्रिशूलाभिधे पूर्वं प्रकाशं गतः। सनातनधर्म्मावलम्बिनां श्राद्धादिकृत्ये क्रमशोऽनास्थावलोकनात् साधारणजनानां पाठोपयोगितया विलिखितोऽयम्। अत्र च शास्त्रीय-तत्त्वानामालोचनद्वारेण (१) किन्तावत् श्राद्धम् (२) कदाप्रभृति प्रवर्त्तते ब्राह्मणधर्म्मे श्राद्धविधिः (३) कदाप्रभृति कथं वैदेशिकैराचर्य्यते श्राद्धानुरूपकृत्यजातम् (४) कस्तावत् वर्त्तते सम्बन्धो ब्राह्मण-

धर्मस्य श्राद्धस्य च (५) कतिविधश्राद्धविषयो वेदादिषूपनिबद्धाः (६ ७) किन्तावत् ऐहिकपारलौकिकफलश्रवणम् (८) कया रीत्या परस्थानां पितृभिः सम्बन्धः श्राद्धेन दार्ढ्यमियात् (९) कस्तावत् प्रत्यवायोऽकरणे श्राद्धस्य (१०) कथम् उपलभ्यते लोकदृष्ट्या श्राद्धस्य प्रयोजनम् एतस्य प्रश्नदशकस्य सदुत्तरजातमत्रोपनिबद्धम्। सर्वथा सुखपाठेयं पुस्तिका।

## हरिद्वारकनखलस्थरामकृष्णमिशनसेवाश्रमः।

अधिगताऽस्माभिरस्याश्रमस्य विंशवर्षीया कार्यविवरणपुस्तिका। चिकित्सागारनिशाशिक्षालयधर्मशाला पाठमन्दिरप्रतिष्ठापनादिभि-रशेषैरुपायैरखिलानां मानवानां समुन्नतिसाधनमेवास्य लक्ष्यतया प्रतीयते। गृहादीनां निर्माणार्थं विविधव्ययनिर्वाहार्थं च मुद्राणाम् अपेक्ष्यन्ते सहस्राणि। आशास्महे दानशौण्डा महात्मान ईदृशानां सदुद्देश्यानां सिद्धये सर्वात्मना यतिष्यन्त इति।

**चित्तरवेदशास्त्रपाठशाला**।—प्रेषितमस्मत्सविधे पाठशालाया अस्या अष्टाविंशवर्षीयकार्यविवरणम्। दृश्यते, सनातनीं रीतिमनुसृत्य, अत्र विविधानां शास्त्राणाम् अध्यापनं प्रचलति। प्रतिमासं प्रतिष्ठायनार्द्धं प्रतिवत्सरञ्च अन्तेवासिनां गृह्यन्ते परीक्षाः, कृतकृत्याश्च तासु पारितोषिकप्रदानेन समुत्साह्यन्ते सुतराम्। आस्ते च तत्रैव ग्रन्थमन्दिरं यत्र स्थितानां ग्रन्थानां संख्या समालोचना-विषयीभूते वर्षे आसीत् शताधिकसहस्रमात्रम्। आशंसामहे यदियं प्रतिवर्षं उत्कर्षविशेषं पुष्णन्ती विराजतामिति।

᳚# संस्कृतसाहित्यपरिषत् ।

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४३ शकीय—चैत्रे, ४र्थं वर्षस्य १२श संख्या ।

## श्रीमन्तं युवराजं प्रति स्वस्तिवादः । *

( लेखकः—श्रीआशुतोषशास्त्री एम, ए । )

आ शैलस्य हिमालयस्य शिखराद्गङ्गाम्बुधौताश्मनः
शुभ्राम्लावणसिन्धुफेनपटलैरा सेतुबन्धाद्भुवि ।
तोषो वृद्धिमुपैतु ते हृदि विशां कीर्त्तिर्दिशां मण्डले
षट् ते सन्धिमुखा गुणाः सफलतां यान्तु चिरं सर्व्वतः ॥१॥
शान्तिः कान्तिसखी विभातु नितरामिंलण्डभूपालभू-
स्त्रीन् लोकान् विजयस्व सद्गुणगणैः श्लाघ्यैः सतां सर्व्वदा ।
शन्ते शाश्वतमस्तु चेतसि दृढं धर्म्मे निबद्धा मति-
र्म्मा ते राष्ट्रजनस्य चित्तमभिभूदप्रीतिरा संस्तुतेः ॥ २ ॥
कलिकतानगरीह गरीयसीं स्वदयिताङ्गजसङ्गमुदङ्कता ।
नृपज संस्कृतशास्त्रविदालयाननु गृहाण महाञ्जलिमर्हणाम् ॥३
( वङ्गीयब्राह्मणपण्डितानाम् पक्षमधिकृत्य । )

* अत्र प्रथमद्वितीयश्लोकयोराद्याक्षराणां यथाक्रमं पाठेन "आशुतोषशास्त्री शर्म्मा" इति नाम लभेत ।

जलधिवारि यथा वड़वानलो ज्वलतु ते भुवि वीरपराक्रमः।
तुहिनशैल इवात्र विराजतु स्वविषये तव शान्तिभरश्चिरम् ॥ १ ॥
जनमनो रमयन् विविधैर्गुणैर्विमलयन् यशसा च जगत्त्रयम्।
भुवनमण्डलमण्डनतां गतः सुभग जीव कुमार समाः शतम् ॥ २ ॥
अकिञ्चनानां विप्राणामुपदान्याऽस्ति नाशिषः।
विवर्द्धस्व शुभाशीर्भिस्तेषां सम्राट्सुत प्रभो ॥ ३ ॥

## काव्यकथा।

(लेखक — श्रीचिन्ताहरणचक्रवर्त्ती)

### मत्तविलासम्।

प्रहसनमेतत् श्रीमता गणपतिशास्त्रिमहाशयेन सम्पाद्य अनन्तशयनग्रन्थावल्यां प्राकाश्यं नीतम्। तच्चैतत् पल्लवकुलचूड़ामणिभूतस्य श्रीसिंहविष्णुवर्म्मणः आत्मजस्य श्रीमहेन्द्रविक्रमवर्म्मभूपतेः कृतिरिति स्थापनातः प्रतीयते। स चायं नरनाथः खृष्टीयसप्तशतकस्याद्यभागे जनिपरिग्रहेण वसुन्धरामन्वर्थां व्यदधौ इति मनीषिणां मतम्। तेन च श्रीकण्ठपदलाञ्छनस्य महाकविभवभूतेः प्राक्तनः प्रथितयशसो बाणभट्टस्य च समकालीनोऽयम् आसीदिति प्रतिभाति।

सुरासेवनमत्तस्य कस्यचित् कापालिकस्य कपालनाशवृत्तान्तमुपजीव्यास्योपनिबद्धं वस्तु। तच्चास्माभिः समासतो वक्ष्यते। अथ कदाचित् काञ्चीपुरे सत्यसोमनामा कोऽपि कपाली देवसोमाभिधया स्वया दयितयानुगतः कुत्रचित् सुरापणे सतोषं सुरां निपीय उपदंशभूतं

शुष्कमांसं कपाले निधाय मदमत्ततया कपालम् मोहादगृहीत्वैव सामोदं प्रियासहचरो भिक्षार्थं चलितः। अत्रान्तरे च अन्तर्गतमांस-लोलुपेन कुक्कुरेण कपालं गृहीत्वा पलायितम्। अथ भिक्षाग्रहणवेलायां कपालमनासाद्य आपणे निपुणमन्विष्यान्विष्यापि अनधिगतवान् सन्मित्रवियोगविधुर इव क्षोभपरीतचेतास्तदन्वेषणार्थं सर्वं नगरं परिभ्रमितुमनाः प्रस्थितः। राजमार्गे च रक्तपटसम्वृताङ्गं कमपि शाक्यभिक्षुं त्वरितम् अतिक्रामन्तमालोक्य स्वभावजातबौद्धविरोधः संशयकलुषान्तःकरणस्तमेव कपालचौरं निश्चित्य तमुपसृत्य "धूर्त्त, दीयतां कपाल" मित्युवाच शाक्यभिक्षुणाञ्च बहुशो निन्दामुद्घोषया-माम। 'कपालं मया न गृहीतम्' इत्युक्तवन्तं शाक्यभिक्षुं बौद्धानां शून्यवादित्वं सूचयित्वा एवम् अधिचिक्षेप। युक्तमेतत्

दृष्टानि वस्तूनि महीसमुद्र-
महीधरादीनि महान्ति मोहात्।
अपह्नुवानस्य सुतः कथं त्वम्
अल्पं न निह्नोतुमलं कपालम्॥

( बुद्धस्यापि चौरत्वं तेनोक्तं कपालिना यथा, )

वेदान्तेभ्यो गृहीत्वार्थान् यो महाभारताद्।
विप्राणां मिषतामेव कृतवानर्थसञ्चयम्॥

अत्रावसरे तस्य शाक्यभिक्षोः पूर्ववैरिणः पाशुपतनाम्नः कापालि-कस्य समागमात् मद्यानाधिकबलः सत्यसोमः बलात्कारेणैव शाक्यभिक्षोर्भिक्षाभाण्डं स्वं कपालमिति कृत्वा गृहीतवान्। अस्य भाण्डस्य कपालादवर्णान्तरे प्रतिपादिते कपालिना बौद्धधर्ममेवा-धिक्षिप्य प्रोक्तम् सत्यमभ्युपगतं तत्र वर्णान्तरकरणे नैपुण्यम्। पश्य,—

यदेतदासीत् प्रथमं स्वभावतो
मृणालभङ्गच्छविचोरमम्बरम्।

ननु त्वया नीतमचिन्त्यकर्म्मणा
तदेव बालारुणरागताम्रताम् ॥ इति

ततो न्यायार्थमधिकरणं प्रयातुमुद्यते शाक्यभिक्षौ उन्मत्तकाख्योऽपरः श्वमुखात् सत्यसोमकपालमाच्छिद्य तत्रोपस्थितः। तस्य सकाशाच्च तद्गृहीतं सत्यसोमेन, स्वं स्वं स्थानञ्च प्रस्थिता हृष्टचेतसः सर्वे इत्येतदवसानं प्रहसनवस्तु।

विविधादेव निमित्तात् प्रहसनमेतदस्मभ्यं रोचते, प्रयोजनीयताञ्चास्य समुपलभामहे। प्रथमतस्तावत्, रचनापाटवं, सरलसरला चास्य भाषा सर्वेषामेव रसिकजनानां चेतः समावर्जयति। हास्यरसप्रकटनेऽपि कवयितुर्नैपुण्यं सुतरामेव वरीयस्ति। प्रबन्धदैर्घ्यभिया तस्य रचनातः केचन केचन अल्पे अंशा समुद्ध्रियन्ते।

कपाली—प्रिये!

पेया सुरा प्रियतमामुखमीक्षितव्यम्
ग्राह्यः स्वभावललितो विकृतश्च वेशः।
येनेदमीदृशमदृश्यत मोक्षवर्त्म
दीर्घायुरस्तु भगवान् स पिनाकपाणिः॥

देवसोमा—भअवं। ण तहा भणिदव्वं। अर्हन्तो मोक्खमग्गं अण्णहा वस्सअन्ति।

कपाली—भद्रे! ते खलु मिथ्यादृष्टयः। कुतः—

कार्य्यस्य निःसंशयमात्महेतोः
सरूपतां हेतुभिरभ्युपेत्य।
दुःखस्य कार्य्यं सुखमामनन्तः
स्वेनैव वाक्येन हता वराकाः॥

कपाली—प्रिये! पश्य पश्य। एष सुरापणो यज्ञवाट-विभूतिमनुकरोति। अत्र हि ध्वज-स्तम्भो यूपः, सुरा सोमः, शौण्डा ऋत्विजः, चषकाश्चमसाः, मत्तवचनानि यजूंषि, गीतानि सामानि, सुरापणाधिपतिर्यजमानः।" अपरत्र,

कपाली—एषा भगवती वारुणी चषकेषु आवर्जिता प्रत्यादेशो मण्डनानाम्, अनुनयः प्रणयकुपितानां, पराक्रमो यौवनस्य, जीवितं विभ्रमस्य। किं बहुना,

मिथ्या त्रिलोचनविलोचनपावकेन
भस्मीकृतां मदनमूर्त्तिमुदाहरन्ति।
स्नेहात्मिका तदभितापवशाद्विलीना
सेयं प्रिये! मदयति प्रसभं मनांसि॥

पुस्तकेऽत्र तात्कालिकी देशस्यावस्थापि सम्यगेव स्फुटीभूता। बौद्धधर्म्मस्तदानीं समुन्नतशीर्षदेशाद्भ्रष्टः, विलासवासितेभ्यो भिक्षु-सङ्घेभ्यो नैव रोचते स्म पूर्व्वमिव कठोरब्रह्मचर्य्यम्। बकहृदयस्ते भिक्षुवर्गा मुण्डितमुण्डा अपि अमुण्डितचित्ताः पापरतयः। तथाचात्र शाक्यभिक्षुः सत्यसोमेन पथि दृष्टो देवसोमारूपाकृष्टलोचनः (आत्म-गतम्) "अहो ललितरूपा उपासिका" इत्याह। सुरापानाय देवसो-मयानुरुद्धश्चात्मगतम् "अहो, सुखोपनतोऽभ्युदयः। एतावान् दोषः महाजनो दृश्यती"ति नितरां दुःखित एव सञ्जातः। प्रथमतश्च तेन स्पष्टमेव दुःखं प्रकटीकृतं यत् परमकारुणिकेन भगवता तथागतेन प्रासादेषु वासः, सुविहितशय्येषु पर्य्यङ्केषु शयनं, पूर्व्वाह्णे भोजनम्। अपराह्णे सुरसानि पानकानि, पञ्चसुगन्धोपहितं ताम्बूलं, श्लक्ष्णवसन-परिधानमित्यैतैरुपदेशैर्भिक्षुसङ्घस्यानुग्रहं कुर्वता किन्नु खलु स्त्रीपरि-ग्रहः सुरापानविधानञ्च न दृष्टम्? अथवा कथं सर्वज्ञ एतन्न पश्यति? अवश्यमेहि दुष्टवृद्धस्थविरैर्निरुत्साहैरस्माकं तरुणजनानां मत्सरेण पिटकपुस्तकेषु स्त्रीसुरापानविधानानि परामृष्टानि इति तर्कयामि। कुत्र नु खलु अविनष्टमूलपाठं समासादयेयम्। ततः सम्पूर्णं बुद्धवचनं लोके प्रकाशयन् सङ्घोपकारं करिष्यामि। इति।

यदस्य परदाररतिरप्यासीत्तत्र
तां चौरिकस्य दासीं मम दयितां चीवरान्तदर्शितया।

आकर्षति काकण्या बहुशो गां ग्रासमुष्टेरिव ॥"

इति पाशुपतोक्तिः प्रमाणम्।

सनातनधर्म्मदयापि तदानीं गौरवकरो अभूज्जनानाम्। वैदिक-कर्म्मकदम्बानाम् आदरो बौद्धधर्म्मप्रभावात् पूर्व्वमेव विलोपमितः। पुनरपि तेषां समादरे कुत्रापि कुत्रापि समालोक्यमानेऽपि कापालिकादिभिः पञ्चमकारामन्त्रैरेवाभूत् परिपूरिता भारतभूमिरित्यपि सत्यसोमादीनां चरित्रालोचनया स्फुटं प्रतिभाति। एते च विषयाः एतत्कवेः परं भवभूतिनापि स्वकीये मालतीमाधवे प्रपञ्चिता यथायथमेव।

विभिन्नधर्म्मावलम्बिनो यत् परस्परदोषप्रख्यापने सुतरामेव कृतयत्नाः समभूवन्, तत्रापि सत्यसोमवचनानि पूर्वमुद्धृतानि प्रकृष्टं प्रमाणम्। तत्रास शाक्यभिक्षुणा किमपि स्पष्टं नोक्तं सनातनधर्म्ममधिक्षिप्य, तत्र बौद्धधर्म्मस्य प्रतिदिनम् उपचीयमाना अवनतिरेव कारणतया प्रतिभाति। "अयि अयमेकान्तवासी दुष्टकापालिकः" इत्यादिवचनं तस्य कापालिकेषु सहजां घृणामेव व्यनक्ति।

परं सत्यपि एवम्विधे परस्परविरोधे राजकुलस्य कस्मिन् अपि पक्षपातं नालोकयामः,कथमन्यथा एवं परिभूतोऽपि शाक्यभिक्षुर्न्यायार्थमधिकरणमेव शरणं गन्तुकामः स्यात्! बौद्धपक्षपातित्वे राजकुलस्य कोऽप्येवं शाक्यभिक्षुं परिभवितुं न प्रभवेत्, सनातनधर्म्मपक्षपातित्वे च न शाक्यभिक्षुस्तन्न्यायमभिलषेत्। एतादृशस्यापक्षपात एव भारतीयनरपतिकुलानां वैशिष्ट्यमिति विस्मयमतुलमातनोति वैदेशिकानां प्रतिपदम्।

किन्तु सर्वथा अपक्षपातित्वे स्फुटीभूतेऽपि धनिनामेवाधिकरणे न्यायलाभाशा इत्यभूत् केषाञ्चित् केषाञ्चित् मतिः। तथाच अधिकरणं गन्तुमनसं शाक्यभिक्षुमुपलभ्य देवसोमा भीतभीता भगवन् यद्येवं नमः कापालाय। एष पुनरनेकविहारभोगसमधिगत-वित्त-

सञ्चयी यथाकाममधिकरणकारुणिकानां मुखानि पूरयितुं पारयति। अस्माकं पुनरस्थि-चर्म्मभूतिमात्रविभवानां दरिद्रकापालिकानां कोऽत्र विभवोऽधिकरणं प्रवेष्टुम् इति व्याजहार।

इदानीमिव किं तदानीं अधिकरणशुल्कादीनां ( Court-fees ) प्रचलनम् आसीत्, तत्र नैव किञ्चिद्वक्तुं प्रभवामः। परम् अभिज्ञानां नाविद्यतैतादृशं किमपि भयम्। तथा च पाशुपतेन तदानीमेवोक्तम्—

"अजिह्मैः सारगुरुभिः स्थितैः स्वच्छैः सुजन्मभिः। तैर्धर्म्मो धार्य्यते स्तम्भैः प्रासाद इव साधुभिः॥" इति कपालिना चोक्तम् "कृतमनेन। कुतश्चिदपि न्याय्यवृत्तेर्भयं नास्ती"ति। सर्वथा रमणीयमेतद्वस्त्विति असंशयमेव वक्तुं पार्य्यते सर्व्वैरिति शम।

## रत्नपरीक्षा।

( लेखकः—श्रीउपेन्द्रमोहनकाव्यतीर्थः। )

( पूर्व्वतोऽनुवृत्ता )

स्वमाहात्म्यपरिरक्षितस्वर्गलोकस्य भ्रातुः सकाशात् वसुधामुद्धर्त्तुकामः समुद्यतेभ्यो विधात्रेह वसुन्धरायां भवेदनुप्रेषितः? कथमन्यथास्य एतादृशं तेजोग्रम्। श्रूयते वज्रं किल कस्यचिदस्थ्ना निर्म्मितं, एषोऽपि हीरकः कस्यचिदस्थ्न एव लब्धजन्म दृढ़यत्यस्माकं सन्देहम्। यातु इदानीं प्रकृतानुसरणं कर्त्तव्यम्। तस्योत्पत्तिप्रकारस्तु यत्र यत्र बलासुरस्य अस्थीनि पेतुः, तान्येव स्थानानि हीरकाकरतामधिजग्मुः। तानि हिमालयः, हस्ती, सौराष्ट्राः पौण्ड्रः, कालिङ्गः, कोषलः, वेन्वातटं, सौवीर इत्यष्टौ। तथाच 'तस्यास्थिलेशो निपपात येषु, भुवः प्रदेशेषु कथञ्चिदेव। वज्राणि वज्रायुधनिर्ज्जिगीषो-

भवन्ति नानाकृतिमन्ति तेषु॥ हैममातङ्गसौराष्ट्राः पौण्ड्रकालिङ्ग-कोषलाः वेन्वातटाः ससौवीराः वज्रस्याष्टाविहाकराः॥ तत्र हिमालयजाताः हीरकाः ताम्रवर्णाः गजोया ईषत्स्वर्णप्रभाः सौराष्ट्रीयाः ताम्रवर्णाः, पौण्ड्रोद्भवाः श्यामवर्णाः, कलिङ्गदेशजाः शुद्धस्वर्णवर्णाः, कोषले पीताभाः, वेन्वातटे शशिशुभ्राः, सौवीरवन्ति गृहपालितछागलवत् स्निग्धश्यामवर्णा मेघवर्णा वा। तथाच—"आताम्रा हिमशैलजाश्च शशिभा वेणवातटोयाः स्मृताः, सौवीरे तुषिताजमेष सदृशास्ताम्राश्च सौराष्ट्रजाः। कालिङ्गाः कनकावदातरुचिराः पीतप्रभाः कोषले, श्यामाः पुण्ड्रभवा मतङ्गविषये नात्यन्तपीतप्रभाः॥" इति। एतेषाञ्च प्रतिव्यक्तिभिन्नभिन्नवर्णतया तत्वर्णैर्वैरपि परिग्रहः सूचितः। तथाच हरितसितपीतपिङ्गश्यामाताम्राः स्वभावतो-रुचिराः" यथाक्रमं "हरिवरुणशक्रहुतवहपितृपतिमरुतां स्वकाः वर्णाः।" एते अपि हीरकाः ब्राह्मणादिवर्णविभागेन चतुरो भेदानवगाहन्ते। स च विभागः वर्णानां सितनीलादिभेदेन निपुणैरुन्नेयः। ये हीरका यज्जातीयाः ते तज्जातीयैरेव धार्य्याः। तत्र विप्राः शङ्ख-कुमुदधवलान् विप्रवर्णानेव हीरकान् धारयेयुः, क्षत्रियाः पिङ्गलवर्णान् क्षत्रियजातीयान्, वैश्याः कोमलकदलीदलरुचीन् वैश्यवर्णान् शूद्रजातीयान्, शूद्राः निर्म्मलकरवालसमानवर्णान् शूद्रजातीयान् धारयेयुः। तथाच—विप्रस्य शङ्खकुमुदस्फटिकावदातः स्यात् क्षत्रियस्य शशवभ्रुविलोचनाभः। वैश्यस्य कान्तकदलीदलसन्निकाशः, शूद्रस्य धौत-करवालसमानदीप्तिः॥" एषु च हीरकेषु राजानो द्विविधमेव धारयेयुः, यो हि जवाविद्रुमवत् रक्तवर्णः, यश्च वा हरिद्रारससमानकान्तिः। एतादृशौ च हीरकौ राजभिरेव धार्य्यौ न तु अन्यैश्च कैश्चित्। तौ च राज्ञां परमोपकाराय कल्प्येते। उक्तञ्च—"द्वौ रक्तवर्णौ पृथिवीपतीनां सद्भिः प्रतिष्ठौ न तु सार्व्वजन्यौ। यः स्याज्जपाविद्रुमभङ्गशोणो यो वा हरिद्रारससन्निकाशः॥ इति। अस्य च हीरकस्य काचगोमेदक-स्फटिक-

वैदूर्य्यादिभिः प्रतिरूपं कर्त्तुमर्हन्ति कुशलाः, तस्माद्विशुद्धहीरकमभी-प्सवो यथा प्रतारिताः न स्युस्तथा तैर्य्यतितव्यम्, ते च विशुद्धहीरक-क्रयकाले इत्थं परीक्ष्य पश्चाद्धीरकं क्रेतुं यतेरन्, यथा हीरकं सावधानेन मण्यादीन् आयसप्रभृतींश्च कर्त्तितुमलम्भवति, किन्तु स केनापि न कर्त्तितुं शक्यते विना हीरकजातीयेन। अपिच सर्व्वरत्नानाम् अधिकभारवत्त्वम् अधिकमूल्यकारणं गौरवाधायकञ्च, हीरकेषु च तस्य वैपरीत्यं चिन्तयेत्, हीरकस्तु यथा यथा लघुर्भविष्यति, तथा तथैव तस्य मूल्यमधिकं भविष्यति, तेन च पारिशुद्धं सम्यग्ज्ञातं भविष्यति। अपिच सर्व्वरत्नानामियमेका समहती परीक्षा सावसरवशादत्र हीरक-परीक्षावसरे एव प्रदर्श्यते, यत् स्वजातीयमणीनां केनचित् वस्त्रादिना प्रतिबद्धानाम् स्वस्वकान्तयो नोर्द्धं गन्तुमुत्सहन्त इति तथाचोक्तम्— "अयसा पुष्परागेण तथा गोमेदकेन च। वैदूर्य्यस्फटिकाभ्याञ्च काचै-श्चापि पृथग्विधैः॥ प्रतिरूपाणि कुर्व्वन्ति वज्रस्य कुशला जनाः। परीक्षा तेषु कर्त्तव्या विद्वद्भिः स्वपरीक्षकैः॥ क्षारोल्लेखनशालाभि-स्तेषां कार्य्यं परीक्षणम्। पृथिव्यां यानि रत्नानि ये चान्ये लोहधातवः॥ सर्व्वाणि विलिखेत् वज्रं तच्च तैर्न विलिख्यते। गुरुता सर्व्वरत्नानां गौरवाधायकारणम्॥ वज्रे तान् वैपरीत्येन सूरयः परिचक्षते॥ जाति-रजातिं विलिखन्ति वज्रकुरुविन्दाः। वज्रं व्वज्रं विलिखति नान्येन लिख्यते वज्रम्॥ वज्राणि मुक्तामणयो ये च केचन जातयः। न तेषां प्रतिबद्धानां भा भवत्यूर्द्ध्वगामिनी॥ एषाञ्च स्त्रीपुंनपुंसकभेदेन फलतार-तम्यं स्त्रीपुंनपुंसकधार्य्यत्वञ्चोपजायते। तत्र ये तावदत्यन्तवृहन्तो हीरकाः अतितेजसो वर्त्तुलाकाराश्च भवन्ति, ते पुंजातीयाः, ये च रेखा-विन्दुयुक्ताः षट्कोणाश्च भवन्ति, ते स्त्रीजातीयाः, ये तु त्रिकोणाः सुदीर्घाश्च भवन्ति, ते नपुंसकाः। "यथा सुवृत्ताः कणसम्पूर्णास्तेजोयुक्ता वृहत्तराः। पुरुषास्ते समाख्याता रेखाविन्दुविवर्ज्जिताः॥ रेखाविन्दु-समायुक्ता षडस्रास्ते स्त्रियः स्मृताः। (षडस्राः षट्कोणाः)

त्रिकोणाश्च सुदीर्घाश्च ते विज्ञेया नपुंसकाः ॥" तत्र पुरुषजातीयानां रसवर्द्धनकारित्वं गुणाः, स्त्रीजातीयानां स्त्रीशरीरकान्तिविधायकत्वं, नपुंसकानां वीर्य्याभावः, सत्त्ववर्ज्जितत्वं अकामत्वञ्च। प्रमाणं यथा "तेऽपि सुरः पुरुषाः श्रेष्ठाः रसवर्द्धनकारिणः। स्त्रियः कुर्व्वन्ति कायस्य कान्तिं स्त्रीणां सुखप्रदाः॥ नपुंसकास्त्ववीर्य्याः स्युरकामाः सत्त्ववर्ज्जिताः॥" इति। तत्र ये हीरका यज्जातीयाः ते च तज्जातीयेभ्य एव मानवेभ्यः प्रतिपादनीयाः,यथा स्त्रीभ्यः स्त्रीजातीयकाः, क्लीबेभ्यश्च क्लीबजातीयका इत्यादि। पुरुषजातीयास्तु अविचारेण सर्व्वविधेभ्य एव मानवेभ्यः सर्व्वदैव प्रतिपादनीयाः। तथाच—"स्त्रियः स्त्रीभ्यः प्रदातव्याः, क्लीबं क्लीबे प्रयोजयेत्। सर्व्वेभ्यः सर्व्वदा देयाः पुरुषा वीर्य्यवर्द्धनाः॥" इति। एतेनेत्यमनुमीयते यत् पुरुषजातीया एव हीरकाः इतरजातीयेभ्यः परमुत्कृष्टा अतिवीर्य्यशालिनश्च, तेषां सर्व्वदा सर्व्वत्र तुल्यकार्य्यकारित्वात्। इतरास्तु क्रमविषयत्वात् तस्माद्धीनाः अल्पवीर्य्याश्च भवन्ति इति। हीरकं सम्यक् संशोध्यैव धारयेत्। अशुद्धो हीरकः पार्श्वव्यथाकुष्ठरोगादीन् जनयति। संशुद्धश्च आयुः, पुष्टिः बलं इत्यादीनुत्पादयति। यदुक्तं "अशुद्धं कुरुते वज्रं कुष्ठं पार्श्वव्यथां तथा। पाण्डुतां पङ्गुरत्वञ्च तस्मात् संशोध्य धारयेत्॥" मारितस्य वजस्य गुणाः—"आयुः पुष्टिं बलं वीर्य्यं वर्णं सौख्यं करोति च। सेवितं सर्व्वरोगघ्नं मृतं वज्रं न संशयः॥" एषु च भस्माभाविशिष्टः रेखादिसमायुक्तः वर्त्तुलाकारः नीलप्रभासमन्वितः स्नेहशून्यो विन्दुयुक्तः सन्त्रस्तश्च हीरकः कुलक्षणान्वितः इति यत्नेन तं परिवर्ज्जयेत्। तथाच—"भस्माभं काकपादञ्च रेखाक्रान्तन्तु वर्त्तुलम्। आधारमलिनं विन्दुसन्त्रासे स्फुटितं तथा॥ नीलाभं चिपिटं रूक्षं तद्वज्रं दोषलं त्यजेत्॥" अपिच एतद्दोषरहितो धारयुक्तश्च हीरको यदि आकारेण क्षुद्रोऽपि स्यात्, तथापि स परां श्रियमातनोति, जनानां सौभाग्यञ्च सुतरामाविष्करोति। किन्तु तस्य तीक्ष्णधारत्वमत्रातिशयेन प्रयो-

जनीयम् । तीक्ष्णधारत्वाभावे अतिवृहदपि वज्रं दोषादिपरित्यक्तमपि न नाहशमुपकरोति एवं तच्चे दतिलघु चतुःपार्श्वे च समं स्यात्, तथाच "अत्यर्थं लघु वर्णतश्च गुणवत् पार्श्वेषु सम्यक्समं, रेखाविन्दुकलङ्क-काकपदकत्रासादिभिर्वर्ज्जितम् । लोकेऽस्मिन् परमाणुमात्रमपि यत् वज्रं क्वचित् दृश्यते, तस्मिन् देवसमाश्रयो ह्यवितथः तीक्ष्णाग्रधारं यदि ॥" इति हीरकपरीक्षा । इदानीं मुक्ता परीक्ष्यते । सा च बलनाम्नः पूर्व्वं-देवस्य दन्ता यत्र यत्र निपेतुस्तस्मात्तस्मात् समुत्पन्ना । ते च दन्ता मातङ्गसर्पमत्स्यशूकराणां शिरांसि शङ्खसेव्रवंशशुक्तीनामुदरे प्रविष्टा इति तानि तानि स्थानानि मुक्ताकरतामापन्नानि । तथाच—"मातङ्गो-रगमीनपोत्रिशिरसस्त्वक्सारशङ्खाम्बुभृच्छुक्तीनामुदराच्च मौक्तिकमणिः स्पष्टं भवत्यष्टधा ।" अस्याः "मोति" इति हिन्दीभाषा । यद्यपि अष्टावेव मुक्तानामाकरभूमयः, तथापीदानीं केवलम् शुक्त्युद्भवैवा-स्माभिरुपलच्यते मुक्ता । प्राचुर्य्यञ्च तथाविधानामेव शुक्त्युद्भवाना-मेव मुक्तानाम् आपणादिषु परिलक्ष्यते । अस्या मूल्यमपि स्वल्पतयैव निर्द्दिष्टम्, आयतनञ्च शुक्त्युद्भवमुक्तायाः अतीव क्षुद्रम् । अस्याः वर्णः शुभ्रः, मतङ्गजप्रभवा मुक्ता पीतवर्णा स्यात् । नच सर्व्वेषामेव गजानां कुम्भकूटे भवति मौक्तिकोत्पत्तिः, यदुक्तं "मौक्तिकं न गजे गजे" इत्यादि । विशुद्धवंश्यानामतिवृद्धानामेव गजानां कुम्भकूटे भवति मुक्तोत्पत्तिः । सा च गजकुम्भोत्पन्ना मुक्ता सुवृत्ता प्रभा-विहीना च भवति । तथाच—"मतङ्गजा ये तु विशुद्धवंश्यास्ते मौक्ति-कानां प्रभवाः प्रदिष्टाः । उत्पद्यते मौक्तिकमेषु वृत्तमापीतवर्णं प्रभया विहीनम् ॥" तत्र गजानां ब्राह्मणादिवर्णविभागात् एता अपि चातु-र्व्विध्यमङ्गीकुर्व्वन्ति । तत्र ब्राह्मणं मौक्तिकं पीतशुक्लवर्णं भवेत्, क्षत्रियं पीतरक्तवर्णम्, वैश्यं पीतश्यामम्, शूद्रं पीतनीलवर्णमिति । तथाच—"ब्राह्मणं पीतशुक्लन्तु क्षत्रियं पीतरक्तकम् । पीतश्यामन्तु वैश्यं स्यात् शूद्रं स्यात् पीतनीलकम् ॥" इति । एषु च मेघप्रभवैव मुक्ता पर-

सुतृष्टा कुक्कुटडिम्बाकारा च भवति। सा च मुक्ता मेघात् स्खलित्वा भूमिमस्पृशन्त्येव देवैः स्वर्गाद्ध्रियते, अतः सा न भूमिमासादयति, न वा मानवचक्षुर्गोचरतामापद्यते। देवभोग्येषु वस्तुषु यदि मानवानामधिकारः स्यात्, तदेदं मर्त्यभवनमपि स्वर्गसौभाग्यमावहेत्। सा हि सूर्य्याचन्द्रमसोरपि तेजः परिभवति। सूर्य्यवदतितेजस्कत्वात् सा चक्षुषोरुपहन्ति तेजांसीति दुःखविभवेव भवति मानवानाम्। न तस्याश्चतूरत्नाकरवलयिता सार्थकनामा वसुन्धरापि मूल्यायोप कल्पत इत्येव मन्ये, सा भूमिं नाभ्येति। यदि कश्चिन्मानवस्तां भागेयनाभुपैति, तदा अचिरेणैव कालेन सः असपत्नमृद्धं राज्यमर्ज्जयन् स्वाराड़िव अप्रतिहतशासनः सुखेन कालमतिवाहयति। इयञ्च मुक्ता स्वावस्थानेन शतयोजनवर्त्तिनीमपि सर्व्वामापदं लीलया दूरीकरोति। "धाराधरेषु जायेत मौक्तिकं जलविन्दुभिः। दुर्लभं तन्मनुष्याणां देवैस्तद्ध्रियतेऽम्बरात्॥ कुक्कुटाण्डसमं वृत्तं मौक्तिकं निविड़ं गुरु। वनजं भानुमङ्काशं देवयोग्यमसानुषम्॥" इति युक्तिकल्पतरौ। गारुड़ेऽपि—"नाभ्येति मेघप्रभवं धरित्रीं वियद्गतं तद्विबुधा हरन्ति। अर्च्चिः प्रभानावृतदिग्विभागमादित्यवद्दुःख-विभाव्यविम्बम्॥ तेजस्तिरष्कृत्य हुताशनेन्दुनक्षत्रताराग्रहसम्भवञ्च। दिवा यथा दीप्तिकरं तथैव तमोवगाढास्वपि तन्निशासु॥ विचित्ररत्नद्युतिचारुतोयचतुःसमुद्रा भवनाभिरामा। मूल्यं न वा स्यादिति निश्चयो मे, कृत्स्ना मही तस्य सुवर्णपूर्णा। हीनोऽपि यस्तल्लभते कथञ्चित् विपाकयोगान्महतः शुभस्य। सपत्नहीनः पृथिवीं समग्रां भुनक्ति तत्तिष्ठति यावदेव॥ न केवलं तत् शुभकृन्नृपस्य, भागैः प्रजानामपि जन्म तस्य। तद्योजनानां परितः शतस्य सर्व्वाननर्थान् विमुखीकरोति॥" इति। हीरकप्रस्तावे तमेवाधिकमूल्यत्वेन विनिर्द्दिश्य पुनरिमामपि सर्व्वाधिकमूल्यां कल्पयता न हि कश्चिद्विरोधः शङ्कनीयः, यतस्तत्प्रस्तावे यः कश्चित् क्षुद्रो महान् वा हीरकः पद्मरागादि-

तुलनया महामूल्य इत्युक्तः। न हि तत्र तमाकरादिपर्य्यालोचनया सर्व्वाधिकमूल्यं कल्पयामः, किन्तु निकृष्टोऽपि यथा हीरक एव मूल्यवान्, न तथा पद्मरागादिरिति व्याख्याय पश्चात् मेघसम्भूता मुक्ता गुणवती अतिमहार्घा चेत्युक्ते न कश्चिद् विरोधावसरः। भिन्नविषयमधिकृत्य तथास्माभिरुक्तत्वात्। सा चेयं मेघसम्भूता मुक्ता मेघानां जलज्योतिर्म्मरुदुद्भवत्वेन त्रैविध्यात् त्रिविधा भवति। तत्राधिकजले मेघे या मुक्ता जायते, सा सुतरां कोमला विशेषेण कान्तिमती निर्म्मला च भवति, या तु ज्योतिःप्रभवा, सा सर्व्वथा दुर्निरीक्षा सुवृत्ता कान्तिमती च, मरुत्सम्भूता च कोमला कान्तिमती विमला लघुभारा च भवतीति। तथा च जलज्योतिर्मरुज्जानां मेघानां त्रिविधं भवेत्। जलाधिकेऽधिकं स्वच्छं कोमलं गुरुकान्तिमत्॥ ज्योतिष्कं कान्तिमद्वृत्तं दुर्निरीक्ष्यं रविप्रभम्। कान्तिमत् वृत्तं मारुतं विमलं लघु कोमलं इति। वराहदंष्ट्राप्रभवा मुक्ता तद्दन्तसदृशी भवति। ईदृशश्च मुक्ताफलप्रसवो वराहः पृथिव्यां क्वचिद्देशे कदाचिदेव भवति, न तु सर्व्वत्र। शूकरजाता शूकरवत् कोमला, शूकरदंष्ट्राच्छविश्च मुक्ता विशेषेण दुर्लभा, पुण्यभाजस्तु केचन स्वपुण्यपरिपाकवशादेवासादयन्ति। तथाच—"क्रोलजं कोलसदृशं तद्दंष्ट्रासदृशच्छवि। अलभ्यं मनुजै रम्यं मौक्तिकं पुण्यवर्ज्जितैः॥ या तु शङ्खाज्जायते, सा करकावदतिकान्तिः कपोतडिम्बपरिमिता च। तदुक्त"—वर्षोपलसमं दीप्रा पाञ्चजन्यकुलोद्भवं। कपोताण्डप्रमाणं तदतिकान्तिमनोहरम्॥" इति। न हि सर्व्वस्मादेव शङ्खाद् भवति मौक्तिकोत्पत्तिः, ये हि भगवतः कृष्णस्य धनुराघातेन यमलोकं नीताः, पीतवर्णाश्च सम्यक् सञ्जाता भीतिवशात्, तेषामेव वंशसम्भूताः कम्बवो मौक्तिकाकरतां प्रयान्ति, तथाच—"ये कम्बवः शार्ङ्गमुखावमर्षपीतस्य शङ्खप्रभवस्य गोत्रे। स्यान्मौक्तिकानामिह तेषु जन्म" ००००० इति। या च मीनादुत्पद्यते, मुक्ता सा हि महस्यदंष्ट्रपीठवदानीलकठिना।

गुञ्जाफलाकृतिश्च काचित् आताम्रप्रभा सुवृत्ता लघुमात्रा च भवति। तथाच—"गुञ्जाफलकायस्थौल्यं मौक्तिकं तिमिजं लघु। पाटला-पुष्पमङ्गाग्रमल्पकान्ति सुवर्त्तुलम्॥" मीनानां वातपित्तकफद्वन्द्व-सन्निपातजत्वेन तज्जा मुक्तापि सप्तभेदा भवति। तत्र वाताधिक्यात् मीनात् लघुशोणवर्णञ्च मौक्तिकं भवति। पित्तप्रधानादीषत्पीतं मृदु च कफबहुलात् गुरु शुक्लवर्णञ्च भवति। द्वन्द्वात् वातपित्तात् मृदु सुतरां लघु च, वातश्लेष्मप्रधानात् स्थूलं, पित्तश्लेष्मप्रधानात् स्वच्छं एतेषां सर्व्वेषामेव समाहारेण सर्व्वगुणदोषकान्तिमत् मौक्तिकं जायते। तत्र एकदोषप्रचुरात् मत्स्यात् यज्जायते तन्मौक्तिकं शुभफलप्रदं, यच्च सप्तदोषविशिष्टात् मत्स्यात् समुत्पद्यते, तदपि शुभदायकम्, अतो द्वन्द्वयुक्तात् मत्स्यादुत्पन्ना मुक्ता सर्व्वथा हेया इति स्थितम्। यथा वातपित्तकफद्वन्द्वसन्निपातप्रभेदतः। सप्तप्रकृतयो मीने सप्तधा तेन मौक्तिकम्॥" अत्र द्वन्द्वपदेन वातपित्त-वातश्लेष्म पित्तश्लेष्माणस्त्रयः संगृहीताः। "लघिष्ठमरुणं वातात् आपीतं मृदुपित्ततः। शुक्लं गुरुकफोद्रेकात् वातपित्तात् मृदुर्लघुः॥ वातश्लेष्मभवं स्थूलं पित्तश्लेष्मजमच्छकम्। सर्व्वलिङ्गप्रयोगेण सान्निपातिकमुच्यते॥ एकजाः शुभदाः प्रोक्तास्तथा वै सान्निपातिकाः॥" इति। या तु भुजङ्ग-प्रभवा सा नीलवर्णा शुद्धनिस्त्रिंशधाराद्युतिः उज्ज्वलवर्णा वर्त्तुला-कारा च भवति। यथा "भौजङ्गमं नीलविशुद्धवर्णं सर्व्वं भवेत् प्रोज्ज्वलवर्णशोभम्। नितान्तधौतप्रतिकल्प्यमाननिस्त्रिंशधारा-समवर्णशोभम्॥" ताश्च चतुर्विधाः काचित् च द्रवदरीफलाकारा, काचित् भूम्यामलकी सदृशा, काचित् वदरीफलसन्निकाशा, काचिच्च गुञ्जाफलप्रमाणा भवति। यदुक्तं "शृगालकोलामलकोलगुञ्जाफल-प्रमाणास्तु चतुर्विधास्ते॥" अस्य च इयमेका महती परीक्षा, यथा सुरक्षितं मौक्तिकं विधाय तद्यदि प्रासादशृङ्गोपरि समारोपयेत्, तदा अन्तरीक्षं महता तूर्य्यघोषेण दुन्दुभिनिनादेन च तन्मौक्तिकमाद्रियते।

तथाच "शुभे मुहूर्त्ते प्रयतैः प्रयत्नात्, रक्षाविधानं सुमहद्विधाय । हर्म्म्योपविष्टं क्रियते यदा तत्, तदामहद्दुन्दुभितूर्य्यघोषैर्घनैर्घनै राद्रियतेऽन्तरीक्षम् ॥" इति । यस्य च मानवस्य एतादृशं भौजङ्गमं मौक्तिकमस्ति, तस्य राक्षसभौजङ्गमादिभयमेकपद एव निरस्यति । यदुक्तं "न तं भुजङ्गा न तु जातुधाना न राक्षसा नापि च दुष्ट लोकाः । हिंसन्ति यस्याहिशिरःसमुत्थं मुक्ताफलं तिष्ठति कोष-मध्ये ॥" इति । यत्तु भेकहिमालयादिषु मौक्तिकं दृश्यते, तत्सर्व्वं भौजङ्गममणितुल्यमित्यतो विस्तरेण नाभिधीयते, तदुक्तं ।—"भेकादि-ष्वपि जायन्ते मणयो ये क्वचित् क्वचित् । भौजङ्गममणेस्तुल्यास्ते विज्ञेया बुधोत्तमैः ॥" यदिदं सर्व्वविधमुक्तानां संक्षेपेण वर्णविभाग-कथनं, यथा "जीमूते शुचिरूपञ्च गजे पाटलभास्वरं । मत्स्ये श्वेतञ्च निस्तोमं फणीन्द्रे नीलभास्वरं ॥ हरिच्छ्वेतं तथा वंशे पीतश्वेतञ्च शूकरे शङ्खशुक्त्युद्भवं श्वेतं मुक्तारत्नमनुत्तमम् ॥" इति अस्य दोषा मत्स्याक्षप्रभृतयः । तदुक्तं "मीनलोचनसङ्काशो दृश्यते मौक्तिके तु यः मत्स्याक्षः स तु दोषः स्यात् पुत्रनाशकरो ध्रुवम् । दीप्तिहीनं गतच्छायं जठरं तद्विदुर्व्बुधाः । तस्मिन् सन्धारिते मृत्युर्जायते नात्र संशयः ॥" इत्यादि यत्र तु मुक्तायां कृत्रिमताज्ञानं भवति सन्देहवशात् तां मुक्ता-मुष्णे सलवणे च स्नेहे सलिले वा रात्रिं स्थापयेत् । अथवा शुक्लवस्त्रेण प्रच्छाद्य तां व्रीहिभिर्घर्षयेत्, एवंकृते या न विवर्णा भवति, सैवाकृत्रिमा ज्ञेया । तथाच—"यत्र कृत्रिमसन्देहः क्वचित् भवति मौक्तिके । उष्णे सलवणे स्नेहे निशां तद्वासयेज्जले । व्रीहिभिर्म्मर्द्दनीयं वा शुक्लवस्त्रोप-वेष्टितं । यत्तु नायाति वैवर्ण्यं विज्ञेयं तदकृत्रिमम् ॥" इति मुक्तापरीक्षा अथ मरकतं—इदं हरिद्वर्णमणिविशेषः । अस्य मात्रा इति भाषा मधुरत्वपुष्टिकरत्वप्रभृतयो गुणाः । इदन्तु बलासुरस्य पित्तादुत्-पत्तिमासादयामास । तत्र यन्मरकतं शैवालशिखण्डिशिरीषपुष्पा-दिभिः कान्त्या तुल्यतां दधाति, तत् शुद्धं शुद्धजातीयञ्च, तथाच—

"यच्छैवालशिखण्डिशाद्वलहरित्काचैश्च वाधच्छदैः। खद्योतेन च वाल कीरवपुषा शैरीषपुष्पेण च, छायाभिः समतां दधाति तदिदं निर्दिष्ट-मष्टात्मकं। जात्यं यत् तपनातपेष्वपरितो गारुत्मतं रञ्जयेत्॥" इति। स्वच्छं भास्वत् कान्तिमत् मृदुगरीरं स्निग्धं अवक्रं मरकतं शुभ-लक्षणं जानीयात्। दोषास्तु सशर्करत्वमिश्रितत्वरूक्षत्वमलिनत्व-लघुत्वहीनकान्तित्वानि। तथा त्रासयुक्तत्वविकृताच्छत्वेऽपि। तथाच शर्करिलकलिनरूक्षं मलिनं लघु हीनकान्ति कल्माषम्। त्रासयुक्तं विकृताङ्गं मरकतमित्यादिकम् अस्य च कान्तिरष्टधा भवति, तेन च मरकतमप्यष्टप्रकारमित्यायातं। तथाहि मरकतस्य काचित् कान्तिः मयूरपुच्छकान्तितुल्या, काचित् चाषकपक्षतुल्या काचित् हरिकाचनिभा॥ काचित् शैवालतुल्या, काचित् खद्योतपृष्ठ-समानाभा, काचित् बालकीरतुल्या, काचित् नवशाद्वलसमानवर्णा, काचिच्च शिरीषकुसुमोपमेति। तथाचोक्तं—"भवेदष्टविधा च्छाया मणेर्मरकतस्य च। बर्हिपुच्छसमा भासा चाषपक्षसमापरा। हरिकाच निभा चान्या तथा शैवालसन्निभा। खद्योतपृष्ठसंकाशा वालकीर-समा तथा। नवशाद्वलसच्छाया शिरीषकुसुमोपमा। एव-मष्टौ समाख्याताश्छाया मरकताश्रयाः॥" निरङ्कुशा हि शास्त्रकर्त्तारः तेषामयुक्तं युक्तञ्च सर्व्वमेव वचनमस्माभिरविरोधेन अविचार्य्यैव स्वीकार्य्यं इतरथा हिन्दुधर्म्मावलम्बिभिराख्यं वरापाद्यमानं नास्तिकत्वं आत्मनि दुष्परिहरमेव स्यात्। तथापि सत्यतानुरोधेन इदमत्र वक्तव्यमस्माभिः यत् बालकीरनवशाद्वलशैवालानां वर्णगतं भेदं न वयं विवेचयितुं सम्यक् समर्थयामहे इति। यत्तु मरकतं प्रस्तरे घृष्यमाणं लौहभङ्गेनोल्लिखितं चूर्णेन च विलेपितं सत् सहजां कान्तिं न त्यजति, प्रत्युत अधिकां शोभासम्पदं पुष्यति, तन्मरकतं अकृत्रिमं विशुद्धं; यत्तु अनया प्रक्रियया मलिनं भवति, तत् कृत्रिमं अवि-शुद्धञ्च। यथा "कृत्रिमत्वं सहजत्वं दृश्यते सूरिभिः क्वचित्।

घर्षयेत् प्रस्तरे वङ्ककाचस्तस्मात्विपद्यते। लेखयेत्तोऽश्मङ्गेन चूर्णनाथ विलेपयेत्। सहजः कान्तिमाप्नोति कृत्रिमो मलिनायते॥" इति मरकतपरीक्षा। अथ स्फटिकः। अयं श्वेतवर्णमणिविशेषः, तस्यैवासुरस्य बलनाम्नो मेदसः समुत्पन्नः। अस्य गुणा यथा—"यो हि स्फटिकः गङ्गाजलसदृशच्छविः, सुविमलः, निस्तुषः, नयनानन्दकरः तथा अतिस्निग्धो मधुरः अतिशीतलश्च यश्च भिद्यमानः स्वच्छतां नैव त्यजति स शुद्धः। तथाच यद्गङ्गातोयविन्दुच्छवि विमलतमं निस्तुषं नेत्रहृद्यं, स्निग्धं शुद्धान्तरालं मधुरमतिहिमं पित्तदाहास्रहारि। पाषाणे यन्निघृष्टं स्फुटितमपि निजां स्वच्छतां नैव जह्यात्; तज्जात्यं यातु लभ्यं शुभमुपचिनुते शैवरत्नञ्च रत्नम्॥" इति। अयञ्च आकरभेदेन नानारूपं उपयाति। त्रीण्यस्याकरस्थानानि भवन्ति। यथा—हिमालयः, सिंहलो, विन्ध्याटवीतटञ्च। तत्र हिमालयोद्भूतः स्फटिकः चन्द्रसमकान्तिर्द्विधा भिद्यते चन्द्रकान्तसूर्य्यकान्तभेदतः,यो हि सूर्य्यकरस्पर्शमात्रेण हुताशनमुद्गिरति स सूर्य्यकान्तः, यश्च पूर्णचन्द्रसमानकान्तिः दाड़िमीवीजतुल्यः किञ्चित् हीनकान्तिश्च स चन्द्रकान्तः। यश्च सिंहलदेशे गन्धनीलाकरे जायते, स तु कृष्णवर्णः। यथा—"हिमालये सिंहले च विन्ध्याटवितटे तथा। स्फटिकं जायते चैव नानारूपं समप्रभम्॥ हिमाद्रौ चन्द्रसङ्काशं स्फटिकं तद्द्विधा भवेत्। सूर्य्यकान्तञ्च तत्रैकं चन्द्रकान्तं तथापरम्॥ सूर्य्यांशुस्पर्शमात्रेण वह्निं वमति यत्क्षणात्। सूर्य्यकान्तं तदाख्यातं स्फटिकं रत्नवेदिभिः॥ पूर्णेन्दुकरसंस्पर्शात् अमृतं स्रवति क्षणात्। चन्द्रकान्तं तदाख्यातं दुर्लभं तत् कलौ युगे॥ अशोकपल्लवच्छायं दाड़िमीवीजसन्निभम्। विन्ध्याटवितटे देशे जायते मन्दकान्तिकम्॥ सिंहले जायते कृष्णाभाकरे गन्धनीलके॥" इति। अस्यापि धारणेन पापमलस्याश्च दूरीभवतः चक्षुषोश्च दोषादिकमशेषेण नाशयति। साधारणतोऽस्य धारणात् यादृशं फलमुत्पद्यते, अस्याक्षमालाधारणेन ततः कोटि-

गुणं फलं भवति। अस्य तु स्वल्पमूल्यस्य मणिः सैव युक्ता अत्त-मालयता योगिजनमात्रधार्य्या। जाने तत एव भगवान् भस्मभूषः स्फटिकाचले (कैलासे) स्फटिकोमिवाक्षमालां जपति, तेन चास्य शिवप्रिय इति नामान्तरम्। नैतन्निश्चितं किञ्चिदभूषणमस्माभि-रुपलभ्यते। किन्तु यदस्माकमिष्टकादिभिर्भवति कार्य्यं गृहकार्य्या-रम्भे, पूर्व्वं शिलोच्चरास्तदेव स्फटिकेनाकार्षुः, तत्रापि सुखस्पर्शतया चन्द्रकान्तस्फटिकेनैव तत्कार्य्यादिकमासीत् सुसम्पन्नं तन्निर्म्मितस्य गृहादि अतिशुभ्रतया चन्द्रकरैरविभाव्यमाने गृहजनैस्तत्संस्पर्शेन ज्ञायते स्म,तथाच शिशुपालवधे "विशदाश्मकूटघटिताः क्षपाकृतः क्षण-दासु यत्र च रुचैकतां गताः। गृहपङ्क्तयः कथिगतीर्गिरि जनैस्तत्समीव हस्तपरामर्शसूचिताः॥" इति। नैषधीयचरितेऽपि "दयितं प्रति यत्र सन्तता, रतिहासा इव रेजिरे भुवः। स्फटिकोपलविग्रहा गृहाः शशभृद्भित्तनिरङ्कभित्तयः॥" इति। अस्य च स्फटिकस्य अपरापर-मणिभिः सह प्रतिरूपकत्वाभावात् न तत्र परीक्षाप्रयोजनम्। अत एव ग्रन्थकर्त्तारोऽपि अस्यात्यल्पं मूल्यमालोक्य नास्यापरापरमणिभि-र्मिश्रणेऽपि काचित् क्षतिरिति मत्वा नात्र विशेषाग्रहेण कृत्रिमा-कृत्रिमादिभेदमधिकृत्य मुधा पुस्तकपुटं व्यवर्द्धयन् इति स्फटिक परीक्षा। प्रवालस्य रक्तवर्णो वर्त्तुलाकारो वल्लविशेषस्तुभैरव वल्लस्य शिराजालकादुत्पद्यते स्म। तत्र शुद्धं दृढं स्वच्छं सुगोलञ्च प्रवालं शुभलक्षणान्वितं स्यात्, अयं प्रवालः श्वेतसागरमध्यवर्त्तिन्याः विद्रुम-लतायाः समुत्पन्नः, या हि विद्रुमलता प्रयत्नकथिता पाषाणमपि विद्रावयति। प्रवाले विवर्णताखरते दूषणम्। यथाहि वज्रेषु रेखाकाकपदादयो यत्नेन वर्ज्जनीयाः; यथा वा पद्मरागेषु हिच्छायत्वा-दिरवद्यं हेयस्तथा प्रवालेष्वपि विवर्णतां खरताञ्च यत्नेन वर्ज्जयेत्, तत्र शशवक्षोद्भितो गुञ्जाजपापुष्पतुल्यश्च प्रधानतया निर्द्दिष्टः। तत्रापि मनीसके देवकरोमके च स्थाने यः प्रादुर्भवति स एव।

तथाच—"तत्र प्रधानं शशलोहिताभं गुञ्जाजपापुष्पनिभं प्रदिष्टम्। मनोसकं देवकरमोकञ्च स्थानानि तेषु प्रभवं सुरागम्॥" इति। किञ्चित् प्रवाले। अथ गोमेदकं, तद्धि पीतमणिः, अस्य हिमालये वा सिन्धौ वा सम्भूतिः। तस्य स्वरूपनिर्णयो यथा—स्वच्छकान्तिः, भारवत्, स्निग्धं दीप्तियुक्तं धवलं वा पिञ्जरं वा गोमेदकं प्राधान्यमधिगच्छति। तदुक्तं—"हिमालये वा सिन्धौ वा गोमेदमणिसम्भवः। स्वच्छकान्तिः गुरुः स्निग्धो वर्णाढ्यो दीप्तिमानपि। वलक्षः पिञ्जरो धन्यो गोमेद इति कीर्त्तितः॥" इति। अस्य दोषस्तु हीरकदोषवदिति न पुनर्नाम्ना निर्द्दिश्यते विस्तरभयात्। यदुक्तं—"ये दोषा हीरके ज्ञेयास्ते गोमेदमणावपि" इति। अस्य तु कृत्रिमत्वाशङ्कया वह्नियोगेन शानोल्लेखेन वा परीक्षा कार्य्या। एतत्तुल्यरूपं स्फटिकेनैव कुर्व्वन्ति शिल्पिनः, तस्मात् शानोल्लेखेन वह्नियोगेन वा स्फटिको भिद्यते, न तु गोमेदकम्। तथाहि—"परीक्षां वह्नितः कार्य्या शाने वा रत्नकोविदै इति॥ स्फटिकेनैव कुर्व्वन्ति गोमेदप्रतिरूपिण"मिति च। इति गोमेदकम्। अथ कर्कतनं बलासुरस्य वायुर्वेगात् क्षिप्ता स्वनखापलो ऽद्यवने पपात, तस्मात् कर्कतनं समजायत। तत्र स्निग्धं विशुद्धं वर्णसन्निभं प्रासादलाञ्छितदोषवर्ज्जितं कर्कतनं रत्यं जनयति, पापं रहयति सम्पदश्चाभिसारयति। अतुरज्ज्वलं कर्कतनं स्वर्णेन वेष्टयित्वा कण्ठे वा हस्ते वा यो धारयेत् तस्यायुर्वृद्धिमाप्नोति, कीर्त्तिरुपचयं गच्छति, सुखं वृद्धिमभ्युपैति, किमपरं तस्य सर्व्वा सम्पदुपतिष्ठते। विकृतवर्णानां तेजोदीप्तिविहीनानामविशुद्धादाकरादुद्भूतानां केषाञ्चित् प्रस्तराणाम् आकृतिः कर्कतनतुल्यतया भ्रान्तिमापादयति सरलहृदयानामिति विशेषपरीक्षया क्रय्या सारावयवैः। अपरे च सन्ति भीष्मपुलकरुधिराख्यप्रभृतयो मणयः उपमणयश्च राजपट्टप्रभृतयः,किन्तु तेषामम'ख्यत्वाद्दुष्करमिव परीक्षणमिति वर्त्तमानायामपि महत्यामिच्छायाम् अवगाहमाने च तस्मिन् प्रबन्धप्रतिपाद्य

विषयं न लिखितमिति मन्तव्यं सुधीभिः। ये च पद्मरागादयो लक्षणेन समुल्लेखिताः,ते महागुणा इति सर्व्वेषामेव धार्य्याः। न केवल-मेते आधिभौतिकमेव सर्पादुत्थं भयमपाकुर्व्वन्ति, आधिदैविकमपि यक्षराक्षसग्रहादिनिबन्धनं भयमकस्मादेव तद्धारणेन गृहस्थापनेन च प्रपलायते। तदुक्तं शुद्धिदीपिकायां—"माणिक्यं विगुणे सूर्य्ये वैदूर्य्यं शशलाञ्छने। प्रवालं भूमिपुत्रे च पद्मरागं शशाङ्कजे॥ गुरौ मुक्तां भृगौ वज्रं इन्द्रनीलं शनैश्चरे। राहौ गोमेदकं धार्य्यं केतौ मरकत-न्तथा॥" इति शम्।

## वाणवैभवम्।

( पूर्व्वतोऽनुवृत्तम् )

( लेखकः—श्रीकृष्णप्रसन्नतर्कवागीशः। )

"ततः सम्पूर्णगर्भा वसुमती शुभमुहूर्त्ते सकललक्षणलक्षितं सुतम-सूत। ब्रह्मवर्च्चसेन तुलितवेधसं पुरोधसं पुरस्कृत्य कृत्यविन्महीपतिः कुमारं सुकुमारं जातसंस्कारेण बालालङ्कारेण च विराजमानं राजवाहननामानं व्यधत्त।" इति श्रीमद्दण्डिविरचितदशकुमार-चरितीयराजवाहनचरितमस्य दासत्वमपि न स्पर्द्धते अधिकर्त्तुम्, किं पुनरस्य समानगुणतया आलोचनविषयमिति। यदातु गुरुमुखा-दधिगतसकलशास्त्रार्थः कवलितनिखिलास्त्रशस्त्रविद्यायाथार्थ्यो सव्यव्यायामादिकौशल आकलितसकलसमलकलाविलासः उररी-कृताशेषभाषारसबोधप्रकर्षः सहर्षं यौवनभूपसमागमलाञ्छनं

स्त्रकीयाङ्केऽधारयत्। तदेव कविकुलयशोलालसां निराकर्त्तुकामो· बाणः स्वभाववत्सलेन लेखननैपुण्येन संक्षेपतो वर्णितवान्।

"एवं तस्य सर्व्वविद्यापरिचयमाचरतश्चन्द्रापीड़स्य त्रिभुवनविलोभनीयोऽमृतरस इव सागरस्य सकललोकहृदयानन्दनश्चन्द्रोदय इव प्रदोषस्य बहुविधरागविकारः सुरधनुःकलाप इव जलधरसमयस्य मकरध्वजायुधभूतः कुसुमप्रसर इव कल्पपादपस्य अभिनवाभिव्यज्यमानरागरमणीयः सूर्य्योदय इव कमलवनस्य विविधलास्यविलासयोग्यः कलाप इव शिखिनो, यौवनारम्भः प्रादुर्भवन् रमणीयस्यापि द्विगुणां रमणीयतां पुपोष॥"

अहो महीयसी लेखनीभङ्गी रमणीयतया मनोहारिणी मधुररससंवाहिनी च कालीदासीयसहजभावजातमपुरपद्धसति कवित्वसम्पदा, सुरनरसंस्तुतगुणगरिम्णो जगदेककवेर्व्वाणभट्टस्य विदितोपाध्यायाभिप्रायेण राजराजेश्वरेण तारापीड़ेनानुप्रेरितः सबलो वलाहकाभिधानो राजपुरुषः कश्चित् सेन्द्रायुधो राजकुमारं चन्द्रापीड़मुपसृत्यायत इन्द्रायुधम् अङ्गुल्या निर्द्दिश्य च पारसीकाधिपतिना भुवनत्रयैकाश्चर्य्यभूतराजराजेश्वरोपभोगयोग्यमश्वरत्नमिति कृत्वा महाराजायार्पितमिममिन्द्रायुधं देवेन्द्रपदारविन्दसन्दीपिताङ्गस्योच्चैःश्रवसः समानगुणमारोहयतु भवानिति आवेदयामास। ततश्च तदीयवचनानन्तरमेव पार्श्वयोः राजपुरुषद्वयेन गृहीतावयवमिन्द्रायुधमवलोक्य अलौकिकलावण्यसम्पदं प्रदीप्ततेजसं वैश्वानरमिव प्रशान्तवदनं तापसजनमिव शापात् पशुयोनिगतं देवमिव मत्वा तदीयातुलनीयकान्तिमत्त्वं चिन्तयन् मनसा प्राह—"महात्मन्नर्व्वन् योऽसि सोऽसि नमोऽस्तु ते। सर्व्वथा मर्षणीयोऽयमारोहणातिक्रमोऽस्माकं अपरिगतानि देवतान्यपि अनुचितदुःखभाञ्जि भवन्ति॥" अहो नवीनयौवनमारोहतो बालकस्य वैशिष्ट्यबोधः, श्रद्धा च दैवतव्यापारेषु अव्यभिचारिणी भक्तिर्देवेषु, प्रवृत्तिः सदाचारेषु, अहो सर्व्वाण्येवास्य ललितानि चरितानि अनन्य-

साधारणजनसुलभानि। यान्यनुशीलयतां सतां मधुर आनन्दमयो भावः सहसैव समुदितः प्रीतिपरम्परामुद्भावयति मानसे।

यथा वा आसादितराजप्रासादस्य तस्य जनकचरणप्रान्ते भूमावुपवेशनं विनयवारितवाक्यविस्तरं मधुरमालपनम् पितुरनुमत्या च जननीपादसरोजसन्दर्शनं अनिच्छयापि जनन्यङ्के स्थगतो वासः। तत्रैव च "यथा पितुः प्रसादात् समस्ताभिरूपैतमालोकयिष्यामि" इति विलासवतीवचनतो मधुरा लज्जापि अस्य चरितोत्कर्षं प्रकर्षेण साधयति शुकनासभवनमुपगतोऽनिवारितोऽपि प्रतीहारपुरुषैः स्वकीयसौजन्यप्रदर्शनाय सदाचारप्रतिपालनाय च बहिःप्राङ्गणे एव तुरङ्गमादवतीर्य्य प्रकटितविनयोऽवनतमौलिना द्वितीयं जनकमिव शुकनासं प्रणनाम। शुकनासस्य वचनपीयूषरसाभिषिक्तगात्रः नरपतिकुमारो वैशम्पायनमातरं मनोरमादेवीमवलोक्य प्रणम्य च निजमन्दिरं प्रस्थितः। अहो सुकुमारमतिराजकुमारस्य व्यवहाररमणीयता कविधुरीणेन वाणेन कौशलेन आवेदिता। धन्यस्तावदयं नायकः महनीयचरितः, शतकृत्वो धन्यवादभाजनतामधिगच्छति निपुणोऽयं कविः। येन निखिललोकलोचनचमत्कारकमालेखितमिदं चरितम्।

ततश्च कदाचित् लोहितवसनावगुण्ठितवदनां श्यामाङ्गीं विचित्ररत्नालङ्कारप्रभोद्भासिताङ्गीं असामान्यलावण्यसम्पदं पत्रलेखामग्रेकृत्य कैलासनामा कञ्चुकी राज्ञ्या विलासवत्या प्रेरितः कुमारं समुपसृत्य कृतप्रणामः प्राह—"कुमार! इयं कुलेश्वरदुहिता पत्रलेखाभिधाना कुलेश्वरराज्यं विजित्य वन्दिजनेन समस्मद्गृहमानीता मया पुनःराजदुहितेति मत्वा दुहितृनिर्व्विशेषेण पालिता इयन्तं कालं यावत्। तदिदानीं भवतस्ताम्बूलकरङ्कवाहिनीं कृत्वा मया प्रेष्यते। अस्यां मदीयस्नेहभाजनतया असामान्यदृष्टिना भवता भवितव्यम्। बालेव पालनीया स्वचित्तवृत्तिरिव चाप-

लेभ्यः परिरक्षणीया शिष्टा इव द्रष्टव्या" एवं विविधोपचारपुरःसरं विलासवत्या भवते सन्दिष्टम् । ततस्तु सा पत्रलेखा नक्तन्दिवं छायेव तं समनुगता, सोऽपि मातुरादेशं सर्व्वथा अपालयत् । धन्योऽयं नायकः, समुपगतेऽपि विकारकारणे, धैर्य्यादच्यवनशीलतया कालमत्यवाहयत् । अत्र तु नायकस्य धीरता सर्व्वथा प्रस्फुटा सम्यगभिव्यक्ता च भवेत् ।

एवं गच्छता कालेन यौवराज्ये तं सन्निवेशयितुमनसो महीपतेरभिलाषं जानन् शुकनासः कदाचिद्दर्शनाय्यामादितस्वकीयनिकेतनं प्रकटिताकपटविनयमपि विनीततरमिच्छन् सविस्तरमवोचत् ।

"तात चन्द्रापीड़ ! विदितवेदितव्यस्याधीताखिलशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति, केवलञ्च निसर्गत एवाभानुभेद्यमरत्नालोकच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् । अपरिणामोपशमो दारुणो लक्ष्मीमदः । कष्टमनञ्जनवर्त्तिसाध्यं परमैश्वर्य्यतिमिरान्धत्वम् अशिशिरोपचारहार्य्योऽतितीव्रो दर्पदाहज्वरोष्मा । सततमूलमन्त्रगम्यो विषयविषास्वादमोहः ।" एवंविधविविधापदेशदानेन प्रबोधितनीतिधर्म्मतत्त्वः अपाकृतमोहध्वान्तमस्तः प्रकाशितज्ञानालोकगूढ़तत्त्वः महोज्ज्वलसौन्दर्य्यसम्पदा निन्दितचन्द्रमसं चन्द्रापीड़ं व्यसर्ज्जयत् । "उपशान्तवचसि शुकनासे चन्द्रापीड़स्ताभिरुपदेशवाग्भिः प्रक्षालित इव उन्मीलित इव स्वच्छीकृत इव निर्मृष्ट इव अभिलिप्त इव अलंकृत इव पवित्रीकृत इव उद्भासित इव प्रीतहृदयो मुहूर्त्तं स्थित्वा स्वभवनमाजगाम ।" अहो महाप्राणता महानुभावानां, सरसता वचसां, गभीरार्थता पदानां, कमनीयता वर्णविन्यासानां, ज्ञानोन्मेषकता सदुपदेशानां, हृदयहारित्वं रचनानैपुण्यस्य, मधुरता कवित्वस्य, पीयूषरसनिस्यन्दनं पदग्रन्थनभङ्ग्याः, मोहमपाकुर्व्वन्निव, आनन्देन उत्फुल्लयन्निव, काशविशददशनांशुकेन धवलयन्निव, प्रकाशितज्ञानप्रभया वदनकमलं विकाशयन्निव सस्मिताननोऽमात्यप्रधानः

शुकनासश्चन्द्रापीडकपोलमचुम्बत। चन्द्रापीडोऽपि आसादितजन्मान्तर इव प्रशान्तवदनः, लब्धबोध इव उन्नतमनाः, योगीव ध्यानमग्नः, अनारतमनुशीलयंस्तदेव हृदये स्वकीयमन्दिरमाससाद। अथ कदाचित् राजराजेश्वरेण तारापीड़ेन यौवराज्ये कृताभिषेकः सौधसुधाधवलं दुकूलयुगलं परिदधानः, अग्रतो वेत्रपाणिना पित्रा निर्दिश्यमानमार्गं सुमेरुशृङ्गोत्तुङ्गं सिंहासनमधिरुरोह। ततश्च दिग्विजयप्रसङ्गेन सपत्नलेखः करेणुकामारुह्य कोलाहलकलकलायितमहीतलैर्विपुलराजबलैर्नरेन्द्रवृन्दैश्च अभिन्नहृदयेन बन्धुना वैशम्पायनेन चानुगम्यमानः कनकालङ्कारप्रभापिशङ्गितावयवेनेन्द्रायुधेन सनाथीकृतपुरोभागः प्राचीं दिशं प्रस्थितः। प्रायशो राजशेखरेण जनकेन जितान् महीपालानवलोक्य वैशम्पायनेन प्रबोधितो निखिलां पृथिवीं क्रमेण विचचार। ततस्त्रिगङ्गतिलकां, वारुणीं सप्तर्षिमण्डलधवलां दिशञ्च जितवान्। कदाचित् पूर्व्वाशाविशोभनाम्भोनिधिसमीपतः चौणीतलेन विचरन् दूरतः समवलोक्य किन्नरमिथुनं औत्सुक्यवशात् गृहीतुकामस्तदनुगच्छन् समसहचरवैशम्पायनतो लब्धदूरभूभागः क्लान्तमिन्द्रायुधमात्मानञ्च स्वेदविन्दुविप्लुताङ्गमाकलय्य व्याकुलितचेताश्चिन्तितवान्। बुद्धिविपर्ययान्निष्प्रयोजनमेतावानायासोऽङ्गीकृतः। क्लेशमुपनीतश्च इन्द्रायुध आत्मा च एवं वितर्क्य चणशः कृतनिश्चयेन निरधारि। यत् कस्याश्चिदपि व्याप्यामपनीतक्लममिन्द्रायुधं विधाय स्वयमपि पीतसलिलः क्षणेन विश्राम्यन् लब्धशान्तिः भूय वैशम्पायनादिकमुपसर्पामि, ततश्च जलार्थी इतस्ततो भ्राम्यन् आराद्विचित्रपत्रपादपनिवहव्याप्तं विकशितव्रततीसंयतिसमाच्छन्नं कलनादराजहंसकुलमुखरितं विकचकमलदलविलसितं अच्छोदसरोवरमपश्यत्। (क्रमशः)

---

# धनुर्व्वेदः ।

( पूर्व्वतोऽनुवृत्तः । )

( लेखकः—श्रीउपेन्द्रनाथमैत्रमः । )

अधुना तु असिप्रामाण्यमसिलक्षणं विस्तरेणोपवर्ण्यते । लौह-धातुनैवासिनिर्म्माणं भवति सर्व्वेषामेतत् सुविदितमेव । परं असि-निर्म्माणार्थं कीदृग्जातीयस्य लौहस्य ग्रहणं कर्त्तव्यं तदेव द्रष्टव्यम् । निरङ्गसाङ्गभेदेन लौहस्तावद्द्विधा । तथाच वीरचिन्तामणौ—

"लौहार्थं लक्षणं वच्मि यथोक्तं मुनिपुङ्गवैः ।
निरङ्गसाङ्गभेदेन ते लौहा द्विविधा मताः ॥
निरङ्गाः काञ्चिगाण्डादिभेदात् बहुविधा मताः ।
असिकर्म्मसु ते शस्ता नानाव्याधिविनाशनाः ॥"

शार्ङ्गधरपद्धतौ च दृश्यते—

"वक्ष्यते प्रायशो यस्मात् साङ्गाः खड्गादिकर्म्मसु ।
नामभेदेन चिह्नानि लौहानामभिदध्महे ॥"

तत्र प्रधानतः—रोहिणीनीलपिण्डमयूरग्रीवकमयूरवध्वक-तित्तिराङ्गसुवर्णवज्रशैवलप्रालानमोघवज्रकङ्कालवज्रग्रन्थिवज्रकादिभेदेन दशधा लौहभेदाः । अप्रासङ्गिकमपि जिज्ञासूनां रसायनशास्त्र-विदाञ्च कौतूहलविनोदनार्थं तेषां लक्षणानि समुल्लिख्यन्ते । तद् यथा—

"क्षुद्राङ्गं सुदृढं यस्य नीलमीषत् प्रतीयते ।
रोहिणीं तां विजानीयात् तत्क्षते बहुवेदना ॥
नीलापिण्डसमाङ्गञ्च नीलपिण्डं विदुर्बुधाः ॥
मयूरकण्ठसंस्थानसङ्गं यस्य प्रतीयते ।
मयूरग्रीवकं लोहं तं विदुर्मुनिपुङ्गवाः ॥

नागकेशरपुष्पाभमङ्गं यस्य प्रतीयते ।
मयूरवज्रकं प्राहुर्लौहशास्त्रविदो जनाः ॥
तस्मिंस्तित्तिरपत्राभमङ्गं लौहे प्रतीयते ।
दुर्लभं तन्महामूल्यं तित्तिराङ्गं सुपाकजम् ॥
सुवर्णसदृशाकारा अङ्गभूमिः प्रतीयते ।
सुवर्णवज्रकं विद्यात् बहुमूल्यं महागुणम् ॥
अविच्छिन्नं सुसूक्ष्माङ्गं दूर्वाभङ्गिमनाक्षजम् ।
यस्मिन् शैवालमालानमाहुस्तं मुनिपुङ्गवाः ॥
शुक्लं पार्श्वद्वयं यस्य मध्ये स्वर्णमयाङ्गकम् ।
धूमवत् सोमसंस्थानं सौपलं वज्रकं विदुः ॥
मृणालनीलप्रतिमं विचित्रैरुपलक्षितैः ।
कङ्कोलवज्रकं प्राहुः स्वर्णकं लौहचिन्तकाः ॥
अङ्गं प्रतीयते यत्र बहुग्रन्थिसमन्वितम् ।
दुर्लभं तन्महामूल्यं ग्रन्थिवज्रं प्रचक्षते ॥"

एते सर्वे साङ्गाः लौहाः निरङ्गलौहा अपि कच्चागड्डादिभेदेन बहुधा। निरङ्गकान्तिलौहस्य लक्षणम् तु। निरङ्गं रौप्यपत्राभमीषन्नीलनिभञ्च यत्। दुर्लभं तन्महामूल्यं कान्तिलौहं प्रचक्षते ॥ परमेतदेव दुःखं यदस्मद्देशीयाः इदानीं विदेशादागतमेव लौहमविचारेण व्यवहरन्ति, न च कदाचित् कश्चिदपि शास्त्रोक्ताः लौहाः कीदृशाः कुत्र वर्त्तन्ते न वर्त्तन्ते वा तदवगन्तुमल्पमपि श्रमं नाङ्गीकुर्व्वन्ति। लौहसंग्रहात् परं भस्म निर्म्माय तस्मिन् पायनं दातव्यम्। पायनभेदेनास्य गुणाः अपि भिद्यन्ते। सन्दिपिलोमनसा शुक्रनीतौ पायनानि कथितानि। तद्यथा—

"इदमौशनसञ्च शस्त्रपानं रुधिरेण प्रियमिच्छतः प्रदीप्ताम् ।
हविषा गुणवत् सुताभिलिप्सोः सलिलेनाक्षयमिच्छतश्च वित्तम् ॥

वड़वोष्ट्रकरेणुदुग्धपानं यदि पापेन समोऽतेऽर्थसिद्धिम् ।
झषपित्तमृगाश्ववातदुग्धैः करिहस्तच्छिदये सतालगर्भैः ॥
आर्कं पयोहुड़ुविषाणमसीसमेतं पारावताखुशकृता च
युतं प्रलेपः ।
शास्त्रस्य तैलमथितस्य ततोऽस्य पानं पश्चात्स्थितस्य न
शिलासु भवेद्विघातः ॥
क्षारे कदल्या मथितेन युक्ते दिनोषिते पायितमायसं यत् ।
सम्यक् सितं चाश्मनि नैति भङ्गं न चास्य लौहेष्वपि
तस्य कौण्ठ्यम् ॥"

अस्यास्त्वपि बहूनि पायनानि सन्ति, परं तानि प्रायेण शरफलकेषु प्रयोज्यानि । विषपायनेन च शस्त्रस्यातिकठोरता सम्पद्यते, विषगुणाश्च जायन्ते, येन प्रहरणस्याग्रेणैव प्रहृतः सद्यः प्राणैर्वियुज्यते ॥ शस्त्रपायनकाले तस्मिन् यद्वर्णो जायते, तस्मात् योगगन्धः समुत्पद्यते, ततः भाविशुभाशुभादिकमपि प्राचीनैर्निर्णीयते । यथा च—

"करवीरोत्पलगजमदघृतकुङ्कुमकुन्दचम्पकसगन्धः ।
शुभदोऽनिष्टो गोमूत्रपङ्कमेदःसदृशगन्धः ॥
कुर्म्मवसासृक्क्षारोपमश्च भयदुःखदो भवति गन्धः ।
वैदूर्य्यकनकविद्युत्प्रभो जयारोग्यवृद्धिकरः ॥"

इति हारावल्यां भोजसन्दर्भे च ।

लक्षणानुसारतः अमीषां नामानि अपि भिद्यन्ते, तद्यथा—

"कृष्णायतसमा भूमिरङ्गं श्वेतं प्रतीयते ।
तं धवलगिरिं प्राहुः पण्डिताः प्रवदन्ति हि ॥
तन्वी पत्रावली कान्ता सौवर्णाङ्गानि पत्रिका ।
प्राहुः कालगिरिं पाण्डि लोहशास्त्रविशारदाः ॥
धारा शुभ्रा भवेत् यस्य मध्यं काजलसन्निभम् ।
कृष्णरङ्गान्वितं गात्रं विद्यात् कज्जलगात्रकम् ॥

सूक्ष्मं रजतपत्राभमङ्गं कृष्णासिपत्रिका।
कुटीरकसमाख्यातास्तत्क्षतैःश्वयथुर्भवेत् ॥
केतकी पत्रसदृशमङ्गं यस्य प्रतीयते।
विद्यात् केतकवज्रं यत् लौहशास्त्रविशारदः ॥
अङ्गं दमनपत्राभमङ्गे यस्मिन् प्रतीयते।
विद्याद्दमनवक्त्रन्तु तीक्ष्णाधारं महागुणम् ॥
कृष्णभूमिसुवर्णाभमीषत् वज्राङ्गसङ्गतम्।
ताहुर्नोवज्रकं विद्यात् कालसंज्ञमथापरे ॥
जर्जरं कपिलाभामङ्गं यस्मिन् प्रतीयते।
नकुलाङ्गन्तु तं विद्यात् स्पर्शं यस्यास्थिनाशनम् ॥
आसीका मालिका यस्य लुद्रात्रं कुण्डलीकृतम्।
क्षुद्रवज्रकनामानं प्राहुर्नागार्ज्जुनो मुनिः ॥

अन्तर्गाढं चिह्नहीनं विशालं
मध्ये स्थूलं स्थूलभारातितीक्ष्णम्।
रक्षोवक्षश्छेदनार्थं महात्मा
कृत्वा खड्गं देवराजोऽतिहृष्टः ॥

वामनाच्च महातन्तु येन तन्तूर्न जायते।
छेदे गाढं चिह्नहीनं प्राहुः खड्गं विचक्षणाः ॥

"येन तन्तुर्न जायते" अर्थात् घृष्टं क्षतं ( Lacerated wound ) न करोति।

"एरण्डबीजप्रतिममङ्गं यस्मिन् प्रतीयते।
महिषाख्यः स वै खड्गः नीलमेघसमच्छविः ॥
घृष्टे यस्मिन् भवेत् खड्गे शरीरं प्रतिविम्बितम्।
अङ्गपत्राभिधं खड्गं प्राहुः खड्गं विचक्षणाः ॥
यस्याङ्गे स्थूलरेखा घनमसृणरुचि सर्व्वतो व्याप्य तिष्ठेत्
धारा तीक्ष्णातिसूक्ष्मा प्रविशति रुधिरस्पर्शमात्रेण खड्गः।

यस्याम्भः पीयमानं शमयति निखिलं व्याधिमाधिं ममयाम्।
वैरिश्रेणीं वदन्ति गिरिशो वज्रमेतद्‌गवादि॥"

( गजवज्र इत्यर्थः ) इति नागार्ज्जुनः।

(क्रमशः)

## देशभ्रमणोपयोगिता।

( लेखकः—श्रीसुरेशचन्द्रव्याकरणतीर्थः। )

यदा वयं परमकारुणिकस्य भगवतो निदेशं शिरसि निधाय कर्म्मक्षेत्रमिदं भूमण्डलमागच्छामस्तदास्माकं ज्ञानकलिका अङ्कुरतया यापयति शैशवजीवनम्। क्रमेण तु वयसा साकं वहिर्विषयादासाद्यासाद्य उन्मुक्ताः युगभारभाराविवशा आगाः समस्ता अघूर्णीरन्ध्रा इव तामसैः सुविषमाभारं दधाना इव। स्वार्थैकान्तपरायणाः शरविधौ वैमुख्यमेवाश्रिता दृश्यन्ते भ्रूकुटीविभङ्गविकला वीभत्सभावाश्रयाः॥ स्वाहारं परिणतैरधिगच्छन्ति सा सोपानात् सोपानान्तरम्। ज्ञानागमस्य तावद्द्वयी दृश्यते पद्धतिः, वहिर्विषयैश्चित्तस्य साक्षात् संयोगरूपा, ग्रन्थादेरध्ययनादिरूपा वा परोक्षतः। मनेर प्रथमा पद्धतिरेवात्र प्रकृततया प्रधानतामधिगच्छतीति। यतः सा हि मानवस्य अनाविष्कृतपूर्व्वाणां ज्ञानानामुत्पादकतया स्वाभाविकी, द्वितीया तु युगयुगान्तादाहृतानामाधारतया कृत्रिमा। ग्रन्थाद्‌गुरुमुखाच्च यानि तावत् लभ्यन्ते ज्ञानानि, तानि सर्व्वाण्येव वहिर्विषयैः मनसः संयोगादेवोत्पत्तिमधिगच्छन्ति। अतोऽनुमीयते तावत् लम्भयितुमस्माकं ज्ञानकलिकां किशोरजीवनं देशभ्रमणमेव प्रधानहेतुतया विराजते, यतो देशभ्रमणेनैवास्माकं मानसभवनैर्नित्यनूतनभावनिचयैः संस्पृष्टमुपयाति तेषामुन्नवताम्। प्रकृतिदेवी च स्वयमेवा-

स्वदीयचित्तवीणां कोमलकराङ्गुलिभिर्भङ्कृतां करोति, मुहुर्मुहुर्मोहयति च सुषमया मानसं जनयति वा हृदयकुञ्जे हर्षकुसुमम्, ददाति च दयामयी मातेव क्षुधायां स्वादुफलं, तृष्णायां शीतलजलं, विस्तार्य च शष्पमयमञ्चलमाकारयति शयनाय, छायामयपाणिना वितरति चाङ्गेषु स्नेहस्निग्धममृतमयं स्पर्शम्। मृदुसमीरणव्याजेनेव च वीजयति भ्रमणक्लान्तमङ्गम्। उपदिशति चेयं काव्यमिव नीरवतया सौन्दर्य्यमूर्ध्वेन च स्त्रीव मधुरतया विलासविभवेन च।

देशभ्रमणवार्त्ताऽस्माभिरधुनाधुनिकतया इव उपलभ्यते। किन्तु न हीयमाधुनिकी। तीर्थपर्य्यटनाख्यया चेह निवसतीयं सुचिरम्। सम्प्रति तु नामान्तरेणैव बहुलप्रसिद्धतया नवेति भ्रान्तिरुत्पद्यते जनानाम्। किञ्च श्रुताश्चास्माभिर्बालेऽपि पितामहीमुखात् राजपुत्रमन्त्रिपुत्रादीनां कति रसमया भ्रमणवृत्तान्ताः। अहो अधुनाऽपि कथास्वपि मधुराणामुदेति कासाञ्चित् मौनसन्ध्यानां चोणा स्मृतिर्मानसाकाशे, विकाशयति च हृदयकुमुदं सुविमलैर्हर्षमयूखैः। तांश्च राजपुत्रादीन् कविर्बालेऽप्येव निखिलविद्याभिरलङ्कृत्यापि देशाटनमन्तरेण तेषां तोषं नोपयाति। अनेन चास्य अनवीनतैवोपपद्यते आधुनिकवैज्ञानिकयुगे भ्रमणस्य तावद्बहूनि वर्त्तन्ते साधनानि। तेषु त्वरितयानतया वाष्पीयशकटादिः प्रचुरप्रसिद्धिमगात्। पुरा तु पादचारणा गोशकटिका चासीदटनस्य साधारणं साधनं, तुरङ्गादिश्च कादाचित्कम्। मनेर पुरातनी प्रथैवात्र अधिकामुपयोगितामुद्वहति। यतस्त्वरितभ्रमणेन नयनयोरनिवेशनात् प्रकृतेरुदाररमणीयदृश्येष्वपि नास्वादयामः सुष्ठु सौन्दर्य्यरसम्। अनया च सौन्दर्य्यसुधामसकृन्निपीय, विधाय च तेन ज्ञानाधारमैश्वर्य्यमलवरितं गच्छामः, न चायं सौन्दर्य्यबोधः मानवचरित्रगठने हीनहेतुतया विराजते, अपि तु अयमेव वितरति नो देवदुर्लभानुदारतादीन् गुणगणान्, ये नाम गुणाः चरित्रहारेषु हीरकखण्डानीव शोभन्ते, हरन्ति

च हृदयं हृदयवतामौज्ज्वल्येन। अस्य च सौन्दर्य्यबोधस्य प्रभावाद् वर्षासु नववारिवर्षणेन शालिवीजानीव अङ्कुरिताः सत्प्रवृत्तयो हृदयस्य उर्व्वरा भूमिरिव सरसं सञ्जायन्ते। यस्माच्च भक्तेर्विकाशः, ज्ञानस्य प्रसारः, चित्तस्य च शमः, हिमगिरिशीर्षात् निर्झरिण्य इव स्वयमेव च स्फुरन्ति। कस्तमवहेलयितुमीष्टे, अरण्यकन्दरप्राङ्गणमधिष्ठाय दृष्ट्वा च सान्द्रनीलमाकाशं धरण्याश्च श्यामासनं न कस्य हृदयं रसेनार्द्रीभवति। न वा प्रसरन्ति वासनाः पातुं तदपार्थिवसुधामानन्दजनिकाम्। स एवास्मत्खण्डमिव प्रतिभाति न शेस्य दिगन्तप्रसारिणो हिमगिरिशिरस्तुषारराशेरभ्रधवलतां नीलाम्बरचुम्बिनो वा पारावारवारिराशेर्विपुलोच्छ्वासं विलोक्य पतति प्रणामाञ्जलिश्चरणकमले कमलायमाना सौन्दर्य्यमूर्त्तेर्न वा प्रशान्यते हृदयं महत्त्वोदयेन। देशभ्रमणञ्चादरादुदारक इव अनुसन्धित्सुतादिभिर्विविधैर्गुणपुष्पमालिकां विधाय भूषयति कण्ठमाश्रयिनः, अपनयति ज्ञानस्य कटुतां, प्रयच्छति च चारित्रनिर्माणे विपुलं पदन्धाम्। नूतनवस्तुसन्दर्शनेन ज्ञानजननहेतुभूतां जनयति चित्ते पृच्छाप्रवृत्तिं।

अनेनान्यसमाजतुलनया स्वसमाजस्य दोषगुणनिर्णयात् सामाजिकोन्नतिलुप्तप्रायैतिहासिकक्षर्त्तेरनुसन्ध्य। यदेतिहासिकोन्नतिः प्रचुरनिसर्गसौन्दर्य्यालङ्कृतस्य सत्यवृत्तस्य भ्रमणवृत्तान्तस्य निबन्धनादुन्नतिविशेषयते, पुनः साहित्यस्यापि। सम्प्रति एषादिति पृच्छा कथमिदं देशाटनमस्मच्चित्तेषु प्रियतमा इव हर्षं जनयति? किमस्य वा हर्षजनने हेतुतया चकास्ति। वयन्तु तर्कयामः, यदेकं किञ्चिद्विषयं पुनःपुनरुपभुज्य नितरामन्तःकरणं विरक्तीभवति, प्रार्थयते च नूतनं किमपि विषयान्तरं एष एवास्य स्वभावः, तस्य तु देशाटनेनैव जायते चरितार्थता स्फुरति चानयानन्दः।

अटनमिदानीं प्रचुरप्रसारतामुपगतम्। दृश्यते च कस्मिन्नपि अवकाशकाले परःसहस्राः नागरिकाः सौन्दर्य्यपिपासोर्हृदयस्य

परिषत् प्रवर्त्तितश्च तत्र प्राचीनविद्यापरीक्षणं सूक्ष्मसमीक्षापरैः पण्डितैः प्राच्यविद्यासम्पन्नानां विद्यार्थिनाम्। तदानीं महात्मा शिवचन्द्रसार्व्वभौमः स्वभवने बहूनामन्तेवासिनां नानाशास्त्रविषयानुपदिशन्नसीमां कीर्त्तिपरम्परामधिकुर्व्वन्नास्त। एवं स्थिते तस्य सयत्नमध्यापनप्रकारे प्रकाशं गते च क्रमेण बहुविधपण्डितगुणस्तोमे तदीयाध्यापकप्रवरः सूक्ष्मतत्त्वपारदर्शी न्यायपरमाचार्य्यः महामहोपाध्यायराखालदासन्यायरत्नः राजकीयसंस्कृतमहाविद्यालयाध्यक्षः महामहोपाध्यायमहेशचन्द्रन्यायरत्नश्च तरुणवयसं शिवचन्द्रं तत्र परीक्षादानार्थं प्रवर्त्तितवन्तौ। प्रवर्त्तितश्चायं श्रीमान् तत्र न्यायशास्त्रीयचरमपरीक्षां वितीर्य्य सर्व्वोच्चं पदमधिकृत्य प्रतिमासं रूप्यकत्रयरूपवृत्तिलाभयोग्यतामाससाद, प्रतिदिशमशेषविद्यावदातमनसा विशदकीर्त्तिधारामधिगत्य पूर्व्वतोऽपि विशेषरूपेण आग्रहेण प्रक्रान्तमध्यापनं परिचालयितुमारेभे, स्वजनाः सर्व्व एव परितोषमनुभवन्तः परिगमच्चयामासुः।

अत्र तु विशेषेण वक्तव्यमिदमस्ति यत् प्रतिमासं वृत्तिलाभयोग्यतामधिगत्यापि श्रीमान् शिवचन्द्रो नैव परिजग्राह तां गुणपुरस्कारभूतामपि राजदत्तां वृत्तिम्। यतस्तदानीन्तनसामाजिकावस्थानादेव समवर्त्तत, शिवचन्द्रस्य जनकः रघुमणिविद्याभूषणः मनस्यकरोत, यथा परीक्षामुत्तीर्य्य ब्राह्मणभिन्नानां, समीपतो वृत्तिग्रहणमन्याय्यमिति, तेनापि भज्यते स्वकुलस्वीकृताशूद्रप्रतिग्रहप्रकर्षः तदिदं मानेन कथमपि ग्रहणीयमिति।

अनया परीक्षया शिवचन्द्रस्य गुणान् निःशेषमधिगम्य महामहोपाध्यायमहेशचन्द्रन्यायरत्नमहोदयः तत्र सातिशयां प्रीतिं पुपोष। ततः प्रभृतेरवासौ शिवचन्द्रं सादरेण चक्षुषा पर्य्यालोकत।

ततः कतिपयदिवसानन्तरञ्च राजकीयसंस्कृतपरीक्षायाः प्रथमद्वितीयोपाधिप्रभृतिप्रकारभेदा न्यायरत्नपादैः प्रवर्त्तिताः मुद्रायन्त्र-

सहायकेन मुद्रापितेषु च बहुषु शास्त्रेषु नानाविधपरीक्षापाठ्यरूपेण बहवो नूतना ग्रन्था व्यवस्थापिता अभूवन्, तदानीं परीक्षानियमभङ्गो-त्कंथ पाठार्थिनां बहवो नूतनग्रन्थाध्यापना कर्त्तव्येति विचिन्त्य तेषां नूतनग्रन्थानामतिपरिश्रमेण स्वयमालोचनया तत्त्वमुद्घाट्य तदानी-न्तनानां छात्राणां तेनाध्यापना प्रारब्धा, लब्धञ्च पठितशास्त्रप्रभावाति-शयेन तत्र तत्र सुमहत् तत्त्ववेदित्वम्, विजयमुपलेभे च सर्व्वार्थकषण-शक्तिशालिनो महात्मनस्तस्य साधारणविलक्षणा तर्कप्रतिभा। य एवान्तेवासिनः सकृत् तदान्तिके शिष्यपदमध्यासीनाः शास्त्रोपदेश-मासादितवन्तः, ते तदीयाध्यापनानैपुण्येन सरलमधुरेण स्वभावेन शिष्येषु पुत्राधिकस्नेहपारवश्येन च वशीकृता मुग्धा इव व्यतिष्ठन्त। नान्यत्र तनुमपि पाठनिर्ब्बन्धमन्तरे व्यदधुः।

महात्मनः सार्व्वभौमस्य संसारे अर्थस्य महानभाव आसीत्, दारिद्र्येणाभिभूतस्तत्रभवान् केवलमीश्वरं शरणं मन्यमानः स्वीय-शास्त्राध्ययनं सफलं कर्त्तुकामः प्राचीनरीतिमनुरुन्धानश्च बहूना-मन्तेवासिनां स्वगृहे तासाहारौ व्यवस्थाप्य सविशेषमध्यापनं प्रवर्त्त्य परां चित्तशान्तिमासादयामास। प्रायेण प्रतिदिवसमेव स्वगृह-स्थितानां छात्राणां भोजनादिव्ययनिर्व्वाहाय महतीव चिन्ता तस्य समजायत, परं परमेश्वरे तथा निर्भरातिरेकेण न कदापि भोज्यादि-संग्रहः सुतरामशक्य आसीत्, यथा कथमपि तन्निर्व्वाहेण क्रमेण परमेशभक्तिः सुदृढ़पदवीमङ्गीचकार, प्राचीनसंस्काराश्च हृदयतल-मसामान्यतया समलञ्चक्रुः। श्रुतमस्माभिस्तस्यैव महामहिम्नो गौरवमयजीवनस्य गुरुवरस्य मुखादेकदा, यथा—यस्मिन् समये तत्र-भवान् सार्व्वभौमः सार्व्वभौमसनातनधर्म्मे परं विश्वासमास्थाय विद्या-दानदुर्व्विदग्धो निजं दारिद्र्यं अवगणय्य शास्त्रतत्त्वोपदेशमेकान्ततः कर्त्तव्यमवधार्य नानादिग्देशगतानां छात्राणामात्मगृहे स्थानमाहा-रञ्च व्यवस्थाप्य पाठयन् कालं यापयामास, तदानीमेकदा प्रातः-

प्रभृति छात्राध्यापननिरते महर्षिकल्पे सार्व्वभौमे मध्याह्नकालं यावत् अनालोकितसंसारवृत्ते गृहमाहार्य्यवस्तुशून्यमवलोक्य जगज्जननीव जननी असितकरा देवी पुनःपुनः स्वगृहे तण्डुलाद्यभावमावेदयितुमभिलषन्त्यपि तदवसरमनाप्नुवती मध्यन्दिने पाठावसाने सार्व्वभौममावेदयामास संसारवृत्तं, यथा गृहे किलाद्य सर्व्वमेव निरवशेषं तण्डुलादिकं, तत् कतमस्तावदुपायो वत्सानामन्तेवासिनामाहाराय क्रियताम् इति। अथ मध्याह्ने सहसा वज्रोपहत इव विकारम् गतो नावधारयितुं शशाक श्रीमान् सार्व्वभौमः किमिदानीं प्रतिविधेयं, को वा अद्यास्मिन् मध्यन्दिने गगनाङ्गनमारूढ़े तपनकिरणे तावतां भोजनयोग्यानि वस्तूनि प्रदेयात्, नास्ति च तैजसमपि पात्रं तथा किमपि गृहे येन विक्रीतेनार्थमाहृत्य क्रियतामद्यतन भोजनादिनिर्व्वाहः। असौ च मात्सपिढमसोपभ्रष्टाः पितरावेव सम्भाव्य सर्व्वमाकाङ्क्षितम् आवयोरेव न्यस्य कति मद्गृहमध्यासते भद्रतमगृहस्थसन्तानाः। ( क्रमशः )

## समालोचनम्।

संस्कृतव्याकरणोपक्रमणिका—( पूर्व्वार्द्धः ) श्रीयुक्तराजेन्द्रनाथघोषमहाशयेन सम्पादिता। मूल्यम् सपादरूप्यकम्।

पुण्यस्मृतेरीश्वरचन्द्रविद्यासागरमहाशयस्य तदाख्यां कृतिमेव यथा कोमलमतीनां बालानां बोधसौकर्य्यमापद्येत, तथा तथा संस्कृत्य बहुभिश्च दृष्टान्तादिभिः समलङ्कृत्य घोषमहाशयः प्राकाश्यं नीतवान्। अनेकैरेव संस्कारः संस्कृतानि पुस्तिकाया अस्या अनेकान्येव संस्करणानि समुपलभ्यन्त इदानीम्। परं प्रायेण तेषां सर्व्वेष्वेव एकैव

सरणिरालम्बितोपलक्ष्यते, यथा अचिरतुमनसां शिशूनां बोधः सम्यक् नैव समुत्पद्यते। इममितालापयन् दोषम अनल्पं क्लेशमङ्गीकृत्य घोषमहाशयया बालानां बाधापादनार्थं नवानया कयाचित् शैल्या पुस्तिकामिमां सम्पादयन संस्कृतपाठार्थिनां नवीनानां साधुवाद-भाजकता गतः।

---

## परिषत्सन्देशः।

अप्रकाशितानां दुर्लभप्रचाराणाञ्च पुरातनानां परमोपयोगवतां संस्कृतग्रन्थानां प्रकाशनं संस्कृतसाहित्यपरिषदो मुख्यं किमपि लक्ष्य-भूतमिति सर्व्वे एव अवगच्छन्ति सदस्य वर्य्याः। परमितः पूर्व्वम् तादृशार्थस्यासद्भावात् तदुद्देश्यं सम्पादयितुमप्रभवा वयं नितरां विषण्णविषण्णा इव कालं नीतवन्तः। अधुना च भगवतः प्रसादात् तस्मिन् अशेषोपयोगवति कार्य्यविशेषे प्रवर्त्तमानानामस्माकं साफल्यं जगदीशो विधास्यतीत्याशंसामहे। तत्त्वग्रन्थानां दुर्लभ-तया परमोपयोगवत्तया च प्रथमं अस्माभिः 'कालीतन्त्रा'भिधेय-स्तन्त्रविशेषः प्रकाशयिष्यते। कतिपयलिखितादर्शालोचनपुरःसरं प्रारब्धं पुस्तकस्य प्रतिलिपिनिर्म्माणकृत्यम्। प्रार्थयामहे वयं सानुनयं यथा परिषदः सदस्या अनुग्राहकास्तथा संस्कृतसाहित्यानु-शीलनपरास्तान्त्रिकाश्च लिखितादर्शोपनयनेन अन्यथा वा तथा-स्माकं साहाय्यं विदधतु, यथा त्वरितमेव पुस्तकमिदं प्रकाशतां गच्छेदिति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—वैशाखे, ५म वर्षस्य १म संख्या ।

## काशीश्वराष्टकम् ।

( लेखकः—महामहोपाध्यायः श्रीप्रमथनाथतर्कभूषणः । )

काशीश विश्वेश महेश शम्भो
भूतेश गौरीश गिरीश नाथ ।
मग्नं भवाब्धौ शरणागतं मां
त्रायस्व निष्किञ्चनमार्त्तबन्धो ॥ १ ॥

कृपा विधेया पतिते मयीति
त्वामर्थये किं पुनरन्तरात्मन् ।
अदृष्टकालप्रकृतीश यत् स्यात्
तवेहितं तद्भवतीह नान्यत् ॥ २ ॥

त्वं सौरभं गिरिश पुष्पचये, सुधांशौ
ज्योत्स्ना, प्रभा दिनकरे, भ्रमरे रुतञ्च ।
सौन्दर्य्यमस्यमरवन्दितहृद्यवृन्दे
न त्वदृते यदिह किञ्चन तद्भजे त्वाम् ॥ ३ ॥

दुर्दैवमस्यखिलनाथ दुरात्मसु त्वं
श्रद्धातपःसुकृतमप्यसि सत्सु भूमन् ।
मिथ्यैव कल्पितमिदं सदसत्त्वयोर्मे
त्वन्मायया कुरु कृपां विजहातु सा माम् ॥ ४ ॥

कामादिषड्रिपुनिषेवणमूढचेता
अप्यस्मि शङ्कर तवैव तु किङ्करोऽहम्।
एतद्विचार्य्य सुरवर्य्य यदत्र कार्य्यं
तत् साम्प्रतं शिव विधेहि कृपामृताब्धे ! ॥ ५ ॥
आबाल्यतोऽस्मरहमिकाकलुषात्मवृत्ति-
स्तैस्तैर्मनो विलसितैर्विचरन् मुधैव।
वार्द्धक्यरोगहतशक्तिचयः पुरारे
धर्म्मार्ज्जनेऽहमधुना कुशलः कथं स्याम् ॥ ६ ॥
न श्रद्धा, न तपो, न चापि नियमो, न ब्रह्मचर्य्यं, न वा
वेदान्तश्रवणं, न वा शमदमौ, ध्यानं न, मौनं न च।
किन्त्वेकः प्रमथाधिनाथ सुदृढश्चित्तेऽस्ति मे प्रत्ययः
काश्यां यत्त्वमधीश दुर्गतजनान् त्रातुं सदा मूर्त्तिमान् ॥ ७
मत्तुल्यो न हि कोऽपि दुर्गतनरः लोकोतले वर्त्तते
त्वत्तुल्योऽपि न विश्रुतस्त्रिभुवने सन्तारकः सर्व्वतः।
एतच्चेतसि संविचार्य्य गिरिजाकान्त त्वदङ्घ्रिद्वयं
संप्राप्तोऽस्म्यखिलार्थदं भयहरं यत् साम्प्रतं तत् कुरु ॥ ८

---

## वर्षावतरणिका।

नववर्षारम्भे यथायथमभिलषितार्थसुखसम्पादनहर्षपरवशानाम् आकं प्रथमतो नतिर्निखिलकार्य्यजातं सहेलं सम्पादयतो धर्म्मार्थ-काममोक्षलक्षणानां चतुर्णां परिपोषकस्य करुणानिलयस्य परमेश्वरस्य पदारविन्दद्वन्द्वे, ततश्च सबहुमानं सनमस्कारंससम्भ्रमञ्च समावेदनं अस्माभिः सह समसुखदुःखानां सदैव अस्याः पत्रिकायाः समुन्नति-कामानाम् अनुग्राहकाणां ग्राहकाणां सदयानां सदस्यानाञ्च सविधे

यत्तेषामेव सानुग्रहदृष्ट्या क्रमपरिपुष्टावयवेयं परिषत्पत्रिका सहेलं तादृशं तादृशं सुबृहत् कार्य्यजातं सम्पादयन्ती चतुर्थमपि वर्षं समतिक्रान्तवती सहर्षमिति। अतीते च वर्षे अपारशास्त्रसागरसमुत्तीर्णाना मनेकेषामपि प्रथितयशसां पण्डितमण्डलीमण्डनानां सरससरलमधुरपदावलिगुम्फितानां सुचिन्तितार्थनार्थानां प्रबन्धबन्धानां समवायेन कीदृशं सौन्दर्य्यसम्भारमुपदिर्य तत् त एव जानन्ति, ये तावत् महानुभवा आत्मबुद्ध्या परमस्याः सुखसमृद्ध्यादिदर्शनलोलुपाः आसन्। आशास्यते च चिरमस्यां तत्रभगवतो भगवतः एतादृश्येव करुणा, प्रार्थ्यते पुनः सदयानाम् इतोऽपि समधिकम् अनुग्रहादिकम्, येनेयं विपर्य्यस्तसुखसौभाग्यस्य भारतवर्षस्य भावान्तरसम्पादने प्रभविष्यतीति।

सर्व्वं एव जानन्ति यन्नेयं पत्रिका संदेशमात्रप्रदायिनी, न वा काव्यरसालापविमुग्धा रसिकजनमात्रसेव्या। अनवद्येयं धर्म्मादिनिखिलजातीयभावसाधनपरायणेति सामाजिकानां समाजजीवनं धार्म्मिकाणां धर्म्मम् आचारपराणामाचाराह्निकं सर्व्वं सम्पादयिष्यतीति अस्याः संरक्षणे सहजतः एव यत्नपराः भविष्यन्ति समाजधर्म्माचारपरायणाः सततम्। तथापि येनेयं वर्त्तमानवर्षे दीर्घजीविताः परिपुष्टा च पूर्व्वपूर्व्वतोऽपि तुष्टिं जनयिष्यति सहृदयानां तथैव यत्नपरा भवन्तु भवन्तः इति भूयोऽपि भवतामनुकम्पां प्रार्थयाम इति शम्।

## समालोचनम्।

( लेखकः—श्रीअनन्तकृष्णशास्त्री वेदान्तविशारदः। )

श्रीयुक्तमाधवमुकुन्दचरणविरचितम् श्रीनित्यस्वरूपब्रह्मचारिप्रकाशितञ्च निबन्धम् परपक्षगिरिवज्राख्यं साक्षात्कृत्यात्यन्तमेवानन्दिता वयमत्र किञ्चित् समालोचयामः।

अयं हि निबन्धः श्रीनिम्बार्कमतानुसारी श्रीमदद्वैतमतनिरास-भूयिष्ठश्चेति सर्व्वत्र विदितमिदम्। अत्र च परपक्षपदेन कुत्र कुत्र-चन श्रीविशिष्टाद्वैतसिद्धान्तादीनामपि निरासेऽपि प्रचुरनिरासास्पद-मद्वैतसिद्धान्त एव ग्रन्थकाराणामभिमतः। एवमपि महनीये श्रीमदद्वैतसिद्धान्ते न ग्रन्थकाराणामेषामतिक्षुद्रत्वबुद्धिर्वर्त्तत इति परपक्षस्याद्वैतसिद्धान्तस्य गिरित्वरूपणेन वयं जानीमः।

अत्र च ग्रन्थकारैः स्वग्रन्थस्य वज्रत्वं यन्निरूपितम्, तेनेदमव-गम्यते,यदद्वैतसिद्धान्तस्यानेन पक्षच्छेदेन सर्व्वतो विसर एव प्रतिबध्यते, न तु समूलघातं हन्यत इति। न हि इन्द्रेणापि गिरयो नाशिताः किन्तु विपक्षा एव कृता इति तु सर्व्वविदितम्। इदन्तु विपक्षी-करणमिदानीं वयमपेक्षामह एव। यत् ब्रह्मैकमेव सत्यम्, मिथ्या प्रपञ्चो, न वर्णा न वा आश्रमा न वेदा न स्मृत्याचारादयः, सर्व्वमेकम् इत्याद्यद्वैतसिद्धान्तो ह्युत्तमाधिकारिगोचरोऽधुनातनानसंमदा-दीनधमाधिकारिणः समूलघातं घातयेत्।

तथाच सर्व्वदर्शनगरिष्ठस्य सर्व्वदर्शनभूषणस्य सर्व्वोपनिषद्-गम्यस्य दुरूहस्य दुरुच्छेदस्य चाद्वैतसिद्धान्तस्य न कोऽपि पारयति कर्त्तुमुच्छेदमिति जानन्तो वयम् परपक्षगिरिवज्र इत्यभिधानमस्य निबन्धस्य रमणीयमेव मन्महे।

ये हि केचनास्य निबन्धस्याद्वैतसिद्धान्तासाधुताप्रतिपादनेन तदुच्छेदन मेव परमं तात्पर्य्यमिति वदन्ति, तेषामिदमभिधानम् नानुगुणमिति निवेदयामः। न हि शङ्करभगवत्पादा अपि सर्व्वाधि-कारमद्वैतसिद्धान्तं मन्यन्ते, न हि ते विना वर्णाश्रमधर्म्मं विना वेदं विना स्मृत्याचारदिकं विना सगुणोपासनञ्च अद्वैतसिद्धान्तं प्रवर्त्त-यन्ति स्म। न ह्यन्तरेण धर्म्मसंस्थापनमद्वैतस्थापनमात्मानं लभते। अत्र हि भगवत्पादानाम् धर्म्मसंस्थापनाचार्य्यत्वप्रसिद्धिरपि सर्व्वेषां विशेषतः उपकुर्य्यादित्यत्र न वयं विषयलेशमपि पश्यामः। "वर्णो-

ज्ञाते मनस्येषां सगुणब्रह्मशीलनात्" इति वदन्तो भामतीकल्पतरुकारा अपि सर्व्वेषां प्रथमकर्त्तव्यं सगुणोपासनमेव, तत एव निर्गुणसाक्षात्कारो भवितेति निरूपयन्तोऽस्माकमवलम्बा भवन्ति ।

सगुणोपासनाकर्त्तव्यताबुद्धिश्च समेषाम् तदैव भवेत्, यदि सगुणवाक्यान्यपि प्रामाण्यम् लभेरन् । तत्प्रामाण्यञ्च तदैव स्यात् यदि भेदादिकं सत्यमिति श्रीमद्रामानुजश्रीनिम्बार्कश्रीमध्वाचार्य्यादयो "न बुद्धिभेदं जनयेदज्ञानां कर्म्मसङ्गिनाम्" इति न्यायेन सविशेषब्रह्मवादं समर्थयामासुः, निर्व्विशेषब्रह्मवादञ्च दूषयामासुरिति । श्रीमताम् भगवद्रामानुजाचार्य्यादीनामपि न हि निन्दा, निन्दा निन्दितुं प्रवृत्ता, किन्तु स्तुत्यं स्तोतुम् इति न्यायानुसार्य्येव स्वमतस्थापनमिति जानीमः ।

न हि निन्दान्यायो हि तत्रैव भवति, यत्र निन्दितं कथञ्चिदपि सूक्ष्मेक्षिकया पर्य्यालोच्यमानम् न अप्रामाणिकं भवतीति न चार्व्वाकादिदर्शनमपि उक्तन्यायेन सर्व्वादरणीयतामर्हति । अद्वैतसिद्धान्ते हि यानि दूषणानि प्रकृतनिबन्धकारैरन्यैर्वाचार्य्यैरुपनिबद्धानि, न हि तेषाम् सूक्ष्मदृष्ट्या पर्य्यालोचने अवकाशोऽस्तीति तु वयम् अद्वैतसिद्धान्तादिबहुविधदुरूहाद्वैतनिबन्धावलम्बनेन निश्चिनुमः ।

भगवद्रामानुजाचार्य्याभिमतो नारायणपरमात्मतावादः, श्रीनिम्बार्काचार्य्यसिद्धान्तस्य विशेषोऽप्ययमेव यदिमे श्रीराधाकृष्णमेव परमात्मानं मन्यन्त इति प्रकृतग्रन्थोपक्रमे "श्रीराधाकृष्णाख्यमहसे नमः" इति निर्द्देशेन सूचितम् ।

अत्र च अद्वैतिनां मते श्रीराधाकृष्णस्य भगवद्विभूतित्वमेव न परमात्मत्वम् "वृष्णीनां वासुदेवोऽस्मि" इति गीतावाक्यादिति सर्व्वविदितमिदम् । भगवद्विभूतेरपि श्रीराधाकृष्णस्य अचिन्त्यापरिमेयशक्तिकस्य निर्व्विशेषब्रह्मप्रत्यासन्नस्य च उपास्यत्वम् नम्यत्वं महत्त्वञ्च

अद्वैतिनामपि सम्मतमेवेति वयमपि "श्रीराधाकृष्णाख्यं महसे नमः" इति वाक्यमेवैतत् समालोचनसमर्पणार्थम् निर्व्विशेषब्रह्मस्वरूप साक्षात्कारार्थञ्च शतकृत्व आवर्त्तयामः। ये हि मधुसूदनसरस्वती-पादाः अद्वैतसिद्धान्तव्यवस्थापनमुखेन निराकारब्रह्मवादम् समर्थयामासुः, तेऽपि हि "कृष्णात् परम् किमपि तत्त्वमहं न जाने" इत्येव लिखन्तोऽस्मदादीनाम् श्रीराधाकृष्णभजनम् तन्नामजपः तत्स्तुतिश्च सर्व्वथाऽद्वैतविश्वासिनामपेक्षितमेव।

अत्र हि प्रबन्धे प्रथमतः श्रीमद्भगवद्वासुदेवावतारत्वम् वेद-विभक्तृत्वम् भारतादिविधातृत्वम् मुमुक्षुजनानुकम्पया शारीरक-मीमांसाख्यवेदान्तशास्त्रसूत्रयितृत्वञ्च भगवद्बादरायणस्य यदुप निबद्धम्, न तत्र कस्यापि विवादः। एतेन श्रीनिम्बार्कपरम्परा-सम्प्रदायोऽपि प्रकृतग्रन्थे निरूपितो व्याख्यातः। न हि तत्रापि कस्यापि विप्रतिपत्तिः।

यत्तु पुनः—भगवद्भक्तिभावापत्तिलक्षणमोक्षकामो दर्शनश्रवणा-दीष्टसाधनसम्पादनसमर्थोऽभीष्टफलसाधनविषयकविद्वत्ताश्रयो वेदान्त-शास्त्रस्याधिकारी। तथाभूताधिकारसिध्यये गुरूपसत्तिः वस्तु याथात्म्यविवेकः विरागो भगवत्प्रपत्तिः तदनुग्रहप्रार्थनादीनि साधना नीतिविवेक इति वर्णितम्, तदिदं श्रीविशिष्टाद्वैतिनाम् यद्यपि प्रतिकूलम् कर्म्मावबोधवत एव तैरधिकारित्वाभ्युपगमात्, तथापि नाद्वैतिनां प्रतिकूलम्। अद्वैतिना हि यद्यपि साधनचतुष्टयसम्पन्नोऽधिकारीति विविच्यन्ति, तथापि ब्रह्मविद्याभरणादौ साधनत्रयसाध्य मुमुक्षाया एवाधिकारित्वविशेषणव्यवस्थापनस्यानुपपन्नमिति जानीमः।

अत्र च कर्म्मब्रह्मजिज्ञासयोः भिन्नाधिकारिकत्वमेवाद्वैतिनामिव श्रीनिम्बार्कानुसारिणामपि सम्मतमिति पूर्व्वोत्तरमीमांसयारेक-शास्त्रेऽपि नाऽद्वैतिभिर्विरोधः। यदत्र भगवत्प्रपत्तिरपि मुमुक्षासा-धनमिति निरूपितम्, तदिदम् श्रीविशिष्टाद्वैतिनाम् मार्जारकिशोर

न्यायानुसारिणि मर्कटकिशोरन्यायानुरोधिनि च सम्प्रदायद्वयेऽपि विरुद्धमेव।

भगवत्भावापत्तिर्मोक्ष इति—यदुक्तं तत्र भगवद्भावपदेन भगवत्साधर्म्यमेव विवक्षत इति गिरिवज्राकाराः द्वितीयवज्रे निरूपयन्ति। इदम यद्यपि श्रीविशिष्टाद्वैतिनामपि समानम्, तथाप्यद्वैतिनां विरुद्धमेवेति किमत्र युक्तमिति विचारयामः।

"मद्भक्त एतद्विज्ञाय मद्भावायोपकल्पते" इति वचने हि भगवत्स्वरूपविज्ञानेन भगवद्भावो यो निरूप्यते स भगवद्व्यतिरिक्तेष तस्य स्वभावलक्षणम्, ब्रह्मात्मैक्यमेव। परीक्षा विज्ञातं रजतम् शुक्तिर्भवतीत्यादौ हि न साधर्म्यं भवति-शब्दार्थः। अत एव "ब्रह्मविद् ब्रह्मैव भवती"ति वाक्यजातम् उपपद्यते।

"इदं ज्ञानमुपाश्रित्य मम साधर्म्यम् आगताः" इति वचनम् मूलम्। "मद्भावाये"ति वाक्यम् विवरणमिति कल्पनैव हि साधीयसी। यतोऽत्र मम साधर्म्यमिति वाक्यं पूर्व्वतनम्, "मद्भावाये"ति वाक्यं पाश्चात्त्यम् मूलव्याख्यानयोरिवहि पूर्व्वापरभावः सम्प्रदायसिद्ध इति गिरिवज्रकाराणाम् "मम साधर्म्य"मिति वाक्यस्य पूर्व्वतनस्य भावि "मद्भावाये"ति वाक्यविवरणत्वोक्तिः कथमुपपद्येतेति न वयम् जानीमः। एतेन "निरञ्जनः परमम् साम्यमुपै"ति इत्यादि वाक्यान्यपि व्याख्यातानि उपक्रमोपसंहारादिभिरेषामद्वैताभिप्रायत्वस्य स्पष्टमद्वैतसिद्धिद्वितीयपरिच्छेदेऽस्मदीयतद्भूमिकायाञ्च निरूपणात्।

अस्तु वा कथञ्चित् वाक्यव्याख्यानसामञ्जस्यादिकम् कस्मिन्नपि मते। वाक्यव्याख्यानम् हि यथायोगं लक्षणादिना सर्व्वेषाम् सर्व्वत्र उपपद्येत एव, परन्तु प्रकृते किमर्थम् साधर्म्यमेव मुक्तिरिति निरूप्यते, कथं ब्रह्मात्मैक्यमेव मुक्तिर्न भवतीति तु विवेचनीयम्।

( क्रमशः )

# "भट्टिकाव्यम् तस्य प्रणेता च।"

( लेखकः—श्रीअश्विनीकुमारकाव्यव्याकरणतीर्थः। )

अस्य प्रबन्धस्य उपजीव्यविषयस्तावत् व्याकरणानिपुणानाम-ज्ञानतमोराशिदूरीकरणशीलं भट्टिकाव्यं, तस्य रचयिता च। तत्र प्रथममेव यतिषेत्र निर्णेतुं यत् कस्य नाम महात्मनः सुबुद्धिप्रसूतं प्रसूनमिव हृदयानन्दवर्द्धनं काव्यमिदम्। नानापथयुषां चतुर-समालोचकानां रुचिवैचित्र्यात् गरीयसी विप्रतिपत्तिरुपलभ्यतेऽस्य नामनिर्णयविषये। तेषाञ्च समालोचकानां केचन भट्टिः, भट्टश्च, केचन भट्टस्वामी, अन्ये: स्वामिभट्ट अपरेच भर्त्तृहरिरिति बहुभिरेव विभिन्नैरभिधानैरभिधीयते भट्टिकाव्यप्रणेता। सत्यपि ईदृशे बहुशो विसदृशवितर्कवादे भट्टिकाव्यप्रणेता भर्त्तृहरि-रित्यत्र तु बहूनामेव विपश्चितां मतसाम्यमासादयामः। तथाहि—नारायणविद्याविनोदाचार्य्यो भर्त्तृहरिरितिनाम व्याख्यातवान् भट्टि-बोधिनीटीकायाम्, भट्टिचन्द्रिकाटीकाकारोऽपि तस्यैव मतमनुससार। वैजयन्तीनामटीकाकारस्य कन्दर्पचक्रवर्त्तिनस्तथा मुग्धबोधिनीटीका-प्रणेतुर्भरतसेनस्यापि उल्लिखितेऽस्मिन् नाम्नि एव ऐकमत्यमव-लोक्यते। बोम्बेप्रदेशान्तर्गतः पण्डिताग्रगण्यः त्रिवेदी अपीदम-माकलयति यत् भट्टिशब्दो हि भर्त्तृशब्दस्य प्राकृतरूपम्, अतो य एव भट्टिः स एव भर्त्तृहरिरिति। मल्लिनाथः पुनः स्वरचितायां सर्व्वपथी-नाख्यायां कवेर्भट्टिरित्याख्यानमाद्रियते। जयमङ्गलोऽपि मल्लिनाथ-कथितमतमेव स्वीचकार। मल्लिनाथजयमङ्गलावतीत्य कीर्त्तयन्ति च बहव एव पण्डितमण्डलीमण्डनाः लब्धयशसः कोविदाः, यथा वैयाकरणकेशरिणः कविशिरोमणीनामन्यतमस्य च यस्य 'वैराग्य-शतकं' 'नीतिशतकं' वाक्यपदीयमित्येते अन्ये च ग्रन्थाः शान्तरसच्छ-टामय इवोत्पादयन्ति अशेषं विस्मयं जनानां, पातयन्ति च काव्यरस-

सरसिकान् सहृदयान् पाठकानपूर्व्वे सुधाम्बुधौ, तस्य सुविदितनाम्नो भर्त्तृहरेरेव सुलेखनीनिर्गतमेतत् काव्यमिति । का वा युक्तिः, कानि वा कारणानि तेषामेवंविधनिश्चयविषये इत्येतत् सर्व्वमेवास्माकमविदितम् । किन्तु भर्त्तृहरिराजस्य स्वरचितग्रन्थात्, विश्वकोषात्, भर्त्तृहरिनिर्व्वेदनामकनाटकात् तथा शिरोमणिकृतशब्दार्थमञ्जरी नामकाभिधानाच्च ज्ञायते यदासीत् अवन्तीजनपदे कश्चित् भुवो भर्त्ता भर्त्तृहरिर्न्नाम । योऽसौ कुतश्चित् कारणात् प्रियाणामपि दाराणां व्यवहारवैधम्यादनितरोऽस्मिन् संसारे निस्पृहः सन् वैराग्यपथमनुसृत्य वाराणसीं जगाम । ततश्च तत्र वैराग्यशतकादीननेकानुत्तमान् ग्रन्थान् व्यरचयत् । स आसीत् वैयाकरणमुख्यः कविप्रधानश्चेत्यतस्तेनैव भर्त्तृहरिणा इदमपि भट्टिकाव्यं निरमायीति तु न साधीयान् पक्षो मन्ये, यतो जन्मना पवित्रीकृतराजकुलस्य अभिमानवतो नरपतेः परमण्डलवासित्वं पराश्रितत्वञ्च न सम्भवतीत्यत्र वितर्कलेशोऽपि नास्ति । परदेशवासित्वानुमितिस्तु कवेः स्ववचनेनैव निर्णीतं भवति, तथाच ग्रन्थावसाने परिचयप्रदानच्छलेन कविराह "काव्यमिदं विहितं मया वलभ्यां श्रीधरसेननरेन्द्रपालितायाम् । कीर्त्तिरतो भवतान्नृपस्य तस्य प्रेमकरः क्षितिपो यतः प्रजानाम् ।"

अथ यदि केचन तादृशीं मतिमवलम्बेरन्, यदासीत् नरपतेरन्य एव कश्चित् भर्त्तृहरिभर्त्तृहरिरिव गुणान्वितो वलभीनगरे इति, तर्हि न विरुद्धं वाच्यमस्ति किमपि, किन्तु प्रमाणलाभोऽपि न सुलभ एव । वयन्तु मल्लिनाथजयमङ्गलयोर्मतं मनसि निधाय मन्यामहे, यदत्र बहुशः कष्टकल्पनया किम् । भट्टिरेवास्य काव्यप्रणेतुरभिधानमिति स्वीकारेऽपि के नाम दोषाः समुत्पद्यन्ते तन्न जानीमहे । यथा शिशुपालवधस्य माघकृतत्वेन माघ नाम, किरातार्ज्जुनीयस्यापि भारविरचितत्वात् भारवीत्याख्यानमाख्यातमस्ति, तथा अस्यापि काव्यस्य भट्टिविरचितत्वात् भट्टिरिति कवेर्नाम्नैव लोकैर्गीयते । क्षेमेन्द्रोऽपि

तस्य 'सुवृत्ततिलक'-नाम्नि ग्रन्थे तृतीयविन्यासारम्भे भट्टि रेवास्य नामेति कीर्त्तयति स्म। तथाच "शास्त्रकाव्यं चतुर्व्वर्गप्रायं सर्व्वोपदेशकृत् भट्टिभौमककाव्यादिकाव्यशास्त्रं प्रचक्षते।" एवं भट्टिरेव कवेराख्यानमिति वयमपि आकलयामः। इत्थं सत्यपि कथञ्चिन्नामनिर्णये कोऽयं भट्टिः, कतमत्तावदलङ्कृतं जन्मना कुलमनेन का वा जातिरस्य इतीरते प्रश्नाः स्वत एव समारोपयन्ति महान्तं सन्देहं चेतसि, पातयन्ति च रहस्यभेदे कृताध्यवसायान् लेखकान् महति अज्ञानतमसि। दृश्यते शिरोमणिकृत-"शब्दार्थमञ्जरी"-नामकग्रन्थे यथा "गुर्ज्जरदेशस्यान्तर्गतायां वलभीनगर्य्यामजायत महाकविर्भट्टिरिति। यस्य च जननी जन्ममात्रमेव प्रसववेदनाभिभूता परलोकमगमत्। भक्तानामग्रणीः ज्ञानोद्भासितमतिर्महात्मा जनकः श्रीधरस्वामी तु अनित्यसंसारस्यासारतामनुभूय पूर्व्वत एव निस्पृहोऽभवत् संसारे। प्रियाविनाशदुःखञ्च तस्य तन्निस्पृहत्वं द्विगुणीकृत्य तं संसारात् त्वरितं बहिश्चकार। नापि मायामयमत्त्वबन्धनं, न च स्वे हस्ताजामा-त्मीयानां ममता, न पुनर्नवजातस्य विलपतस्तनयस्य स्नेह-राशिस्तं वैराग्यबद्धं निवर्त्तयितुमलमासन्। ततश्च स्वनमृद्धायाः वलभीनगर्य्यास्तदानीन्तनो नरपतिः श्रीधरसेनः सममस्तमुदन्तं ज्ञात्वा कृपया तं शिशुं राजप्रासादमानीतवान् समर्पितवांश्च शिशोः पालनभारं धरण्या इव मन्त्रानप्रियायै प्रजापालकौ धात्रैः। शिशुरपि क्रमात् प्राप्तवयाः नरपतेरसाधारणयत्ने नोपाध्यायस्य कस्यचिदालये सत्शिक्षां लेभे। बभुव च अल्पेनैव कालेन प्रधानपण्डितानामन्यतमः स्वप्रति-भया, कीर्त्तिरपि तस्य स्वया सितज्योत्स्नया शुभ्रानाशामुखानुपहसितु-मिव चतुर्द्दिक्षु द्रुतं विचचार। स च कवेः प्रतिपालको वलभी-नगराधिपतिः श्रीधरसेनः स्वतनयानां संस्कृतभाषायां व्युत्पत्त्युपलब्धये तं गृहशिक्षकत्वेन नियोजयामास। नरपतेरभीष्टसिद्धये कृतमति-र्भट्टिरपि राज्ञे प्रतिश्रुतवान् यत् स वर्षेणैव राजतनयान् संस्कृतभाषाया

मनन्यसदृशान् विधास्यतीति। अथैकदासौ कविर्यदा राजतनयान् व्याकरणमुपदेष्टुमुपक्रान्तवान्, तदा कश्चित् पालितो हस्तिशावको मूर्त्तिमान् अध्ययनप्रत्यूह इव गुरुशिष्ययोरन्तरागच्छत्। प्रचलित-रीत्यनुसारेण च वर्षं यावदध्ययनस्य विरतिरपरिहार्य्याभवत्। भट्टिस्तु प्रतिज्ञापालनायातीवचिन्तितः सन् व्याकरणस्याशेषोदाहरण-समन्वितं "रामचरितं" "रावणवधं" वा नाम काव्यं विरचय्य राज-पुत्रानध्यापयति स्म, येन च कुमारा अपि वर्षेण व्याकरणनिपुणाः सुशिक्षिताः सुचरित्राश्चासन्। तदेव "रामचरितं" नाम काव्यं भट्टिना कृतमिति तन्नाम्नैव प्रथितमभवदस्ति च जगत्यस्मिन्।" एतावानेव भट्टिकाव्यप्रणेतुर्जीवनवृत्तान्त उपलभ्यते। भट्टिकाव्य-मतीत्य अस्य अन्ये ग्रन्था वर्त्तन्ते न वा तन्न जाने। प्राचीनात् कस्मा-च्चित् ताम्रशासनादनुमीयते इतिहासविद्भिर्यत् श्रीधरसेनः गुर्ज्जर-प्रदेशान्तर्गतायां वलभीनगर्य्यां खृष्टीयपञ्चशताब्द्याः शेषभागे सप्तम-शतकस्य च प्रथमे भागे राज्यमपालयत्। अतस्तदैव भट्टिना काव्य-मेतन्निर्म्मितमिति तु तद्वाक्येनैव प्रमाणितम्। यात्वलं पुनरपि अनिश्चितेतिहासस्य पर्य्यालोचनया, अधुना तु भट्टिकाव्य एव मनो-दीयते। तत्रभवतो जन्मना पवित्रीकृतसूर्य्यवंशस्य रघुकुलतिलकस्य रामस्य जन्मनः प्रभृति राक्षसवधात् परं पुनरयोध्यायां प्रत्यावर्त्तनरूप-वृत्तान्त एव भट्टिकाव्यस्य उपजीव्यविषयः। स खलु वैयाकरण-मुख्यः भट्टिरेतावन्तमेव वृत्तान्तं वर्णितवानस्मिन् भट्टिकाव्ये द्वाविंश-सर्गे। तेषाञ्च प्रथमे सर्गे इन्द्रपुरीमपि शोभया उपहसन्तीमयोध्या-नगरीमन्ववसन् प्रजावत्सलो दशरथः पुत्राभिलाषी सन् ऋष्यशृङ्गमुनिं स्वनगरीमानय्य पुत्रेष्टियागमकारयत्। येन रामभरतादयः क्रमात् जन्म उपलभ्य दशरथस्य परमां प्रीतिमुत्पादयामासुः। सत्सु च तेषु शिक्षितेषु रक्षोगणैरुद्वेजितैस्सन्निगमः सम्प्रेषितो विश्वामित्रनामा महामुनिर्दशरथात् रामलक्ष्मणौ यज्ञार्थं मुनीनां यज्ञस्थलं प्रा

प्रचलित:। द्वितीये—सलक्ष्मणो राम: विश्वामित्रेण सह गच्छन् पथि शुभशंसिनीं शरदो मनोहारिणीं श्रियमवलोक्यातिपरमां प्रीतिमवाप। ततो राम: विश्वामित्रात् बहूनि दीप्रास्त्राण्युपलभ्य शमनसदनं प्रेरयामास ताड़कानाम्नीं भीषणां राक्षसीम्। तत: लक्ष्मणसहायो मुनीनामाश्रममागम्य तत्र यज्ञविघ्नकारिणां रक्षसां कांश्चित् निहत्य कांश्चिच्च निराकृत्य तापसानामिष्टिमविघ्नं समपादयत्। अनन्तरञ्च महामुनिना विश्वामित्रेण रामस्य यशोराशिमाशासु विस्तारयितुकामेन तौ रामलक्ष्मणौ जनकस्य आश्रममानातौ। तत्र रामो हरस्य महद्धनुर्भङ्क्त्वा अपरूपां लक्ष्मीस्वरूपां सीतामुपयेमे। परिणयानन्तरं तया सह अयोध्यां प्रत्यावर्त्तमानश्च क्षत्रियकुलध्वंसकारिण: परशुरामस्य पराभवं विधाय सहर्ष: ससैन्य: स्वपुरमायात्।

तृतीये—दशरथ: सर्व्वगुणान्वितं सर्व्वेषामभिरामकञ्च रामं राज्यपालनक्षमं मत्वा तं यौवराज्ये अभिषिक्तुमैच्छत्। पौराश्चानया नरपतिरचितया रामाभिषेकवार्त्तयात्यर्थं प्रीता: समभवन्। रामस्याभिषेकं सोढ़ुमशक्नुवाना कैकेयी तु वरप्रार्थनया रामस्य वनगमनं घटयामास। सत्यसन्धो राम: पितु: प्रतिज्ञापूरणार्थमविगणय्य राज्यैश्वर्य्यं सीतया लक्ष्मणेन च सह दुर्गमसरण्यं प्रविवेश। पुत्रशोकाग्निना दह्यमाने नरपतौ प्राणान् त्यजति, भरतो मातामहभवनादागत्य तस्य पारलौकिकं कर्म्मजातं निवर्तयामास, ततश्च पौरजनै: सह रामं प्रत्यानेतुं वनमगच्छत्। तत्र रामस्य दर्शनं प्राप्यापि तं वनादानेतुं न शशाक, अपि तु तद्दत्तां पादुकां गृहीत्वा अयोध्यां प्रति प्रत्याजगाम।

चतुर्थे—भरते प्रत्यावृत्ते सति राम: दण्डकारण्यं ययौ, सुतीक्ष्णमुनिसन्निधौ पर्णशालां विरचय्य वस्तुमारेभे च। तत्र च लक्ष्मणेन कामुकायास्तं कामयमानायाश्च सूर्पणखाया: नासिकायां छिन्नायां तद्भ्रातरौ खरदूषणौ चतुर्द्दशसहस्रसैन्यैस्तौ रामलक्ष्मणौ परिवव्रतु:।

पञ्चमे—अमितविक्रमौ भ्रातरौ रामलक्ष्मणौ ससैन्यौ खरदूषणौ निजघ्नतुः। शोकसन्तप्ता सूर्पणखापि रावणान्तिकं गत्वा स्वशिरस्ताड़यन्ती सकरुणमशेषं भ्रातृवधवृत्तान्तं न्यवेदयत्, उपादिशच्च रावणमपहर्त्तुं रामस्य असामान्यलावन्यां पत्नीं सीताम्। रावणश्च तद्वाक्यप्रणोदितः परिव्राजकवेशं धृत्वा मायामृगरूपधारिणा मारीचेन रामं दूरमाकृष्य जनकतनयां हृत्वा लङ्कापुरीमानिनाय।

षष्ठे—रामः प्राणेभ्योऽपि गरीयसीं प्रियामप्रहृतामवगत्य शोकसन्तप्तो भृशं विललाप। उन्मत्त इवानिश्चितगतिरितस्ततो भ्रमन् माल्यवद्गिरौ वानरराजेन सुग्रीवेण सह सौख्यं विधाय तत्प्रियापहारिणं भ्रातरञ्च वालिं हत्वा तं किष्किन्धायाः राजपदं प्रापयत्।

सप्तमे—समागतायां शरदि सुग्रीवः सीतान्वेषणाय चतुर्दिक्षु वानरान् प्रेरयामास। तेषु च जाम्बुवदादिवानरपुरःसरं हनुमन्तं दक्षिणस्यां दिशि गन्तुमुपादिदेश—ते च सम्मिलिता वानराः बहूनि स्थानानि भ्रान्त्वा सागरसन्निधिमासाद्य लवणाम्बुधिमुत्तरितुं महाविक्रमं पवनतनयं नियोजयामासुः।

अष्टमे—हनुमान् अनायासेन सरित्पतिमुल्लङ्घ्य लङ्कां प्राविशत्। तस्यां बहुशोऽन्विष्य अशोककानने जनकराजतनयादर्शनं प्राप्य तस्यै रामवृत्तान्तं न्यवेदयत्। ततः रामस्याभिज्ञानं दत्त्वा तस्या अपि प्रत्यभिज्ञानं शिरोमणिं गृहीत्वा स्वपराक्रमप्रकाशनेच्छुः रावणस्य मनोरमं वनं बभञ्ज।

नवमे—पवननन्दनो रावणेन प्रेरितानसङ्ख्यान् यातुधानान् हत्वा उग्रं विक्रमं प्रकाशितवान्। तदनन्तरञ्च इन्द्रजिता युद्धे पराजित्य बद्धा च रावणसदनं निनाय। रावणे तं हन्तुमुद्यते विभीषणः अपराद्धोऽपि दूत अवध्य इत्याज्ञया हननाध्यवसायात् राक्षसाधिपं निवर्त्तयामास। किन्तु अमर्षणो दशाननः हनुमतो लाङ्गूलं वह्निना सन्दीपयितुमादिशत्।  ( क्रमशः )

## सायं सिन्धुतटे ।

( लेखकः—श्रीश्रीजीवन्यायतीर्थः । )

( Translated from Wordsworth's "By the Sea" )

इयं हि सन्ध्या रुचिरा च धीरा
ध्यानस्थिरा योषिदिव व्रतस्था ।
पूता प्रशान्ता ; पृथुतामुपेतो
भानुः शनैर्मज्जति शान्तिनीरे ॥
सिन्धुर्नभः स्थैर्य्यगुणं दधाति
जागर्त्त्यहो सोऽतिमहानिदानीम् ।
दुर्व्वारचाञ्चल्यवशाच्चिराय
वज्रारवं भैरवमातनोति ॥
मत्सङ्गिनो ये शिशवोऽत्र सन्ति
भावोदयश्चेतसि चेन्न तेषाम् ।
नाशङ्क्यमेतद्यदिमे विधातुः
कारुण्यतो न्यूनतयापि हीनाः ॥
ते देवभावेन सदा रमन्ते
भक्ता यथा देवगृहान्तरस्थाः ।
ईशः स्वयं तैः सह वर्त्तमानो
विद्मो वयं यद्यपि तन्न सम्यक् ॥

# उपनिषदाख्यानस्य प्रामाण्यमस्ति न वा।

( लेखकः—श्रीवाणीकण्ठतर्कवाचस्पतिः। )

कोटिद्वयोपस्थितौ संशयमामनन्ति, अत्र चाभावकोटिर्नैयायिकादीनां भावकोटिस्तु मठादिस्थनास्तिकानां शास्त्रविरुद्धवादिनामेव शोभते।

तथाचात्र प्राचां संवादः।

प्रबोधचन्द्रोदयनाटके षष्ठाङ्के—

पुरुषः। अम्ब! कथ्यतां क्व भवत्या नीता एते दिवसाः?
उपनिषत्। स्वामिन्!

नीतान्यमूनि मठचत्वरशून्यदेवा-
गारेषु मूर्खमुखरैः सहवासरागि।

पुरुषः। अथ जानन्ति ते भवत्यास्तत्त्वम्।

उपनिषत्। न खलु, न खलु, किन्तु—

ते स्वेच्छया मम गिरां द्रविड़ाङ्गनोक्त-
वाचामिवार्थमविचार्य्य विकल्पयन्ति॥

आस्तिकानां शब्दप्रामाण्यमाह अक्षपाददर्शने—आप्तोपदेशः शब्दः।

आप्तः खलु साक्षात्कृतधर्म्मा यथादृष्टस्य अर्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा, साक्षात्करणम् अर्थस्य आप्तिस्तया प्रवर्त्तते इति आप्तः, तथाच सर्व्वेषां व्यवहाराः प्रवर्त्तन्ते इति। एवमेभिः प्रमाणैर्देवमनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते नान्यथेति महर्षिवात्स्यायनः। एतेन प्राणभृतां यः व्यवहारप्रवर्त्तकः स एवेश्वरः सर्व्वज्ञः वेदवक्ता नान्य इति सिद्धान्तः। एवञ्चेदाख्यायिका न प्रमाणं भगवदनुच्चरितत्वादिति भावः। अ २। आ १। ५० सू। अपरञ्च न्यायसूत्रम्।

२अ। १आ। ५० सू। आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः। स्वर्गः अपवर्गः अप्सरसः उत्तराः कुरवः सप्त द्वीपाः सप्त समुद्राः लोकसन्निवेशः इत्येवमादेः अप्रत्यक्षस्य अर्थस्य न शब्दमात्रात् सम्प्रत्ययः। इति महर्षिवात्स्यायनः। एतेनासर्व्वज्ञस्य कपिलकमलासनकणादादेः सर्गादौ कथं लोकव्यवहारप्रवर्तकत्वं तत्तदर्थसाक्षात्कारविरहादिति विदाम्मतम्। एतदेवोक्तमुदयनेन "तदन्यस्मिन्नविश्वासान्न विधान्तरसम्भवः" इति। श्रुतिरपि तत्र प्रमाणं यः सर्व्वज्ञः सर्व्ववित् इति। सर्व्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः। अनन्तशक्तिश्च विभोर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य। इति स्मृतिरपि प्रमाणम्।

"अध्यात्मविद्या विद्यानाम्" इति श्रीमद्भगवद्वाक्यं श्रीमद्भगवद्व्यासप्रोक्तं श्रीमद्भगवद्गीतायां प्रमाणम्। तत्र का अध्यात्मविद्या इति जिज्ञासायां महर्षिवात्स्यायनः प्राह—तत्र संशयादीनां पृथग्वचनमनर्थकं संशयादयो यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्ते इति सत्यमेतत् इमास्तु चतस्रो विद्याः पृथक्प्रस्थानाः प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या। तस्याः पृथक्प्रस्थानाः संशयादयः पदार्थाः। तेषां पृथग्वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्यात् यथोपनिषदः। तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यन्ते इति। यस्य इयं भाषा "प्रदीपः सर्व्वशास्त्राणामुपायः सर्व्वकर्म्मणाम्। आश्रयः सर्व्वधर्म्माणां विद्योद्देशे प्रकीर्त्तिता॥" एतेनोपनिषदः आत्मपदार्थातिरिक्ताप्रतिपादकत्वात् कथं उपाध्यायादिसम्मतं वेदवाक्यम् उपाख्यानं भगवद्दुश्चरितमिति। अत्रार्थे चोदयनः—

कृत्स्न एव च वेदोऽयं परमेश्वरगोचरः। स्वार्थद्वारैव तात्पर्य्यं तस्य स्वर्गादिवद्विधौ॥ एवं कार्य्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः। वाक्यात् सङ्ख्याविशेषाच्च साध्यो विश्वविदव्ययः॥

एवञ्च वेदभागे सर्व्वत्र ईश्वरः प्रतिपादितः, यज्ञोवैविष्णुः पश्चस्य-चक्षुरित्यादिः । अपरञ्च

मितिः सम्यक् परिच्छित्तिस्तद्वत्ता च प्रमातृता ।
तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मते ॥

एतन्मते महाजनपरिग्रहाञ्च वेदे प्रामाण्यग्रहः । तथाच केनापि शिष्टेन आख्यायिकायाः प्रमाणत्वेनाप्रतिपादनात् शिष्टापरिग्रहदोष-दौष्टेन आख्यायिका दुष्टैव केनापि नास्तिकचूडामणिना ग्रथितत्वात् अप्रामाण्यं स्वतः एवेति भावः । नन्वात्मज्ञानेन किं ? तत्राह मणिकारः मणिग्रन्थे मुक्तिवादे—भिद्यतेहृदयग्रन्थिश्छिद्यन्ते सर्व्वसंशयाः । क्षीयन्ते चास्यकर्म्माणि तस्मिन् दृष्टे परात्मनि ॥ श्रुतेर्मोक्षं प्रति आत्मतत्त्व-ज्ञानस्य हेतुत्वावगमाच्च । आत्मा ज्ञातव्यो न स पुनरावर्त्तते । तमेव विदित्वाऽतिमृत्युमेति, नान्यः पन्थाविद्यतेऽयनाय इति श्रुत्या तत्त्वज्ञानं विना न मोक्षः किन्तु तस्मिन् सतेयेवेति प्रतिपादनाञ्च। अन्याच श्रुतिः मोक्षे मति किं तत्राह-अशरीर वाव । सन्तं प्रियाप्रिये स्पृशतः इति आत्मा ज्ञातव्यः न स पुनरावर्त्तते इति स आत्मज्ञः न पुनरावर्त्तते न पुनः शरीरी भवतीत्यर्थः । एतस्यैव कथं आत्मा वा अरे श्रोतव्यो-निदिध्यासितव्यः साक्षात्कारः कर्त्तव्य इत्युपक्रम्य दुःखेनात्यन्तं विमुक्तश्चरति इति श्रुतिश्च मानं एतत्फलकं एवमपि श्रोतव्यः श्रुति-वाक्येभ्यो मन्तव्यश्चोपपत्तिभिः । आत्मातु सततं ध्येयः एते दर्शन-हेतवः । इत्यात्मदर्शनहेतुताप्रतिपादनाञ्च श्रुतेरिति ॥

तत्रभवान् कालिदासः—

वेदान्तेषु यमाहुरेकपुरुषं व्याप्य स्थितं रोदसी, यस्मिन्नीश्वर इत्यनन्य-विषयः शब्दो यथार्थाक्षरः । अन्तर्यश्च मुमुक्षुभिर्नियमितप्राणादिभि-र्मृग्यते, स स्थाणुः स्थिरभक्तियोगसुलभो निःश्रेयसायास्तु वः ॥ एव-मपि वेदाभ्यासजडः कथन्नु विषयव्यावृत्तकौतूहलः । अर्थात् आत्मा-तिरिक्तविषयप्रतिपादकता उपनिषदो नास्तीतिभावः ।

एतदर्थे मन्वर्थमुक्तावलीकारः --वेदान्ताः परमात्मबोधगुरवो यूयं मयोपासिता इति। श्रुतिः सर्व्वज्ञप्रणीता तदर्थे मानमाहमणिकारः तस्मात्तपस्तेपानाच्चत्वारो वेदाः अजायन्त ऋचः सामानि जज्ञिरे इत्यादि कर्तृश्रवणात्। तथाच यदि सर्व्वज्ञकर्तृकवेदः, तदा कथं आधुनिकानां असदर्थप्रस्तावनं—यथा गीतायां आख्यानं केनापि कुत्रापि किञ्चिदपि न परिगृह्यते योगार्थाद्यर्थप्रतिपादकत्वात् तथात्रापि सुधीभिर्भाव्यं मूढ़ैर्नेति परमार्थः।

अखिल भारतवर्षीय संस्कृतसाहित्य सम्मेलनेन प्रस्तुतः

## संस्कृतशिक्षाक्रमः।

मन्त्रिणा गिरिधरशर्म्मचतुर्व्वेदेन विदुषां सम्मतिप्राप्तये प्रकाशितः।

## प्रारम्भिकं वक्तव्यम्।

इह खलु संस्कृतभाषाभ्युन्नतये विद्वद्भिः संभूय अखिलभारतवर्षीयं संस्कृतसाहित्यसंमेलनम्, इति नाम्ना विशिष्टा संस्था यतः प्रभृति प्रतिष्ठापिता, यतश्च विभिन्नेषु प्रान्तेषु प्रत्यब्दमधिवेशनान्यस्याः प्रवृत्तानि, तत एवानेन सावधानमिदमालोचितम्, यत् शिक्षापद्धतिसंशोधनम् एव संस्कृतोन्नतौ प्रधानो हेतुर्भवेत्। यतो हि शिक्षापद्धतावस्माकं दृश्यन्ते केचिद्बलवत्तमा दोषाः, त एव च संस्कृतविदुषां सुन्नतौ प्रतिबन्धकीभूय संस्कृतभाषाप्रचारं ह्रासयन्ति। त इमे विचार्य पूर्वं निराकरणीयाः देशकालानुकूलतया च संस्कृतशिक्षापद्धतिः परिष्कार्या। यतो हि देशकालयोरत्यन्तं विरोधे दुर्लभा कस्मिन्नपि कार्यसिद्धिः। तत्र विचार्यमाणे मुख्यतया प्रचलितायां शिक्षापद्धताविमे दोषाः प्रतिभासन्ते।

१। प्रारम्भिकशिक्षायाः काठिन्यम्। आङ्गलभाषाशिक्षाधिनायकाः प्रत्यहं प्रारम्भिकशिक्षायां सरलतामाधातुं प्रयतन्ते, ततएव च भवति तासां भाषाणां शिक्षायाः प्रत्यहमेवाधिकाधिकः प्रचारः। अस्माकं तु प्रारम्भिकी शिक्षा अद्यापि तथैव कठिना। प्रायेण संस्कृतविद्यामन्दिरे प्रविविक्षूणामेवछात्राणामग्रे पाणिनीयमन्यद्वा किमपि सूत्रनिबद्धं व्याकरणमस्माभिरवस्थाप्यते, कोषश्च केवलं घोषणार्थम्। पूर्वं भाषापरिचयस्तदनु व्याकरणज्ञानम्, इत्ययं युक्तियुक्तोऽप्याधुनिकानां विदुषां घण्ठाघोषो नाद्यावधि संस्कृतशिक्षकैः कर्णे क्रियते। बहवस्तु हिन्दीभाषायामपि अपरिचितान् बालान् संस्कृतव्याकरणे कोषे च नियोजयन्ति। कुतः खल्वपरिपक्वप्रज्ञानां छात्राणां तथाविधे गहने व्याकरणे प्रवेशो भवतु। ततः किल तेच्छात्रा अध्यापकैस्ताड्यमानाः शुकत्वमवलम्ब्य ग्रन्थाक्षराणि कण्ठे कुर्वन्ति, न तु शिक्षाया मुख्यं प्रयोजनं प्रज्ञापरिष्कारो नाम तेषां लेशतोऽपि सिध्यति। एवं प्रतिशतं सप्ततिरशीतिर्वा च्छात्राः प्रविविक्षव एव अनया द्वारपिधायिन्या दृढतरार्गलया बहिरेव निष्कास्यन्ते। तेषामेव कृते 'केचिद् भ्रष्टाः मुख्यपाठ्यप्रयोगे, इत्यादयः आभाणका अस्मद्देशे प्रसिध्यन्ति। तांश्च संस्कृतभाषाया महत्वं ख्यापयन्तः सगर्वं वयमुदाहराम इत्यहो अस्माकं वैचित्र्यम्। कथमित्थं संस्कृतभाषायाः प्रचारः सेत्स्यति ? तस्मात् संस्कृतप्रचाराय प्रारम्भिकशिक्षायाः सरलताप्रापणमत्यावश्यकम्।

२। समयोपयोगिविषयाणामप्रवेशो द्वितीयो दोषः। लोकोहि संप्रति साधारणज्ञाने रुचिमान्। गणितं, भूगोलविद्या, इतिहासः, विज्ञानम् इत्येवंप्रभृतिविषयाणामपरिचितो नेदानीं लोके शिक्षित इति मन्यते। नचैते विषया अस्माभिः शिक्षायां नियतत्वेन परिगृहीताः। ततएव समयोपयोगिविज्ञानविरहिताः संस्कृतज्ञा न शिक्षितत्वेन समाजे समाद्रियन्ते। संस्कृतपण्डितानां सामयिक-

ज्ञानविरहादेव च संस्कृतपाठनार्थमपि राजकीयविद्यालयेषु आंगल-भाषाविद एव गृह्यन्त इति केवलसंस्कृतज्ञानां वृत्तिदौर्लभ्यमधिकायते, तस्मात्संस्कृतशिक्षायां सामयिकविषयाणां सन्निवेशोऽतीवावश्यकः। देशभाषया वा ते विषयाः पाठनीयाः, सरलसंस्कृतेन वा नवीनपद्धत्या संग्रथनीयाः।

३। संस्कृतशिक्षायां गृह्यमाणेष्वपि विषयेषु किञ्चिदेकविषयाध्ययने छात्राणां प्रवर्त्तनम्, तेन च संस्कृतसाहित्ये बहूनां विषयाणां विलोपप्रसङ्गस्तृतीयः सुमहान् दोषः। कियतश्चित् कालादेकतमस्यैव व्याकरणस्य, न्यायस्य, ज्यौतिषादेर्वा शिक्षा ग्रहीतव्येति नियमः संस्कृतशिक्षायां प्राचरत्। तेन चादितोऽन्तपर्यन्तमेकमेव विषयमधीत्य पण्डितमानिनोपि संस्कृतज्ञा इतरविषये 'श्वेतं कृष्णं' किमपि न जानन्ति। नैयायिका व्याकरणमुपेक्षन्ते, वैयाकरणा अलङ्कारशास्त्रं न जानन्तीत्येवं सर्वत्र व्युत्पत्तेरभावः प्रतिभासते। किञ्चैवं पद्धतौ प्रचलितायां द्वित्रा एव विषया अवशिष्टाः संस्कृतवाङ्मये, शेषास्तु विलुप्ताः, लुप्यन्ति च। तस्मात् प्राथमिकशिक्षायां मध्यमशिक्षायां च समुपयुक्तबहुविषयज्ञानं सन्निवेश्यमेव। उत्तमशिक्षायान्त्वेकस्यैव शास्त्रस्य विशिष्टं पाण्डित्यमनुलक्षणीयम्।

४। अभिनवग्रन्थानामनादरः शिक्षापद्धतौ चतुर्थो दोषः। समये समये लोकानां मतिवैचित्र्याद् विभिन्नपद्धतिकानां ग्रन्थानामावश्यकता सर्वत्र जायते। नैव संभवन्तीदानीं निर्दोषा उपयुक्ता ग्रन्था इति नेदं सारवद्वचः। अभिनवग्रन्थानामादरे क्रियमाणे सोत्साहं विद्वद्भिस्तथा ग्रन्था निर्मास्यंते।

५। आजीवनोपायादानसंग्रहः शिक्षापद्धतौ पञ्चमो दोषः। इदानीं हि संस्कृतशिक्षिता अध्यापनं विहाय न किमपि कर्तुं शक्नुवन्ति। अध्यापनमपि बहुभिर्न यथोचितमनुष्ठातुं शक्यते। न तावन्मात्रेण सर्वेषां निर्वाहो भवेत्। तस्मात् ज्ञानार्थमध्ययनं

नियम्यापि लोकयात्रार्थं शिल्पवाणिज्यादिविषया अपि शिक्षणीया एव। येन संस्कृतशास्त्रशिक्षया खल्वात्मोन्नतिं प्रतिष्ठां च विन्दन्तोऽपि विद्वांसो जीविकार्थमपि न क्लिश्येरन्, अपि तु स्वातन्त्र्येण जीविकां प्राप्नुयुरिति। धर्मशास्त्रमप्यापत्काले ईदृशीं वृत्तिं विदधात्येवेति तथा शिक्षाप्यावश्यकी। इतोऽप्यन्यान् बहून् दोषान् दूरीकृत्य संस्कृतशिक्षापद्धतिः परिष्कार्या। न च सर्वथैव प्राक्तनी पद्धतिः परित्याज्या, तथा सति संस्कृतशास्त्राणां मार्मिकज्ञानविलोपप्रसंग आपतेदिति नूतनप्रत्नयोः पद्धत्योः संमिश्रणेन विलक्षणोऽध्वा प्रवर्त्तनीय इति निश्चितं संस्कृतसाहित्यसम्मेलनेन। आरम्भादेव सर्वेष्वपि संमेलनेष्वेतद्विषयकाः प्रस्तावा विचरिता अभवन्। चतुर्थाधिवेशननिश्चयमनुरुध्य शिक्षाक्रमविषयिण्येका प्रश्नावली संपाद्य, भारतस्य सर्वेषामपि प्रान्तानां ये विशिष्टा विद्वांसस्तेषां सविधे संप्रेषिता। कैश्चिदेव विद्वद्भिरुत्तराणि संप्रेषितानि।

तेषां विदुषां मतानि भूयोभूयोहि सम्यग्विवेचितानि। अथ काले काले बहुभिर्विद्वद्भिः सह समक्षं समालप्य तन्मतं गृहीतम्। व्याकरणाचार्यश्रीसूर्यनारायणशास्त्रिणा (जयपुरस्थेन) विद्याभास्कर श्रीपरमेश्वरानन्दशास्त्रिणा (सनातनधर्मसंस्कृतकालेजलाहौरस्थेन) च बहुवारं भूयोभूयः परामृश्य बहुमतेन संस्कृतशिक्षापद्धतिरियं निश्चिता। इयं च संस्कृतसाहित्यसंमेलनस्य अधिवेशने विषयनिर्वाचनसमितौ श्राविता। तत्र बहवो विशिष्टा विद्वांस उपस्थिता आसन्।

प्रायेण तत्र सर्वैरेव विद्वद्भिरियं पद्धतिरैकमत्येनानुमोदिता पुनरपि त्वेकवारं सर्वेषामपि भारतप्रसिद्धविदुषां संमतिमुपादाय तदनु अस्याः प्रचाराय प्रयत्न आस्थेय इति तत्र निर्धारितम्। तदनुसृत्य मुद्रितेयं संस्कृतशिक्षापद्धतिः श्रीमतां विदुषां सम्मतिग्रहणार्थं संप्रेष्यते।

अत्र पद्धतौ प्रथममध्यमोत्तमभेदेन शिक्षाया भागत्रयं कल्पितम्। तत्र च प्रथमशिक्षा विषयावबोधप्रधानैव निर्दिष्टा, ग्रंथास्तु तत्र प्रान्तभेदेन रुचिभेदेन विकल्पिता दृष्यन्त इति टिप्पण्यो ऽनुमत—( recommended) रूपेण निर्दिष्टाः। मध्यमशिक्षायां विषयावबोधप्राधान्ये ऽपि क्वचिदस्तेऽव नियतग्रंथापेक्षा इति तत्र सहैव ग्रंथनिर्देशः कृतः। उत्तमशिक्षा तु प्रायेण ग्रंथप्रधानैवेदानीं सम्भवतीति ग्रंथा एव तत्र निर्दिष्टाः।

उत्तमशिक्षायां बहुषु विकल्पितेषु ग्रंथनिर्देशस्तदभिज्ञविद्वदनुमतेऽव सम्भवतीति तेषु विकल्पेषु संकेतमात्रं कृतम्। येषां विदुषां सविधे पाठ्यक्रमोऽयं प्रेष्यते तेषु ये तथाविधविकल्पेषु ग्रंथान् निर्देष्टुं समर्थाः, तं सविनयं संप्रार्थ्यंते यत् कृपया उत्तमशिक्षाया भागद्वये ग्रंथनिर्देशस्तैः स्वसंमत्या विधेयः। अनुगृहीतं भवेत्तेन संमेलनमिदम्, सुरभारती च। अत्र प्रथममध्यमे शिक्षे प्रायेणैकविधे एव व्यवस्थापिते। मध्यमशिक्षायामपि बहुविषयावबोध एव नियमितः। उत्तमशिक्षा तु एकविषयप्रधानैव। परं तत्रापि प्रथमभागे नियतरूपेण केचन ग्रथाः सर्वसाधारण्येन स्वीकृताः, द्वितीये तु विभागे सर्वथैकस्यैव विषयस्य प्राधान्यम्।

यत्र यत्राभिनवा ग्रन्था अपेक्ष्यन्ते तत्र तत्र तथा प्रदर्शितम्। अभिनवग्रन्थसम्पादनाय संमेलनेन प्रयत्यते। आशास्यते अनेऽपि देशमान्याः प्रौढाविद्वांसोऽस्मिन् कर्मणि स्वयं साहाय्यमादध्युरिति। अस्मिन् शिक्षाक्रमे राष्ट्रभाषेति संकल्य हिंदीभाषा बहुतरं संगृहीता। स्वातन्त्र्येणापि हिन्दीभाषासाहित्यं तत्परीक्षासु नियमितम्, येषां च विषायाणां शिक्षोपयोगिनो ग्रन्था संस्कृते नोपलभ्यन्ते तेषां शिक्षणमपि हिन्दीभाषयैवानुमतम्। तेन हिन्दीभाषाविरोधिताकलंकश्च संस्कृतविदुषां ललाटे समारोप्यमाणः सम्यक् प्रोंच्छितः स्यात्

समयेऽस्मिन्नाङ्गलभाषाज्ञानं सर्वेषामावश्यकमिति सर्वेषामनु-

भवगोचरोभूतोऽयं विषयः। ततस्या अप्यत्र पाठ्यक्रमे सन्निवेशः कृतः। परं नियमेन सन्निवेशं बहवो नानुमन्यन्त इति ऐच्छिक-रूपेण विकल्पेष्वेव सा भाषा निर्दिष्टा।

तथैव वृत्त्यर्थी कलाद्या अपि तत्तदैच्छिकरूपेण त्रिष्वपि शिक्षा-विभागेषु निर्दिष्टाः।

अस्मिन् क्रमे उत्तमशिक्षायां क्वचिद् विदुषां ग्रन्थबाहुल्यं प्रतीयेत तैः कृपया स्वसंमत्या संशोधनं निर्देष्टव्यमेव। कुत्र कियती न्यूनता केषामभिमतेति सुस्पष्टं कृपया निर्देश्यम्। अखिलभारतवर्षसाधा-रणेन शिक्षाक्रमोऽयं संगृहीतः। अत्र यस्मिन् प्रान्ते यस्य विद्या-लयस्य यावद्विकल्पग्रहणे शक्तिः तावन्तो विकल्पास्तेन संग्राह्याः। येन विद्यालयेन स्वप्रान्तानुकूलं स्वशक्त्यनुकूलं च क्वचित् किञ्चित् परिवर्त्तनं चिकीर्षितं स्यात् तेनापि स्वप्रान्तीययोग्यविद्वदनुमत्या तथा शक्यते विधातुम्। एकप्रान्तस्था एकनगरस्था वा यत्र अनेके संस्कृतविद्यालयाः, ते यदि परस्परं संमत्या विभज्य बहून् विकल्पान् गृह्णीयुस्तर्हि शिक्षाविषये महानुपकारो भवेत्। यस्य च विद्यालयस्य धनादिशक्तिरल्पीयसी, तेन मध्यमशिक्षापर्यन्तं प्रथमशिक्षापर्यन्तमेव वाध्यापनं प्रवर्त्तनीयम्, नतु विकलाप्युत्तमशिक्षा सर्वैः प्रवर्त्तनीयेति संमिलनानुमतम्।

इदन्त्वत्र विषयतोऽवधेयम्—यदत्र शिक्षाक्रमे प्रथमशिक्षा आङ्गल-भाषाया मेट्रिकपरीक्षातुल्या, मध्यमपरीक्षा च इण्टरमिडियटपरीक्षा तुल्या, उत्तमशिक्षाया भागद्वयं च क्रमेण बी० ए०, एम्० ए० परीक्षयो-स्तुल्यमिति साधारण्येन विज्ञायते। परमाङ्गलभाषाध्ययने प्रथम-शिक्षायां बहुतरः कालोऽपेक्ष्यते, अग्रे तु स्वल्पः। अस्माकं तु संस्कृतभाषाया एतद्देशीयत्वात्प्रथमशिक्षायां स्वल्पः कालोऽपेक्ष्यते, अग्रे तु बहुतरदुरूहविषयसंकीर्णत्वाच्छिक्षाया अधिकःकालोऽपेक्ष्यते इत्यस्त्येव वैषम्यम्। सकलितस्तु काल आङ्गलभाषा एम्० ए०

पर्य्यन्तशिक्षापेक्षयाऽत्र न्यून एवेति। किञ्च तत्र मेट्रिकपरीक्षया यावान् बोधस्ततः कथंचिदप्यनएवात्र प्रथमपरीक्षया संभवति इति प्रतीयते। नन्वादिषुविश्वविद्यालयेषु आङ्गलभाषापरीक्षास्विव संस्कृत-परोक्षास्वपि वयसा नियमः स्यात्। षोड़शवर्षवयसोन्यूनाश्छात्राः प्रथमशिक्षातो नोत्तारणीया न वा कालेजविभागे प्रवेशनीया इति तत्र मध्यमशिक्षा मेट्रिकस्थाने मन्तव्या। षोड़शाब्दपर्य्यन्तं मध्यम-शिक्षां समाप्योत्तमायां प्रविशेदिति नियमः आस्थेयः, मध्यमशिक्षा-पर्य्यन्तं च मेट्रिककालसमानतापि प्रायेण भविष्यति। कालेज-विभागे तु उत्तमशिक्षैव खण्डद्वयं खण्डत्रयं वा प्रकल्प्य स्थापनीयेति युक्तं भाति। अन्यश्चेत् कोऽपि सुलभः प्रकारोऽत्र विदुषामभिमतः स तर्हि कृपया बोधनीयः। येन तथाविधा विभागा अत्र प्रकल्प्येरन्-निति।

इमं शिक्षाक्रमं सावधानमालोच्य स्वस्वसंमतिं द्रुतं प्रकटये-युर्विद्वांसो महाभागा इति सुदृढ़माशास्यते। संमतिसंग्रहानन्तर-मयं शिक्षाक्रमः सुनिश्चितः स्यात्। परीक्षाव्यवस्थापि चैतदनुसारं संपाद्येत। संस्कृतविद्यालयेषु राजकीयपरीक्षासु चैतं क्रमं प्रचारयितुं संमेलनं सुदृढ़ं प्रयततेवेति।

## संस्कृतशिक्षाक्रमः।

१।—आदौ वर्षद्वयं स्व-स्वदेशभाषाशिक्षा। लेखनम्, वाचनम् देशभाषासम्बन्धिलघुपुस्तकवाचनम्, साधारणवाक्यार्थावबोध इतीयता-वत्पर्य्यन्तं ज्ञानमावश्यकम्। देशभाषापद्योच्चारणशैली संस्कृतपद्यो-च्चारणशैली चाप्यत्र शिक्षणीया। अन्यप्रान्तवासिभिरपि हिन्दी-भाषाशिक्षणाय प्रयतनीयम्। गणितपद्धिका, (पहाडा) संख्यालेखः, संकलनं, व्यवकलनं च गणितेऽभ्यसनीयम्।

२। तदनु शिक्षायास्त्रयो विभागाः। प्रथमः, मध्यमः, उत्तमश्चेति। उत्तमेऽप्यवान्तरं भागद्वयम् इति संभूय भागचतुष्टयं स्यात्। प्रत्येकं त्रयस्त्रयः संवत्सराः शिक्षार्थमपेक्षितः काल इति साधारणेन द्वादशवार्षिकीयं शिक्षापद्धतिः।

## तत्र प्रथमशिक्षायाम्।

१—संस्कृतगद्ये—अभिनवसंदृब्धा लघुग्रन्थाः। रामायणमहाभारतहितोपदेशपञ्चतन्त्रादिसंगृहीतगद्यपद्यभागः। नीतिशतकादिभ्यः संगृहीतानि पद्यानि। (संस्कृतभाषायां प्रवेशो यावता भवेत्। सहस्रश्लोकपरिमाणादनूनो गद्यपद्यभागोऽत्र शिक्षायां नियमनीयः स्यात्।)

२—व्याकरणे वर्णानां स्थानप्रयत्नविवेकः, साधारणेन संधिनाम्, सनियमं लिङ्गभेदेन शब्दरूपज्ञानम्, व्यवहारसुप्रयुक्तधातुरूपज्ञानम्, कर्तृकर्मादिकारकभेदेन प्रथमादिविभक्तीनाम्, कालपुरुषगणादिभेदेन धातुरूपाणाम्, तद्योजनायाश्च सम्यक् परिचयः, कृत्तद्धितसमासानां साधारणा नियमाः, कर्तृकर्मप्रधानवाक्यपरिचयः निपातोपसर्गपरिचयश्चेति। (स्वस्वाधीतगद्यपद्येषु अन्यत्रापि च साधारणवाक्यादिषु पदानि निर्वक्तुं यथा शक्नुयात्।)

---

१—प्रथमस्य ग्रन्थस्याभिनवसंदृब्धलघुगद्यग्रन्थमात्रं नियमनीयम्। श्रीविधुशेखरभट्टाचार्य्यमहाशयस्य 'संस्कृतसंदर्भः' तवादर्शभूतः। द्वितीयतृतीययोश्च श्रेण्योर्गद्यपद्यसंग्रहरूपी अभिनवग्रन्थौ। ऋजुपाठः, हितोपदेशः, पञ्चतन्त्रम्, श्रीवाल्मीकिरामायणम्, महाभारतम्, भर्तृहरिकृतनीतिशतकं चेति एभ्यः कश्चित् कांशदंशः। यथा कुसुममाला (संग्रहः)

२—श्रीसूर्य्यनारायणशास्त्रिणां 'सरलसंस्कृतशिक्षकस्य' भागपञ्चकम्। श्री कें, पि, त्रिवेदिनां संस्कृतशिक्षिका। भागचतुष्टयात्मिका रूपमाला तिङन्तमञ्जरी च। शब्दमञ्जरी, तिङन्तमञ्जरी, धातुरूपमुक्तावली, समासप्रकरणं च इति एवंविधा अन्येऽपि वा अभिनवरीत्या संदृब्धाः संदर्भाः शिक्षार्थमनुमन्यन्ते। स्थानप्रयत्नविवेकस्तु पाणिनीयशिक्षातः शिक्षणीयः।

३—अनुवादः। (देशभाषायाः संस्कृते, संस्कृतस्य च देशभाषायाम्)

४—कोषे एकार्थानेकशब्दज्ञानम्। (यथासम्भवं तत्तच्छब्दानां तत्तदर्थे कुतः प्रवृत्तिरिति व्युत्पत्त्यंशं शिक्षणीयम्)

५—हिन्दीभाषासाहित्ये गद्यपद्यभागस्य सम्यगनुशीलनम्।

६—गणिते दशमलववर्जं त्रैराशिकान्तगणितम्। व्यापारगणितं वा। अत्रैव तिथिपत्र—(पञ्चांग) बोधनाभ्यासश्च।

७—भूगोले—महाद्वीपानां तद्विभागानां च साधारणज्ञानम्, भारतवर्षस्य च साकल्येन ज्ञानम्।

८—इतिहासे-श्रीरामयुधिष्ठिरहरिश्चन्द्रादीनां भारतीयमहापुरुषाणां सावित्र्यादिसाध्वीनां तच्चरितानां तद्देशकालानां जन्मतिथ्यादीनां च केवलं कथारूपेण वाचिकः परिचयः।

९—धर्मे नित्यकर्मशिक्षा, शौचाचारशिक्षा, सामान्यधर्मशिक्षा च। तत्रैव कतिचित् स्तोत्राणि, नीतिश्लोकाः, स्वास्थ्यरक्षोपयुक्तनियमज्ञानं च।

---

३—संस्कृतबालबोधिनी, अनुवाददीपिकादिकं किमप्यभिनवं पुस्तकं शिक्षार्थं संग्राह्यम्। शिक्षितव्यं व्यवहारिकशब्दकोषं कमप्यादाय तच्छब्दानां व्यवहाराभ्यासः कारयितव्यः, पत्रादिलेखनं शिक्षणीयः।

४—अमरकोषः, अमरसारः, आख्यातचन्द्रिका, हलायुधः, एतेभ्य उपयुक्तोऽंशस्तद्वयन्यात् समादेयः, अमरकोष एव वा।

५—श्रीमहावीरप्रसादद्विवेदिमहाशयस्य महाभारतात्, गो० तुलसीदासकृतरामायणविनयपत्रिकाभ्यां भूषणग्रन्थावल्याश्च संग्रहीतोऽयः। हिन्दीशिक्षावल्याः पञ्च भागाः पूर्वमध्याप्याः। अन्यान्यदेशवासिभिः स्वस्वभाषासाहित्यशिक्षापि नियन्तुं शक्यते। परं हिन्दीभाषासाहित्यज्ञानं सर्वैरावश्यकं मन्तव्यम्।

६-८—संस्कृते एतद्विषयकग्रन्थाः अप्युक्ता यथा यथा सम्पद्येरन् तथा प्रयतनीयम्। यावत्तु नास्ति तत्सम्पत्तिस्तावत् हिन्दीभाषयैव विषया इमे शिक्षणीयाः।

९—एतद्विषयाय लघुपुस्तकान्यावश्यकानि। पुस्तकसम्पत्तिपर्यन्तं मनुस्मृत्यादिभ्यः आचारादिकं शिक्षणीयम्। स्तोत्राणि च श्रीधरस्तोत्राकरादिभ्यः शिक्षणीयानि।

१०—अथैतेषु विकल्परूपेण यथाभिरुचि किमप्येकं द्वयं वा इत्यर्थमेच्छिकरूपेण ग्राह्यम् ।

(क) वेदपाठे याजुषो रुद्राध्यायः सस्वरः । ऋग्वेदादीनां वा स स भागः सस्वरः ( ख ) लिपिसौष्ठवम् । ( ग ) सीसकाक्षरयोजना-भ्यासः ( Composing ) ( घ ) चित्रणकलाभ्यासः ( Drawing ) ( ङ ) मृत्काष्ठादि वस्तुनिर्माणशिल्पम् ( Clay modelling ) ( च ) सूत्रनिर्माणशिल्पम् । ( छ ) क्षेत्रमापनम् ('Survey ) ( ज ) वृक्षारोपणम् ( Gardening ) चेति । ( क्रमशः )

## वृक्षकथा ।

( पूर्व्वतोऽनुवृत्ता )

( लेखकः—श्रीदुर्गाचरणमाल्यवेदान्ततीर्थः । )

अथ सा वनदेवता मुहूर्त्तमिव मौनमुपासीना किमपि मनसि विमृश्य मन्दं मन्दमुपसर्पन्ती मन्दकारतरुसङ्घमग्रतो मामदर्शयत् सस्मितमिदमवदच्च—वत्स, जानासि किम्. एते खलु कतमाः किमा-चाराश्च मानुषेष्वासन् इति ? न जानासि चेत्, सम्प्रति इहावधानो भव ।

एते किल पूर्व्वस्मिन् जन्मनि परोपकारपरायणा महाशयतमा महानुभावा दानशौण्डा धनिन आसन् । स्वोपचितकर्म्मविपाक वशेन दुरन्तस्थावरयोनिमापन्ना महता कष्टेनैव दिनक्षपाः क्षपयन्ति ।

यथा हि—सदाशया दानव्रता धनिनः परोपकाराय धन फलानि सञ्चिन्वन्ति । सञ्चित्य च कृपणवत् नैव गोपायन्ति, नापि स्वोदरभर-

१०—(क) उपनीतैर्हि कर्त्तव्यमावश्यकमेतच्छिक्षणीयमेव । ये तु अयं कर्म्मकाण्डविषये प्रविष्टुमिच्छन्ति, तेनवश्यमेतदभ्यस्यं स्यात् । येषा तु वेदाधिकारो नास्ति तैस्तु उपासनामन्त्राः ।

नेकफलानि कुर्व्वन्ति ; परन्तु सगुण-विगुण-निर्व्विशेषेण एवं परितोष-यन्ति धनैः। प्रयच्छन्ति च यथाकाममर्थिसार्थेभ्यः। तेषां निसर्ग-सुन्दराणि वाङ्मनःकायचेष्टितानि सरसावदातानि सुधासार-रसोदगारीणि च हसितानि, किं बहुना, तदेषां किमिवास्ति, यत्र प्रमोदसन्दोहमुपजनयति समीपमुपेयुषां सुमनसाम्।

तथा खल्वेतेऽपि सहकारतरवः सर्व्वतः कमनीयताभृतः संजाता मत्तैर्भृङ्गकुलैः सङ्गीयमानयशसः सुषमाभरमनोहरेषु सिन्दूरसुन्दरेषु करकिशलयेषु आत्मसर्व्वस्वानि फलकुसुमानि समादाय, समीपमुप-गतान् अध्वक्लेशविवशान् क्षुत्क्षामकातरान् पथिकान्, शुक-पिक-काकप्रमुखान् पक्षिगणानविशेषेण—सुहृदुपनतैरुपायनैरिव नितरां प्रीणयन्ति। व्यजनैरिव नवकिशलयैस्त्वचं, सौरभबहुलैः कुसुमैः घ्राणं, अमृतरसमधुरैः फलैः रसनां, नवकुङ्कुमारुणैरभिनवोद्गतैः शाखा-च्छदैर्नयनयुगलं, सलीलालिमालाललितालापैश्च श्रोत्रयुगलं सन्तर्पयन्तः सन्ततमन्तः सन्तोषमुपजनयन्ति जन्तूनाम्। परोप-कारपरायणानां महात्मनामिव किमिव वास्ति चैषां, यत् सदसद्-विशेषेण प्राणिमात्रं नानन्दयति ? तत एवाहं ब्रवीमि यत्, एते किल प्राक्तने जन्मनि पुण्यशीलाः माधव एव सन्तः केनचित् पापलेशेन वृक्ष-योनिमधिगता अपि संस्कारसुस्थितानि स्वचरितानि साम्प्रतमपि समनुवर्त्तन्ते—इत्येवमभिदधाना सा वनदेवता सहसा मौनमभजत।

अथासौ स्खलदमलधवलचेलाञ्चला जिज्ञासुतया स्फुरदधरपल्लवं मामभिवीक्ष्य नवकिशलयानुकारिणा करेण करे समादाय मामग्रतः शनैः शनैः सञ्चरन्ती नातिदूरमिव गत्वा सहासमिदमभाषत—वत्स, क्षणमपेक्षस्व, भूयश्चान्यत् ते विज्ञापयामि ; प्रणिधत्स्व तावत्—

योऽप्ययं पुरतः कृशकर्कशतनुः गलालम्बिभिः फलभरैरुपशोभ-

मानो महान् नारिकेलतरुरवलोक्यते नायमपि तत्सामान्यतया नोपेक्षणीयः। यदेतस्यापि पूर्व्ववृत्तं कौतुककरमिव वर्त्तते।

अयं किल पूर्व्वजातौ कृपणाधमतया विश्रुतकीर्त्तिः कश्चिद्वणिक्नन्दन आसीत्। तदिह स्थावरजन्मन्यपि सुष्टूपसेवितां तामेव पुरातनीं प्रकृतिं सर्वात्मना समाद्त्ते। तथाहि—

स्वभावकृपणा हि प्रायेण सर्व्वतः सर्व्वथा सर्व्वेभ्यः सारधनमुपादाय स्वच्छन्दमात्मसात् कुर्व्वन्ति, आत्मसात्कृत्य च तथा गोपायन्ति, यथा नात्मनोऽपि भोगाय कथञ्चिदुपयुज्यते, का कथा परेषाम्; अपरे तावत् निरीक्षितुमपि नव शक्नुवन्ति किमुत ग्रहीतुम्। महतायासेन कथञ्चित् गृह्यमाणमपि सहसा भोक्तुं न शक्यते; भुक्तमपि सहसैवेन न परिपाच्यते। तदेवं न देशाय न धर्म्माय न विप्राय नवात्मने उपयुक्तं तद्धनं केवलं पेटिकानिहितं कृत्वा स्वात्मोपकण्ठं यत्नतः परिपालयन्ति, नितरां परिवर्द्धयन्ति च। एवमनिशमनुपभोगपरवशतया धनक्षयदुर्भावनया च भृशकर्कशामस्थिमात्रसारां अमांसलदीर्घां शरीरयष्टिं क्षुत्क्षामतया नियतं पतनोन्मुखीमपि बलादिव विधारयन्ति। धनव्ययभियेव नापर स्वमङ्गितयाङ्गीकुर्व्वन्ति, केवलमेकाकिनस्तिष्ठन्तो दिनयामिनीर्यापयन्ति।

तथा खल्वयमपि लाङ्गलीतरुर्यमेव भूमिभागमधितिष्ठति, तत्रैव सर्व्वतः सर्व्वान् रसान् निरवशेषमाकृष्य तथात्मसात् करोति, यथा खलु तदुपकण्ठवर्त्तिनोऽपरे तरवः कथञ्चिदुच्छ्रसन्तोऽपि नैव पुष्टिमश्नुवते। स्वयमपि च महृयप्रयत्नतयैव भृशकर्कशां दीर्घदीर्घां संजातवेपथुव्याधिं शरीरयष्टिं कथमपि धारयन् जीवनं सफलयति। सर्व्वतः सञ्चीयमानं रससारन्तु कृपणधनमिव फलव्याजेन दृढतरसम्पुटके निधाय त्वगादिभिश्च निपुणं समावृत्य भोगक्षयभियेव दिवानिशमुपकण्ठं तथा धारयति, यथा धूर्त्ता मर्कटा अपि तदास्वादयितुमपारयन्तो दूरादेव परावर्त्तेरन्। कृपण इव व्ययभीतेव शाखा-

समस्तैरपि नाङ्गीकरोति, निःशाखतया च आश्रयदानजं परमश्लाघ्य-
हरणपुण्यमपि न बहु मन्यते ; केवलमेक एव निवसन् कालकला:
सुखेन कलयति। वञ्चनपटवो धूर्त्ता: पुन:, एवं यत्नत: परिवर्द्धितं
परिरक्षितमपि सर्व्वस्वभूतं तत् फलरत्नं कृपणधनमिव बलात् छलाद्वा
समाच्छिद्य सुखेन गृह्णन्ति भक्षयन्ति च वरम्। तदहं ब्रवीमि,
कृपणजनावतारोऽयं लाङ्गलीतरु: प्राक्तनसंस्कारानुरूपं चरित
मिदानीमप्यनुवर्त्तते। अथापरं किं नाम द्रष्टुं श्रोतुं वा समीहसे,
इत्युक्त्वा सा विरराम।

अथैवमभिधाय विरतवचसि तस्यां, उत्तरोत्तरमुपजायमान-
प्रकर्षेण हर्षेण चापलबहुलेन कुतूहलेन च विवशीक्रियमाणमानसोऽहं
श्रद्धाजडेन चेतसा सप्रश्रयमिदमवादिषम्—

भगवति वनदेवते ! सुधासारसरसेन प्रियप्रायतया श्रुतिसुखकरेण
ते वचनजातेन, अदृष्टचरतया प्रकृतिमधुरेण काननरामणीयकेन,
अश्रुतपूर्व्वतया मधुरमधुरेण पादपोदन्तश्रवणेन च मम कायिकी
मानसी च वेदना विगलिता ; परमिदानीमपरमपि तरूदन्तमाकर्ण
यितुं भृशं चपलयति मामनवग्रहा कौतूहलपरम्परा। तदहं
पादयो: प्रणिपत्य त्वां विज्ञापयामि यदि मे नापराध:, तदपरमपि
परमाश्चर्य्यनिलयं पादपवृत्तान्तं श्रावयित्वा सविशेषमनुगृह्यतामय-
माश्रवो जन इति।

अथ सैवमभिहिता मदेकहिता वनदेवता ईषदाचलितकन्धरेण
ज्योत्स्नाधवलेन वदनेन मामाश्वास्य, मन्दं मन्दमग्रतो गच्छन्ती
कस्यचित् महत: शाल्मलीतरो: समीपमुपानयन्माम्। तत्र च क्षणं
स्थित्वा, ईषदाकुञ्चितभ्रूयुगला किञ्चिन्निमिलितनयना च सती
किमिव मनसि समाकलय्य सहासमभाषत माम्—

वत्स, योऽयमग्रत: शाखासन्ततिबहुलेन, मूलस्थूलेन समधिक-
मांसलेन कलेवरेण विराजमान:, बाहुकल्प : शाखाचयैश्च सर्व्वा दिश:

समाच्छाद्य विशाल: शालमलीतरुरालोक्यते, नायमपि तरुबुद्ध्या समुपेक्षणीय: । अयं हि पुराभवे मदमूर्खताभिमानाद्यशेषदोषनिलय: कश्चित् दुष्कुलीन आसीत् ; तत एव च महतोऽपराधादिदानीमीदृशीं दशामापन्न: स्वकर्मशेषं क्षपयति ।

यथा हि मदसद्विचारविधुरा दुष्कुलीना: प्रायेण निरक्षरतया विद्यासौरभरहितेन कुसुमसुकुमारेण वदनेन, परपुष्टतया मांसलेन वपुषा च परिशोभमाना अभिमानकण्टकिततया च नितरामसदाश्रयतामुपयान्ति ; दुर्व्विनीततया च कण्टकैरिव दुर्व्वचोभिराश्रयिणोऽपि निस्तुदन्ति ; मदान्धतया च महतामपि भीतिमुत्पादयन्ति, सद्गुणविहीनतया च साधुभिर्नाद्रियन्ते, असाधुभिश्च सुतरां बहुमन्यन्ते ।

अथ खल्वयमपि सर्व्वत: समाकृष्टरसपुष्टेन विशालेन वपुषा, गन्धसम्बन्धशून्येन रूपमात्रोपजीविना कुसुमहासेन परिशोभमान:, अध:स्थितान् सन्निधानोपगतांश्च निरागसोऽपि तीक्ष्णै: कण्टकैर्निस्तुदति, आश्वासस्थितिसम्बन्धकारिताशतया च सर्व्वानविशेषेण शोषयति ; दोषबहुलतया च कोमलकलेवराणि काककोकिलकुलानि समधोय्य दुरन्ततरां शकुनसुखानण्डजान् बाहुल्येनानुगृह्णाति । दुष्प्रभावतया च समीपवर्त्तिनो भद्रतरून् परं निगृह्णाति । तदयमनिशमेवात्मन: प्राग्भवीयकर्म्मविपाकमनुभवन् कथं कथमपि दिनान्यतिवाहयति इति । तदहं ब्रवीमि नायं तरुसामान्यतया दर्शनीयस्त्वयेति उक्त्वा सा मौनमालम्बे । इति ।

———

# दुर्गेशनन्दिनी।

( लेखकः—श्री......... )

### द्वितीयखण्डस्य

### प्रथमः परिच्छेदः।

### आयेषा।

जगत्सिंहो यदा नयनमुदमीलयत, अपश्यत् तदा सुरम्यहर्म्यान्तरा पर्य्यङ्कमधिशयानमात्मानम्। यत्र प्रकोष्ठे स शयानो वर्त्तते, न सकदापि तत्र पूर्व्वमप्यागत इति। अत्यायतः कक्षः सुशोभितश्च बाहुल्येन; पादस्पर्शसुखेन कुथेन समावृतं प्रस्तरविनिर्मितं हर्म्यतलम्। तदुपरि गालावभृङ्गारमुखानि रजतगजदन्तादिनानामहामूल्यवस्तुरचितानि च सन्ति द्रव्याणि। कक्षद्वाराणां गवाक्षानाञ्च नीलपटपरिवृततया निरतिशयः स्निग्धः सञ्जातः प्रकोष्ठे दिवसालोकः। नानाविधेन मधुरसौरभेण सुरभीकृतः कक्षः।

निर्ज्जनतयैव नीरवः कक्षः। काचित् परिचारिका सुरभिवारिनिषिक्तव्यजनकरा नीरवमुपवीजयति राजपुत्रम्। अपरा काचित् भाषाशक्तिशून्येव चित्रपुत्तलिका तिष्ठति कियदन्तरे। यं हि द्विरदरदरचितं पर्य्यङ्कमधिशयानो वर्त्तते राजपुत्रः पृष्ठतस्तस्य, राजपुत्रस्य पार्श्वे समुपविश्य काचित् रमणी सतर्ककरेण तस्य शरीरक्षतेषु किमपि भेषजं विलिम्पति। कुथोपरि महार्घपरिच्छदः कश्चित् पाठानः ताम्बूलं चर्व्वयन् कस्मिन् पारसीकपुस्तके दृष्टिमाक्षिपति। न कोऽपि किञ्चित् भाषते, नवा शब्दं करोति।

राजपुत्रो नेत्रमुन्मील्य प्रकोष्ठं परितो दृष्टिमाक्षिपत्, पार्श्वञ्च परिवर्त्तयितुमचेष्टत। परं सर्व्वशरीरेषु दारुणवेदनया तिलार्द्धमपि चलितुं न शशाक।

या हि पर्य्यङ्कमध्यास्त रमणी, राजपुत्रस्योपक्रममवलोक्य सा वीणामधुरेणातिमृदुना स्वरेणावादीत्। "स्थिरो भव, मा चाञ्चल्यं गच्छ।"

राजपुत्रः क्षीणकण्ठेनाकथयत् "क्वास्मि!"। तेनैव मधुरस्वरेण प्रतिवचनं बभूव—आस्ते भवान् उत्कृष्टप्रदेशे एव। मा चिन्तयतु, मौनं भजताम्।

राजपुत्रः पुनरपि अतिक्षीणस्वरेणापृच्छत्—कियती तावत् वेला? मधुरभाषिणी पुनरस्फुटेन वचनेनाकथयत् 'अपराह्णः सम्प्रतिवर्त्तते। स्थैर्य्यमवलम्बताम्, कथां कथयति चेद्भवान् आरोग्यं प्राप्तुं नार्हेत्। भवति जोषमनामादयति, वयमुत्थाय यास्यामः'। राजपुत्रः कष्टेनाकथयत्—अपरैका कथा—का त्वम्? रमणी अकथयत्—"आयेषा।" निस्तब्धो राजपुत्र आयेषाया मुखं निरीक्षते स्म। किमियम् अन्यत्र कुत्राप्यवलोकिता। नहि अन्यदा कदापि दृष्टेति तत्र निश्चिता प्रतीतिरभवत्। आयेषाया वयःक्रमः द्वाविंशतिर्वत्सराणां भवेत्। आयेषा सुन्दरदर्शना, किन्तु तादृशं सौन्दर्य्यं छिन्नैः शब्दैः प्रकटयितुं नालम्। तिलोत्तमापि परमरूपवती; किन्तु आयेषायाः सौन्दर्य्यं नहि तादृशम्। स्थिरयौवनाया विमलाया अपि एतावत्कालपर्य्यन्तं रूपच्छटा लोकमनोमोहिनी आसीत्। आयेषारूपराशि नहि तदनुरूपोऽपि। कस्याश्चित् कस्याश्चित् तरुण्याः सौन्दर्य्यं वासन्तमल्लिकाया इव नवस्फुटं व्रीड़ासङ्कुचितं, कोमलं निर्म्मलं परिमलमयम्। तिलोत्तमायाः सौन्दर्य्यं तादृशम्। कस्याश्चित् रमण्या रूपं अपराह्णस्थलपद्ममिव निर्वासं मुद्रणोन्मुखं शुष्कपल्लवम् अथच सुशोभितं परं विकशितं पर्वं प्रभाविशिष्टं मधुपरिपूर्णम्। विमला तथाविधा सुन्दरी। आयेषायाः सौन्दर्य्यं [illegible]रविकरफुल्लायाः जलनलिन्या इव, सुविकाशं सुवासितं रसपूर्णं रा[illegible]प्रदीप्तं, न सङ्कुचितं नवा विशुष्कं; कोमलमथच

प्रोज्ज्वलं ; पूर्णदलराजिषु रौद्रं प्रतिफलति अथच सुखे हानौ न मोयते पाठक महाशय ! "रूपालोकः" कदापि किम् अवलोकितः। न दृष्टश्चेत् श्रुतः किम् ? अनेके सुन्दर्य्यो रूपेण दश दिश आलोकिताः कुर्व्वन्ति। श्रूयते अनेकेषां रूपा गृहमालोकितं कुरुते। ग्रजधाम्नि निशुम्भगृहे च कृष्णरूपेणापि आलोकः समभवत। वस्तुतः पाठकमहोदयेन बुद्धं को नाम रूपालोक इति। विपन्नः रूपेण आलोकयति। किन्तु स आलोकः प्रदीपालोक इव। किञ्चित् किञ्चित् अनुज्ज्वलं, तैलमपेक्षते अन्यथा न ज्वलति। गृहकर्म्मणि उपयुज्यते, गृहीत्वा गृहकार्य्यं निर्व्वर्त्तय; सतां पन, शय्यासवनादय, सर्व्वं निष्पत्स्यते किन्तु स्पृष्टे सति ग्रहस्मृतिर्भवति। तिलोत्तमापि रूपेण आलोकमकुरुत—स बालेन्दुज्योतिरिव सुविमलः सुमधुरः सुशीतलः किन्तु न तेन गृहकार्य्यं सम्पद्यते। नहि तथा प्रखरो दूरनिःसृतश्च। आयेशापि रूपेणालोकमकार्षीत, किन्तु स तरुण-सूर्य्यरश्मिरिव प्रदीप्तः प्रभामयः अथच यत्र पतति तदेव दहति।

यथा उद्यानान्तरा पद्मपुष्पम् तथैव रत्नाख्यायिकान्तरा आयेशा। तेन तस्या अवयवान् पाठकानां ध्यानगम्यान् कर्त्तुमभिलषामि यदि चित्रकरोऽभविष्यम्, यद्यत्रतुलिकां धर्त्तुं प्राभविष्यम्, यदि तं वर्णं कलयितुमशक्ष्यम्, न चम्पकं न रक्तं नवा श्वेतपद्मकोरकः अथच मिश्रितं त्रयमेव, ईदृशं वर्णं चेत् कलयितुमशक्ष्यम्। यदि तत् ललाटं तथैव अवन्धुरं कृत्वा अङ्कयितुं प्राभविष्यम्। अवन्धुरं अथ च विस्तीर्णं तत् मन्मथरङ्गभूमिमिव विधाय लिखितुम अशक्ष्यम्; तदुपरि तथैव सुवक्रां केशस्य सीमारेखां दातुं प्राभविष्यम्। तां रेखां तथैव स्फुटां तथैव च ललाटस्य गोलाकृतेरनुगामिनीं कृत्वा आकर्णं अङ्कयितुं प्राभविष्यम् ; कर्णोपरि तां रेखां तथैव विधाय लिखितुं प्राभविष्यम्। यदि तथैव कृष्णचौमभिव केशश्रेणिं लिखितुं प्राभविष्यम्। केशान्तरा तथैवसूक्ष्मंस्फुटञ्च

ललाटात् सीमन्तं रचयितुं प्राभविष्यम्। यदि तथैव केशं रञ्जितं कर्त्तुं प्राभविष्यम्; यदि तथैव लोलधम्मिल्लं रचयितुं प्राभविष्यम्। यदि तदतिनिविडं भ्रूयुगलमङ्कयन् दर्शयितुं प्राभविष्यम्। यत्र द्वे भ्रुवौ परस्परं संयोगाभिलाषिण्यावपि मिलिते नाभवतां, तस्मात् यथायथं वङ्किनायतने भूत्वा मध्यस्थलोपस्थितेरन्तरा एव यथा स्थूलरेखे अभवतां, ततश्च पुनः क्रमेण सूक्ष्माकारेण केशविन्यासरेखासमोपवर्त्तिन्यौ सूच्यग्रवत् समाप्ते अभवतां, तत् यदि दर्शयितुं प्राभविष्यम्। यदि तत् विद्युदग्निपूर्णमेघवत् चञ्चलं कोमलं चक्षुःपल्लवं लिखितुं प्राभविष्यम्; यदि तस्य नयनयुगलस्य विस्तृतमायतनं लिखितुं प्राभविष्यम्; तस्य उपरितनपल्लवस्य अधस्तनपल्लवस्य च सुन्दरीं वक्रभङ्गीं, तस्य चक्षुष नीलालक्तकप्रभां, तस्य भ्रमरकृष्णां स्थूलां तारकां च लिखितुं प्राभविष्यम्; यदि सा गर्व्वस्फीता रन्ध्रसमेता सुनासिका, तत् रसमयं अधरोष्ठं सा स्तूपकवरा प्रस्तरखेता ग्रीवा; तौ कर्णाभरणस्पर्शप्रार्थिनौ पीवरांसौ; तौ स्थूलकोमलौ रत्नालङ्कारखचितौ बाहू; यत्राङ्गुलीषु रत्नाङ्गुरीयकं हीनप्रभं तासामङ्गुल्यः; तत् पद्मारक्तं कोमलकरपल्लवं तत् मुक्ताहारभासानिन्दि पीवरोन्नतं वक्षः; सा इयद्दीर्घस्य वपुषः मनोमोहिनी भङ्गी; यदि एतत् सर्व्वं लिखितुं प्राभविष्यम् तथापि तूलिकास्पर्शं नाकरिष्यम्। आयेषायाः सौन्दर्य्यसारं, तस्य समुद्रस्य कौस्तुभरत्नं, तस्याः धीरकटाक्षः। सान्ध्यसमीरणकम्पितनीलोत्पलतुल्यं धीरमधुरकटाक्षं कथमिव लिखिष्यामि ?

राजपुत्रः आयेषां प्रति चिरं निरीक्षते स्म। तिलोत्तमा तस्य मनसि परिपतिता। स्मरणमात्रेण हृदयं विदीर्णमिवाभूत्, शिरासमूहान्तरा रक्तस्रोतः प्रबलेन वेगेन प्रधावितमभूत्, गभीरात् क्षतात् भूयो रक्तप्रवाहः सवेगं निरगात्; राजपुत्रः पुनरचेतनश्चक्षुषी न्यमीलयत्।

खट्टामारूढा सुन्दरी तत्क्षणे त्रासात् गात्रोत्थानमकरोत्। यो जन-

चित्रकम्बलासीन: पुस्तकमपठत् स अन्तरा त्वरा पुस्तकादाकृष्य चक्षु: सप्रेमदृष्ट्या आयेषां निरैक्षत, किमिन:, यतस्तां पश्यद्भ्यादुःखितायां तस्या यत् कर्णाभरणं दोलायितं पाठानस्तदेव चिरमपरिहृतनेत्रेण अवालोकयत्। आयेषा गात्रोत्थानं कृत्वा शनै: शनै: पाठानसमीपे गत्वा तस्य कर्णे अकथयत्—ओसमान! शीघ्रं वैद्यसन्निधौ जनं प्रेषय।

दुर्गजेता स्वां ओसमान एव चित्रकम्बले उपविष्ट आसीत्। आयेषा-वचनमाकर्ण्य स उत्थाय गत:। आयेषा एकस्या रौप्यपट्टपदिकाया उपरि स्थितात् पात्रात् किञ्चित जलवद्द्रव्यं गृहीत्वा पुनर्मूर्च्छितस्य राजपुत्रस्य ललाटे मुखे च असिञ्चत्। स्वांओसमानश्च अचिरेण वैद्यम् आदाय प्रत्यागच्छत्। वैद्यो बहुप्रयत्नेन रक्तस्रावं न्यवारयत्। तथा नानाविधम् औषधं आयेषा समीपे दत्त्वा मृदुस्वरेण व्यवहारव्यवस्थामुपादिशत्।

आयेषा कर्णे अपृच्छत्—भवान् कीदृशीमवस्थां पश्यति? वैद्य:—अति प्रवल: खलु ज्वर:।

वैद्यो यदा आमन्त्र्य प्रतिगच्छति तदा ओसमानस्तस्य पश्चाद् गत्वा द्वारदेशे तं मृदुस्वरेणाकथयत्—रक्षां प्राप्स्यति किम्? वैद्यो ऽकथयत् "आकृतिर्नहि तादृशी। पुनर्यातनायाम् मामाकारयिष्यसि।" ( क्रमश:। )

## समालोचनम्।

**साहित्यदर्पण:** खण्डद्वयात्मक:। विद्यावाचस्पति श्रीशालग्राम शास्त्रिसाहित्याचार्य्य विरचितया हिन्दीव्याख्यया विभूषित:। लखनऊनगरगतात् २२६ संख्यकामीनावादभवनात् श्रीमता श्यामसुन्दरशर्म्मभिषग्रत्नेन प्राकाश्यं प्रापित:। व्याख्यानस्य यावान्-

योऽस्माभिरालोचितस्तावता प्रतीयते सरलसुबोधया येख्या ग्रन्थगता मर्थानयं तथा स्पष्टीकृतवान् यथा सम्यगनधिगतगुरूपदेशानां, संस्कृतभाषायां तादृशं पाटवमनासादितवतामपि हिन्दीभाषिणामस्मेसदाम् अनल्पाम् उपकृतिमिदं घटयिष्यतीति। सर्व्वथा हिन्दीभाषिणां साधुवादशतमिते शास्त्रिपादा अर्हन्तीति मन्यामहे।

## विविधकथाः।

**शोकवार्त्ता।**—कोटालीपाड़वास्तव्याः प्रख्यातकीर्त्तयो महनीयचरिता महामहोपाध्यायकल्पाः पूर्व्ववङ्गानाममन्दगौरवाधारभूताश्चन्द्रकान्तन्यायालङ्कारपादाः परलोकं गता इति शोकपर्य्याकुला वयम्। अलौकिकप्रतिभावन्तस्ते नाम महात्मानः स्वप्रतिभया सर्व्वेषामेव विदुषां चेतांसि समावर्जयामासुः। फरिदपुर-राजेन्द्रकलेजाख्यविद्यालयस्य संस्कृताध्यापकपदमलङ्कुर्व्वाणास्ते विराजन्ते स्म। तेषां परलोकप्रयाणेन राजेन्द्रविद्यालयस्य तथाखिलस्य वङ्गप्रदेशस्य महत्याहितमापतितमिति कं नाम न स्वीकुर्वते मनीषिणः।

**वार्षिकाधिवेशनम्**—संस्कृतसाहित्यपरिषदो वर्त्तमानवार्षिकमहाधिवेशनं वैशाखे मासि एव सम्पत्स्यत इति विदांकुर्व्वन्तु सदस्यमहाभागाः; तत्र सदस्यानां मानससन्तोषापादनाय भासप्रणीतं प्रतिमानाटकं, महेन्द्रविक्रमविरचितं 'मत्तविलास' प्रहसनञ्चेति अप्रयुक्तपूर्व्वं मनोरमं रूपकद्वयं प्रयोक्ष्यत इति प्रयोगानुशीलनं सम्यक् प्रचलति इत्यपि समवगच्छन्तु रसिकाः सामाजिकवर्य्याः। अधिवेशनवासरं तूर्णमेव विज्ञापयिष्यामः।

**अखिलभारतवर्षीयसंस्कृतमहासम्मेलनम्**—एतस्य वर्त्तमान वार्षिकमधिवेशनं मनीषिसह्रसमवेक्षितायां वाराणसीनगर्य्यां भवितेति विगते आग्रानगराधिवेशने पण्डितप्रकाण्डानां श्रीमतां मदनमोहन मालव्य महोदयानां प्रार्थनया निरूपितम्। साम्प्रतं मालव्यमहाशया राजनीतिपर्य्यालोचनव्यापृता विविधविषयसम्पादनव्यग्रतया अलब्धावसरा अधिवेशनगुरुकर्त्तव्येषु मनो निवेशयितुम् अप्रभव इति श्रूयते। आशास्महे सत्वरमेव सुनिष्पादितमङ्गलकृत्या काशीस्थविद्वन्मण्डली सहायास्तत्रभवन्तो मालव्यपादाः अधिवेशनकृत्येषु तथा यत्नगतं विधातुं प्रभविष्यन्ति यथा तादृशानां महात्मनां प्रयत्नपरम्परया अधिवेशनकृत्यं विगतह्रायनाधिवेशनादपि साफल्येन साधुतरं निष्पत्स्यत इति।

**संस्कृतशिक्षापद्धतिः।**—विगते भारतसंस्कृतमहासम्मेलने आधुनिकसंस्कृतशिक्षापद्धतेः कांश्चिद्दोषान् प्रदर्श्य तत्-संशोधनक्रमेण कश्चित् नवीनः शिक्षाक्रमः उपस्थापितः। गृहीतश्च स तदा तत्रोपस्थितैः सर्व्वप्रदेशप्रतिनिधिभूतैर्विद्वद्भिः। सोऽयं शिक्षाक्रमः बहुविस्तृततया संक्षिप्यास्माभिः प्रकाशितोऽस्यां पत्रिकायाम्। आशास्महे यद् संस्कृतविद्याविचक्षणाः पण्डिताः सूक्ष्मेक्षिकयालोच्य स्वमतं यदि पत्रिकायामस्यां प्रकाशयेयु स्तदा संस्कृतप्रचारस्य पन्थाः कथञ्चित् सुगमो भविष्यतीति।

**गान्धारेषु संस्कृतविद्यालयः।**—आसीत् पुरा गान्धार-राष्ट्रं सनातनधर्म्माश्रितैरेवाध्युषितम्। कालेन महम्मदीयैरधिकृते महम्मदीयभूयिष्ठे जातेपि गान्धारराज्ये, इदानीमपि सनातनधर्म्मीया स्तत्र न विरलत्वं गताः। सम्प्रति गान्धारनगरे सनातनधर्म्माश्रिता-नामेव शिक्षार्थं कश्चित् विद्यालयः प्रतिष्ठापितो विद्योत्साहिना गान्धारराजेन। तदर्थं सुरम्यः कश्चित् राजप्रासादश्च प्रदत्तः।

अल्पेनैवाह्वाभिस्तत्र शतं विद्यार्थिनः समागताश्च। आशास्महे वयम् एष विद्यालयः कालेन गान्धारजनपदस्य संस्कृतशास्त्रालोचनकेन्द्रं भविष्यति, प्रकाशतां नेष्यति च नामशेषान् बहून् एव संस्कृतभाषा-निबद्धान् शास्त्रग्रन्थान् इति।

**गुरुकुलवार्षिकोत्सवः**—विगतस्य फाल्गुनस्य पञ्च-विंशतितिथिवसादारभ्य जनविंशदिवसपर्यन्तं गुरुकुलवार्षिकोत्सवः महासाफल्येन सुसम्पन्नोऽभवत्। सत्यपि वाष्पयान धर्मघटे (Railway strike) अस्मिन्महोत्सवे महान् जनसमागमः सञ्जातः। अत्र तथा सम्मेलनानामपि विशेषतमभवत्। तत्र कवितासम्मेलने पण्डित बुद्धदेव विद्यालङ्कार महोदयः, सरस्वती-सम्मेलने पण्डितकृष्णदत्तशास्त्रिमहोदयः, आयुर्वेदसम्मेलने च कलिकातामहानगरीवास्तव्यः कविराजः श्रीतारादत्त वक्रसिं-महोदयः सभापतित्वमलङ्कृतवान्।

स्वामिश्रद्धानन्दसन्न्यासिमहोदयो धर्मविषये शिक्षाविषये च सारगर्भसदुपदेशेन समागतजनानामज्ञानं विवेकञ्च नितरां प्रवर्द्धयामास। महोत्सवस्य चतुर्थदिवसे यथाक्रमं चतुर्दशवर्षपर्यन्तं ब्रह्मचर्यमवलम्ब्य गुरुकुलमधीत्य अभ्यागतेभ्यः विद्यार्थिभ्यो गुरु-कुलाचार्य्य उपाधिपदं प्रदत्तवान्। अस्मिन्वर्षे अष्टौ ब्रह्मचारिणः गुरुकुलविश्वविद्यालयस्य स्नातकपरीक्षामुत्तीर्य्य गुरुकुलविश्वविद्या-लयोपाधिमवापुः।

**माघस्य साधारण-सभा**—गतमाघस्य त्रयोविंशदिवसे भृगुवासरे सायं सप्तमघटिकायां पण्डितवराणां श्रीमतां सतीशचन्द्रसिद्धान्तभूषणमहोदयानामध्यक्षत्वेन परिषदः माघीयं साधारणाधिवेशनं सुसम्पन्नम्। तत्र च पण्डितवर्य्येण श्रीमता जानकीनाथसाहित्यशास्त्रिणा प्राचीनभारते राष्ट्र-

संख्यानमिति शीर्षको निबन्धः सभायामनुवाचितः। ततो निबन्धविषयमवलम्ब्य पण्डितवर्यैः कृष्णप्रसन्नतर्कवागीशमहोदयैः राय— श्रीयतीन्द्रनारायणचतुर्धुरीणमहोदयैश्च कृते समालोचने सभाभङ्गो जातः।

**फाल्गुणस्य सभा**—गतफाल्गुणस्य अष्टाविंशदिवसे रविवासरे सायं सप्तमघटिकायां पण्डितवराणां श्रीयुक्तसतीशचन्द्रसिद्धान्तभूषणमहोदयानां आध्यक्ष्येण परिषदो मासिकम् अधिवेशनं सुसम्पन्नम् जातम्। श्रीमता उपेन्द्रनाथसेनगुप्तकाव्यतीर्थेन आथर्व्वणं प्राणतत्त्वमितिशीर्षको निबन्धः सभायामनुवाचितः। आयुर्व्वेदोक्तप्राणशब्देन तड़िच्छक्तिबुध्यते—इतीदमासीत् निबन्धेऽस्मिन् प्रतिपाद्यं वस्तु। नानाविधयुक्तीनां समुल्लेखेन परमोपादेये अस्मिन् निबन्धविषये श्रीयुक्तकृष्णप्रसन्नतर्कवागीशादिभिः समालोचिते सभाभङ्गो जातः।

**वेदसभा**—गताब्दस्य सप्तदशदिवसे रविवासरे खानड़ाख्ये नगरे वेदसभायाः वार्षिकउत्सवो भविता। वङ्गवरेण्यश्च श्रीयुक्त आशुतोष मुखोपाध्यायः सभानायको भविष्यतीति नानाप्रदेशवास्तव्यानां संस्कृतवाग्विदग्धानां वैदिकानाञ्च विदुषां समागममत्र आशास्महे वयम्।

**वङ्गीयसाहित्यपरिषत्**—वङ्गीयसाहित्यपरिषद अष्टाविंशे वार्षिकाधिवेशने वङ्गभाषानिबद्धप्रबन्धविशेषाणां लेखकेभ्यः पारितोषिकदानमुद्घोषितम्। एवमुत्साहदानेन प्रतिवर्षं परिषत् वङ्गभाषायाः उत्कर्षं भृशं साधयतीति परमानन्दस्थानमस्माकम्। अतः प्रवर्त्तन्तां तत्रभवन्तो वहुशो निबन्धरचनायै इति साग्रहं याच्यतेऽस्माभिः।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—जैष्ठे, ५म वर्षस्य २य संख्या ।

## श्रीसुब्रह्मण्यभुजङ्गस्तोत्रम् ।

( लेखकः—मान्द्राजप्रदेशस्थकल्लडकुरुचिसंस्कृतविद्यालयाध्यापकः
श्रीशङ्करशास्त्री । )

उमेशं सुरेशं नमस्कृत्य गौरीं
विधीन्द्रादिवृन्दैकवन्द्यैकदन्तम् ।
गुहायां वसन्तं स्वभासा लसन्तं
गुहं देवदेवात्मजं स्तोतुमीहे ॥ १ ॥
गिरीशाधिरूढं गिरीशस्य सूनुं
महाम्भोधितीरे वसन्तं कुमारम् ।
त्रिशूलं वहन्तं ज्वलन्तं गिरन्तं
दयापूरमीड्यं सदा सन्निषेव्यम् ॥ २ ॥
सदा सेन्दुबिम्बं तदन्तःसरोजे
तदूर्ध्वं लते द्वे ततो वारिदश्च ।
तदन्तश्च नक्षत्रमालां वहन्तं
विचित्रस्वरूपं भजे विश्वरूपम् ॥ ३
वपुष्येक वेषं मनस्येकभावं
वचस्येकवृत्तिं भजन्तं पतन्तम् ।
करेणोद्धरन्तं निजानन्यभावम्
स्तुवे वल्लिसेनापतिं स्वप्रकाशम् ॥ ४ ॥

विराजन्मणिग्रस्थमञ्जीरदीप्रं
प्रदीप्यद्विवस्वत्क्वणत्काञ्चिकम्रम्।
लसद्विद्रुमाभं स्फुरच्छक्तिजातैः
श्रितोरस्कमीशं स्तुवेऽहं गुहं तम् ॥ ५ ॥
मृगाङ्काद्धचूड़ेशसूनुं शरेजं
स्ववाह्वोर्हतारिं सुरेन्द्रस्य मित्रम्।
मुनिप्रेमपात्रं विधिस्तुत्यगात्रं
पवित्रं सुरत्नं स्तुमः सच्चरित्रम् ॥ ६ ॥
भवाम्भोधिमध्ये निमज्जन्तमारा-
दुपागम्य भक्तं करेण स्वनाम्ना।
समुद्धृत्य मा भीस्तवेति ब्रुवन्तं
दयापूर्णनेत्रं नमामीशसूनुम् ॥ ७ ॥
विधीन्द्रादयस्ते सुधाधामकान्तौ
वसन्तोऽत्र नाके तपस्तुल्यभाग्याः।
तथापि स्वभक्तं स्वतुल्यं दधानं
त्वदन्यं न जाने भवानीसुतेश ॥ ८॥
स्वकीयावलीजैः कृपापूरभङ्गैः
द्विषड्भिर्नमीणः स्फुरत्पद्मशङ्कैः।
परिस्पर्शयन्तं कलिं मोचयन्तं
श्रियं दापयन्तं गुहं त्वां नमामि ॥ ९ ॥
दयासिन्धुमीड्यं सुरेन्द्रादिमृग्यं
गुहावासयोगीन्द्रवृन्दैकलक्ष्यम्।
हिकेन्द्रैर्धरेन्द्रैस्तथा त्रिस्वतन्त्रै-
र्नपास्यं शरण्यं स्तुमः स्वामिनं त्वाम् ॥ १० ॥
विपक्षेन्द्रवक्षोभिदा दक्षपक्ष-
स्फुरत् पक्षपत्रिप्रभादीप्रहस्तम्।

सुराधिप्रपाद्यं सुधाशेषमित्रं
गजेशं गणेशानुजं चिन्तयामि ॥ ११ ॥
विरिञ्चाण्डपीण्डीकरण्डीकृताग्र-
प्रचण्डैकदोर्दण्डशुण्डाभिशौण्डम् ।
स्वकाण्डप्रकाण्डैररिं खण्डयन्तं
गलद्दानगण्डास्यसोदर्यमीडे ॥ १२ ॥
भवाङ्के शयानं भवानीदृगन्तै-
र्मुहुः पीयमानं दयार्द्रैर्हसन्तम् ।
रुदन्तं पिबन्तं पयः स्तन्यमुख्यै-
र्विभान्तं गुहायां गुहं डिम्भमीडे ॥ १३ ॥
मयूरेशवाहं महामोहदाहं
महन्मुक्तिदोहं महादीप्तिदेहम् ।
महायोगिगेहं दयासिन्धुगाहं
भजेऽहं प्रणम्राधिसन्दोहलेहम् ॥ १४ ॥
क्वणद्रत्नकाञ्च्या भुवं भासयन्तं
विभास्वत्किरीटैर्दिवं द्योतयन्तम् ।
ज्वलन्नूपुराभ्यामधो दीपयन्तं
श्रयामो गुह त्वां गिरिं भापयन्तम् ॥ १५ ॥
महाशौर्यशूरादिसंहारकस्त्व-
मनस्येव सन्तं दुराशापिशाचम् ।
निराकर्तुमीशो न चेदन्यदेवैः
कृतं वामवृत्तैरतस्त्वं शरण्यः ॥ १६ ॥
प्रपन्नार्तिहर्त्रे सुरेशारिहन्त्रे
गजावल्लिभर्त्रे शिवाशर्मकर्त्रे ।
सुखैकप्रदात्रे नमस्तत्पोष्ट्रे
कलिव्रातमैत्रे नमो लोकधात्रे ॥ १७ ॥

श्रुतिर्भीतभीता यदीयाद्गुणौघा-
दुदाहोमितीत्थं वदन्त्यागमायम्।
चुराशीलभाजामपीशो नृणां यो
भवानीसुतं त्वां नमामो भजामः॥ १८॥

विनादैत्यहन्तुः सुराग्रे विहन्तुः
निलिम्पाधिहन्तुर्गजापाणिधन्तुः।
मृडानीशशाङ्कार्धमौलिप्रमोहात्
गुहादन्यदेवं न जाने न जाने॥ १९॥

त्रिलोक्यामवन्तो दिशां देवसंघा
वसन्तोऽत्र ते तु स्वकार्य्यैकधुर्य्याः।
परार्थं वहन्तं श्रमं दुःसमाधं
गजेश त्वदन्यं न मन्ये न मन्ये॥ २०॥

त्वदीयाममेयां दृढां भक्तिवल्लीं
सदैतान् मुनीन्द्रान् भृशं प्रार्थयेऽहम्।
अतस्त्वां प्रपन्नः शरण्यं भवारे
दयालो ममाशां भवानातनोतु॥ २१॥

नृणां पापिनामप्यघौघं विनाश्य
द्रुतं ज्ञानमुत्पाद्य मोहं दहन्तम्।
भवाद्भक्तिभाग्यं दृढं धारयन्तं
भवन्निघ्नदेवं न जाने न जाने॥ २२॥

विभो बालसत्वात् फलापेक्षया वा
ददामीति तुभ्यं प्रतिश्रुत्य किञ्चित्।
अदात्वेऽथ शप्ताः पुनस्तद्गृहीत्वे
मनः पूरयित्वे नमस्ते गुहाय॥ २३॥

पिचण्डे शयानां त्रिलोकीं विचित्रां
निरीक्ष्याशु चित्ते विधिप्रष्ठदेवाः।

निलीना यदीयं स्तुवन्ति स्म नित्यम्
स्वरूपं नमस्ते विराड्रूपधर्त्रे ॥ २४ ॥
त्रयीवेद्यभूमन् गुहामध्यधामन्
मुनिध्येयनामन् महद्गेयसामन् ।
मनोहारि दामन् दिशासु प्रभामन्
सुरारातिशामन् नमस्ते नमस्ते ॥ २५ ॥
नमो गन्धशैले चिरं तस्थुषे ते
नमो बर्हिणे ते भवत्पादभाजे ।
नमस्तेऽब्धितीराय गन्धाचलाय
नमस्ते गुहायै मुनिभ्यो नमोऽस्तु ॥ २६ ॥
नमो वल्लिसेनापते स्कन्दराका-
सहस्रप्रकाशाननेन्द्रादिवन्द्य ।
अभीतिप्रकदाने समर्थं स्वहस्तं
मयालब्धयत्नां तदेवाद्य याचे ॥ २७ ॥
सवित्री पिता वा तथा सोदरो वा
सखायश्च भार्य्या सुता बन्धुवर्गः ।
मदीया अथान्येऽपि सन्ति त्वदीयाः
दयार्हास्तथाहं न किं त्वत्कृपार्हः ॥ २८ ॥
पदे हस्तचक्षुः श्रुतिघ्राणमित्थं
बहूनीन्द्रियाणि स्थिराणीति या धीः ।
मदीयां निषिद्धां धियं सार्थिकां तां
कुरुष्वेति याचेऽद्य यावच्च जीवम् ॥ २९ ॥
भवं तत्तुकामस्तदङ्घ्रिं सदाहं
भजे मन्दबुद्धिस्तदायत्तसिद्धिः ।
मदीयामिमां बुद्धिमक्षोभयित्वा
भवद्भावनाढ्यां तनुष्वेति याचे ॥ ३० ॥

अलं पूजया वा कृतं ध्यानतो वा
जपेनापि तुल्यं फलं नैव जाने ।
अतोऽन्यं न मन्ये त्वदायत्तसिद्धे-
स्त्वमेवैकतुल्यः शरण्यः शरण्यः ॥ ३१ ॥
कुमारं प्रणम्यार्त्तिहारं फणीश-
स्वरूपं चिदानन्दरूपं सुरेशम् ।
नमामि प्रणौमि प्रपद्ये शरण्यं
प्रपद्ये शरण्यं स्मरामि स्मरामि ॥ ३२ ॥
भुजङ्गप्रयातेन वृत्तेन कृतं
गुहेऽनन्यभक्त्या मुदा शङ्करेण ।
तदद्य स्मरारेः सुतस्यास्तु पदं
परां तृप्तिमुत्पादयन्मङ्गलाय ॥ ३३ ॥

## जीवब्रह्मविवेकः । *

( लेखकः—श्रीहरिहरशास्त्री
अध्यापकः—हिन्दुयुनिभारसिटि, वाराणसी । )

प्रोन्मीलन्मणिमौलिनापि मिलितं काशीनरेशस्य यत्
चित्ते तत् स्मरता चिरेण चरणद्वन्द्वारविन्दं गुरोः ।
"जीवब्रह्मविवेक"रूपमनघं सन्दर्भंदर्भासनं
विश्रामाय वितन्यते कृतधियो गृह्णन्तु सानुग्रहम् ॥

अथ खलु श्रूयन्ते "आत्मा वा अरेद्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" "द्वे ब्रह्मणी वेदितव्ये परं चापरमेव च" इत्यादयः

* प्रफेसर—आर, एल, टार्नार एम, ए, महोदयस्य सभापतित्वे काशीहिन्दुविश्वविद्यालयान्तर्भूतसंस्कृतसोसाइटीत्याख्यसभायाः प्रथमेऽधिवेशने पठितः ।

श्रुतयः। तत्र जीवब्रह्मणोर्द्वयोरेव तत्त्वसंवेदनस्य निर्व्वाणनिदानतायाः परिप्राप्ततया तन्निरूपणं कर्त्तव्यमिति फलवानयं प्रारम्भः। निरूपयितव्येऽत्र च प्रकृतार्थे विपरीतपक्षप्रतिक्षेपावश्यकत्वादादौ तेषां राद्धान्त एव समुत्थाप्यते। तत्र देहात्मवादिमतम्—

"तथा च लौकायतिकाः परलोकापवादिनः।
चैतन्यखचितात् कायादात्माऽन्योऽस्तीति मन्वते॥
अत्र चत्वारि भूतानि भूमिवार्य्यनलानिलाः।
चतुर्भ्यः खलु भूतेभ्यश्चैतन्यमुपजायते॥
किण्वादिभ्यः समेतेभ्यो द्रव्येभ्यो मदशक्तिवत्।
अहं स्थूलः कृशोऽस्मीति सामानाधिकरण्यतः॥
देहः स्थौल्यादियोगाच्च स एवात्मा न चापरः।
मम देहोऽयमित्युक्तिः सम्भवेदौपचारिकी॥
शरीरेष्वेव जीवत्वं युक्तं दुःखं सुखं तथा।
कृतीच्छासंस्मृतिद्वेषमतयस्तद्गुणा मताः॥
कृशस्य तव दुःखानि सुन्दराः सुखिनो वयम्।
इत्यादिव्यवहारस्य प्रामाण्यञ्च ततोऽन्यथा॥"

अयमाशयः—यथा गुड़द्राक्षादयः प्रागसतीमपि मदशक्तिमासादितसुराकारपरिणामाः प्रपद्यन्ते, तथा मृदाद्यवस्थायामचेतनान्यपि भूम्यादिभूतानि शरीराकारपरिणतानि चैतन्यं प्राप्नुवन्ति। अत एव समकालीनयावच्छरीरानुगतानतिरिक्तजीवानां कल्पनापेक्षया देहेष्वेव जीवत्वं कल्पनीयं लाघवात्। सुखदुःखादयोऽपि सुतरां शरीरेष्वेव वर्त्तन्ते। मम देहोऽयमिति प्रतीतिः, 'राहोः शिरः' इत्यादिवदभेदेऽपि आरोपितभेदावगाहितयोपपद्यते।

ननु बाल्यानुभूतस्य वस्तुनो यौवनादिदशायामुत्पन्नेन शरीरान्तरेण चादृष्टस्य भेदेनैव स्मरणं न स्यात्, बाल्ययौवनवार्धकादिदशाभेदेन शरीरभेदस्य प्रत्यक्षसाक्षिकतया स्मृतिसंस्कारकर्म्मकारणभाव-

प्रयोजकसमानाधिकरणरूपप्रत्यासत्तिविरहात्। प्रतिदिनजीव-स्वीकारे तु जीवानां नित्यतया सर्व्वावस्थास्वप्येकस्यैव जीवस्य सत्त्वेन नानुपपत्तिगर्भ्भोऽपि। अत एतोक्तमाचार्य्यादयनेन—"नान्यदृष्टं स्मरत्यनेन नैकं भूतमपक्रमात्।" इति चेत् न—

"बाल्ययौवनवार्द्धक्यदशाभेदेन भिन्नता।
दुर्लभत्वात् प्रमाणस्य शरीरादौ न चेष्यते॥"

न च क्षुल्लत्वमहत्त्वादिरूपपरिमाणवैलक्षण्यमेव शरीरभेदं साधयेदित्यपि न साम्प्रतम्, परिमाणवैलक्षण्यस्य कार्य्यवैलक्षण्य-प्रयोजकत्वे प्रत्येकधान्यादिपरिमाणतो विलक्षणपरिमाणवत्त्वेन प्रतीयमानानां तत्पुञ्जानां कार्य्यान्तरतापत्तेः। राशेः कार्य्यान्तरत्वस्य सर्व्वैरेवास्वीकृतत्वात्। अपि च सर्व्वदशायामपि शरीरस्यैक्यादेव पितृ-जन्यत्वे सति पुंस्त्वादिलक्षणात्मजत्वादिकं युवादिशरीरेष्वपि सर्व्वजन-व्यवहृतं न विरुध्यते, गर्भस्थशरीरात् तेषां पार्थक्ये तेषु पितृजन्यत्वा-भावेनात्मजत्वव्यवहारो नोपपद्येत। यदि च तज्जन्यवृत्तिरपर-जातिरेव तज्जन्यताव्यवहारनियामिकेति पितृजन्यशरीरवृत्तिवैत्र-त्वादिरूपतादृशजातिमुपादाय युवशरीरादावप्यात्मजत्वव्यवहारो नानु-पपन्न इत्युच्यते, तदा तुल्यन्यायेन घटत्वादिरूपापरजातिमादायापि यावद्घटेष्वेककुम्भकारकर्त्तृकत्वं न विरुध्येत। तदुक्तम्—

"यदि तज्जन्यजातीयो निग्रहोऽपि तदात्मजः।
तदैकः कुम्भकारः स्याद् यावत्कलसकारकः॥"

अत्राहुर्व्वार्त्तिकव्याख्यानावसरे वाचस्पतिमिश्राः—"यथा मदिरा-वयवेषु प्रत्येकमेव मदशक्तिरस्ति, न पुनः समुदायमात्रसमवायिनी, एवं शरीरावयवेष्वपि प्रत्येकमेव चैतन्येन भवितव्यम्। न च वैयात्यात् कायसमुदायाश्रयमेव चैतन्यं नावयवाश्रयमिति शक्य-माख्यातुम्, त्रिचतुरावयवच्छेदेऽपि चैतन्योपलम्भात्। तस्माद-वयवानां प्रत्येकं चैतन्ये शरीर एकस्मिन् बहवश्चेतनाः स्युः।

भवतु, किं नो बाध्यत इति चेत् न विवक्षाभिप्रायत्वेन स्वतन्त्राणां न किञ्चिदपि कार्य्यं जायेत। न च बहूनामेकाभिप्रायनियमो दृष्टः। काकतालीयन्यायेन स्यादेकाभिप्रायत्वं, न पुनरस्य नियमो दृष्टचर इति।" ("तात्पर्य्यटीका," ४०१ पृः)

किंच—"अहं शरीरी जानामि तवातिस्थूलविग्रहः।
इति प्रमातो देहेभ्यः पार्थक्यमपरात्मनाम्॥"

ननु "राहोः शिरः" इत्यादिप्रमायाः सर्व्वसिद्धतया तादात्म्यस्यापि षष्ठ्यार्थत्वमवश्यमङ्गीकर्त्तव्यम्। एवं च "तवातिस्थूलविग्रह" इत्यादि प्रतीतिबलात् न जीवतच्छरीराणां परस्परभेदसिद्धिरिति चेत् न—यतो देवदत्तादिनामवत् राहुपदस्यापि शरीरविशेष इव तच्छरीरावच्छिन्नजीवबोधकत्वं सर्व्वसम्मतम्, "राहुश्चन्द्रमसं द्वेष्टी"ति प्रतीतेः प्रमात्वानुरोधेन तत्पदस्य तत्रापि वृत्तेरावश्यकत्वात्। अतो 'राहोः शिरः' इत्यादावपि जीवविशेषपरतयैव तत्प्रतीतेः प्रमात्वं नानुपपन्नम्। ननु गौरवादतिरिक्तजीव एव नास्तीति षष्ठ्यादेरभेदार्थकत्वं नितरामभ्युपगन्तव्यम् इति चेत्, न—

"षष्ठी वेन्मत्वयो वापि चेदभेदस्य बोधकः।
शरीरस्य शरीरं वा देहो देहीति धीर्भवेत्॥"

नन्वेवमपि बाल्ययौवनादिकालभेदेन शरीरवैलक्षण्येऽ युवशरीरादौ पितृजन्यत्वानुपपत्तितादवस्थ्यमिति चेत्, न—भ्रम्यादिकपालद्वयसंयोगरूपासमवायिकारणपर्य्यन्तं घटरूपकार्य्यं दण्डस्य व्यापार इति तर्कग्रन्थे जगदीशतर्कालङ्कारभट्टाचार्य्यैः प्रदर्शितम्, तद्वत् निषेकावधिकमामरणाच्छरीरारम्भकसंयोगपर्य्यन्तमात्मजे पितुर्व्यापारः स्वीक्रियते। तादृशव्यापारसम्बन्धेनात्मजं प्रति पितुः कारणत्वमविरुद्धमेव। अत एव ज्वलनादिकं निर्वाप्य देवदत्तादेर्देशान्तरापाये कतिपयकालोत्तरमोदननिष्पत्तावपि देवदत्तादौ पाचकत्वव्यवहारोऽप्येति।

नन्वे तादृशकुदृष्टिकल्पनापेक्षया सर्व्वावस्थास्वप्येकमेव शरीरं कल्पयितुमुचितम् चेत्, न—

"कारणानान्तु वैषम्यं कार्यभेदनियामकम्।
अन्यथा माषमुद्गादेरैक्यापत्तिर्न वार्य्यते॥"

यत्र यत्र कारणवैचित्र्यमस्ति, तत्र कार्य्यवैचित्र्यमिष्यत एव, प्रकृते तु शुक्रशोणितरूपकारणमात्रजनितस्य शरीरस्य कथमवस्थाभेदमात्रनिबन्धनो भेदः सेत्स्यतीत्यपि नाशङ्कनीयम्, यतः शुक्रशोणितसम्बन्धमूलकस्य कस्यचित् पार्थिवविशेषस्य तत्संयोगविशेषस्य वा जन्मावधिमरणपर्य्यन्तस्थायित्वोपगमेऽपि दशाविशेषे पार्थिवान्तरसंयोगविशेषास्तद्ध्वंसा अपि शरीरकारणानि स्वीकर्त्तव्यमङ्गीकार्य्यम्। अन्यथा सर्व्वावस्थास्वपि तेषां समष्टस्य(?)चमापद्येत।

ननु प्रोक्तपार्थिवान्तरसंयोगविशेषादीनां शरीरोपकारकत्वेऽपि मूलीभूतकारणैक्यात् कार्य्यैक्यं स्वीकार्य्यम्। एवं च मूलकारणस्य शुक्रशोणितसम्बन्धस्यैक्येन शरीरैक्यमपरिहार्य्यमिति चेत्—

"सुरौदनगुडादीनां दारुतद्भस्मनोस्तथा।
अत्रविस्रवारीणामैक्यं किमपराध्यति॥"

तस्मात् परिमाणादिवैलक्षण्यदर्शनात् नैकं शरीरमिति स्थितम्। सोऽयं चैत्र इत्यादिप्रत्यभिज्ञा च ज्वालादिप्रत्यभिज्ञावत् समाधेया। अतोऽकामिनाप्यतिरिक्तो जीवः स्वीकरणीयः, अन्यथा बाल्यानुभूतस्य यौवनादिदशायां स्मरणं दुरुपपादमेव वर्त्तेत।

न चैव मत्युपादाननिष्ठसंस्कारस्योपादेये संक्रमः स्वीक्रियते, तथाच बाल्यशरीरस्य यौवनशरीरोपादानतया पूर्वशरीरानुभूतस्योत्तरशरीरेण स्मरणं नानुपपन्नमिति वाच्यम्, तथा सति विच्छिन्ने करादौ तदनुभूतस्य स्मरणं न स्यात्। अवस्थितावयवसंयोगेभ्य एव खण्डावयवुत्पादात्। तदुक्तमाचार्य्यैः—(न्यायकुसुमाञ्जली)
"खण्डावयविनं प्रति च विच्छिन्नानामनुपादानत्वात्।"

अथ परमाणुपुञ्जात्मकमेव शरीरादिकमस्तु, संस्थानविशेषविशिष्टैः परमाणुपुञ्जैरेव घटपटशरीरादिप्रतीतुरपपत्तौ कार्य्यद्रव्य एव माना-भावात्। परमाणूनां नित्यत्वेऽपि विशेषणीभूततादृशसंस्थान-विशेषाणामुत्पादविनाशानादायैव शरीरादीनामुत्पादविनाशव्यवहारः, 'घटोऽयं नीलो भविष्यति' 'शिखो विनष्ट' इत्यादिव्यवहारवत्। न च शरीरादिकानि दृश्यानि परमाणवस्त्वदृश्या इति कथं विरुद्धयो-र्दृश्यत्वादृश्यत्वयोरेकत्र समावेश इति वाच्यम्, शब्दादिगुणानामिव दृश्यत्वस्याप्यव्याप्यवृत्तित्वाभ्युपगमात्, तथाच परमाणुषु तादृश-संस्थानविशेषदशायां दृश्यत्वं, तदभावदशायामदृश्यत्वमिति का विरोध-वार्त्तापि। महत्त्वं न परिमाणान्तरं, किन्तु विलक्षणसंस्थानवत्त्वमेव, तदेव च द्रव्यस्य प्रत्यक्षतायां प्रयोजकम्। अतः प्रत्येकपरमाणो-रतीन्द्रियत्वेऽपि संस्थानविशेषावच्छिन्नस्य शरीरादेर्द्रव्यस्य प्रत्यक्षत्वं नानुपपन्नमित्यपि कश्चित्। तथा च बाल्यशरीरारम्भकनित्यपर-माणूनामेव यौवनशरीरारम्भकतया न प्रागुक्तस्मृतिसंस्कारयोर्हेतुहेतुम-द्भावहानिः। इति चेदत्र तात्पर्य्यटीकाकृतः—"न च परमाणूनां चैतन्यं, ते हि प्रत्येकं वा चेतयेरन् मिलिता वा। पूर्व्वस्मिन् अनेक-चैतन्ये एकस्मिन् शरीरे ऐकमत्यनियमो भवेत्। न हि नानाचेतना-नामैकमत्यनियमो दृष्टः, मिलितानां तु चैतन्ये परमाणूनामा-वापोद्वापभेदेन मेलकस्य नानात्वात् स एवान्योपलब्धस्यान्येन स्मृत्य-भावप्रसङ्गः।"—(३५८ पृः)

किरणावलीकृतस्तु—"तन्मूलाः परमाणवः स्थिरत्वात् प्रतिसन्धातृ-त्वेनाहङ्कारविषया भविष्यन्तीति चेन्न तेषामतीन्द्रियत्वात्। अपि च शरीरगोचरत्वे तस्य बाह्येन्द्रियजन्यत्वमापद्येत, तथाच चक्षुरादि-व्यापारोपरमे अहमिति प्रत्ययो न स्यात्, मानसत्वे वाऽस्य शरीरस्य तद्गुणानां च गौरत्वादीनामपि मानसत्वप्रसङ्गात्। न हि निर्गुणं द्रव्यमुपलभ्यते, तथा चान्धादीनां रूपादिवदहंप्रत्ययानुपपत्ति-रित्याहुः।—(१४० पृः)

अत्रेत्थं व्याख्यातवन्तो 'भास्कर'कृतः—"अहमितिप्रत्ययस्य शरीरविषयत्वे चाक्षुषत्वं मानसत्वं वा वाच्यम्। नाद्यः। अन्धस्यापि जायमानत्वात्। नान्त्यः। शरीरस्य मानसत्वे च तद्गुणस्य रूपस्यापि तत्त्वेऽन्यस्यापि गौरत्वादिप्रत्यक्षप्रसङ्गः। निर्गुणस्य द्रव्यस्यानुपलब्धेः।" (११३ पृः)

केचित्तु शरीरमितिप्रतीतिविषयतया अनेकपरमाणुषु कल्पने गौरवात् शरीरे परमाणुपुञ्जात्मकत्वस्यैवासिद्धेस्तत्र चैतन्यस्वीकारे तद्दोषतादवस्थ्यमित्याहुः।

अन्ये तु परमाणूनां चैतन्ये चैत्रशरीरपरमाणुभिः कदाचित् मैत्रशरीरारम्भे चैत्रेणानुभूतस्य मैत्रेणापि स्मरणप्रसङ्ग इत्यप्याहुः।

अस्मद्गुरुचरममहामहोपाध्यायराखालदासन्यायरत्नमहाशयास्तु—परमाणूनां जीवत्वे विनिगमनाविरहेण चिरावस्थाय्यसंख्यपरमाणूनां जीवत्वस्वीकारावश्यकतया सुखादिकं प्रति तेन रूपेण कारणत्वावश्यकतया चाश्रयभेदेन सुखादेरनन्ततापत्तिः। न च बहुत्वादिसंख्यावत् सुखादिरूपात्मविशेषगुणानामपि नानाधिकरणवृत्तित्वे न किञ्चिदपि बाधकमिति वाच्यम्, नानाधर्म्मिषु सुखादिकल्पनापेक्षया विशेषाभावातिरिक्तसामान्याभावस्यैव धर्म्मिग्राहकप्रमाणेन सुखादिमत्तया एकस्यैव परमाण्वाद्यतिरिक्तजीवस्य कल्पयितुमुचितत्वात्। एवम् एकमात्रद्रव्यदर्शने संयोगादीनां व्यासज्यवृत्तिगुणानां चाप्रत्यक्षध्रौव्ये चानेकाश्रितगुणप्रत्यक्षे स्वाश्रययावद्धर्म्मिषु इन्द्रियसन्निकर्षस्य हेतुतया मनसश्च परमाणोरेकदा सुखाद्याश्रययावद्धर्म्मिषु सन्निकर्षासम्भवेन तेषां मानसप्रत्यक्षानुपपत्तेरिति प्राहुः।

यत्तूक्तं विज्ञानस्कन्धवादिभि 'रह'मित्याकारकालयविज्ञानधारयैवोपपत्तेः कृतमतिरिक्तात्मकल्पनेन। येन बीजादङ्कुरोत्पत्तिर्न कुसूलस्थबीजादिष्वङ्कुरजनकतावच्छेदकं कुर्वद्रूपत्वं नाम किमपि वैजात्यमभ्युपेयम्। तदभ्युपगमेऽपि यदि बीजस्य स्थिरत्वं

तर्हि कुशूलस्थबीजेऽपि कुर्व्वद्रूपत्वसत्त्वात् ततोऽप्यङ्कुरोत्पत्तिः स्यादिति सर्व्वेषामिव भावानां क्षणिकत्वसिद्धिः । तदुक्तमात्मतत्त्व-विवेकटीकायां तार्किकशिरोमणिना रघुनाथेन—"अङ्कुरमकुर्व्वाणा-दङ्कुरकारिणस्तदकुर्व्वाणात् तत्कारिणा एवं तत्तदकुर्व्वाणात् तत्-कारिणो भेदसिद्ध्या तेषु क्षणिकत्वसत्त्वयोर्व्याप्तिसिद्धिरिति भावः । सिद्धव्याप्तिकाच्च तस्मात् सत्त्वात्ते क्षणिकत्वानुमानमिति" (४१ पृः ॥ः सा, स, ) तथाच कुर्व्वद्रूपत्वेनैव क्षणिकविज्ञानेषु उत्तरोत्तर-विज्ञाननिष्ठसंस्कारोत्पादकत्वेन नानुपपत्तिलेशोऽपि आत्मनामिति । तदसत् भूतलजलसंयोगादिरूपसहकारिविरहादेव कुशूलस्थ-बीजादङ्कुरानुत्पत्तेः कुर्व्वद्रूपत्वस्य तद्रूपेण कारणत्वस्य चानङ्गीकारात् क्षणिकानन्तपदार्थकल्पने अतीवगौरवाच्च ।

एतेन भेर्य्याकाशसंयोगाधीनशब्दस्याकाशनिष्ठत्वमिव चैतन्यस्ये-न्द्रियार्थसन्निकर्षाधीनत्वादिन्द्रियनिष्ठत्वमेवास्तु कर्त्तृत्वकारणत्वयोर्व्विरोधे मानाभावादिति मतमपास्तम् । इन्द्रियाणां चैतन्ये तत्तदिन्द्रिय-नाशे तदनुभूतस्य स्मरणानुपपत्तेरनुभवितुरभावात् । अत एव न्याय-सूत्रम्—"नेन्द्रियार्थयोस्तदविनाशेऽपि ज्ञानावस्थानादिति । (३।२।१८)

अपि चेन्द्रियाणां चैतन्यस्वीकारे चक्षुषश्चाक्षुषवत्त्वं त्वचः स्पार्शन-वत्त्वं स्वीकार्य्यम्, अन्यथा रूपोपलब्धिरुपहतनयनस्यापि प्रसज्येत । एवं च योऽहं घटमद्राक्षं सोऽहं घटं स्पृशामीत्येकस्यैव चाक्षुष-स्पार्शनवत्तानुभवेन नेन्द्रियाणां तद्वत्त्वं सम्भवतीत्यतिरिक्तस्यैवात्मनः कल्पयितुमुचितत्वम् ।

महर्षिरक्षपादस्तु नित्यजीवसिद्धये—"पूर्व्वाभ्यस्तस्मृत्यनुबन्धाज्जा-तस्य हर्षभयशोकसंप्रतिपत्तेः" (३।१।१८) रित्यादिना हेत्वन्तराण्यपि प्रत्यपादयत् । सद्योजातस्य बालस्य स्मितरुदितादिनाऽनुमीयन्ते हर्षभयशोकाः । ते च सुखदुःखसाधनाधिगमतदनुस्मरणाभ्यन्तर-कारणका एव भवितुमर्हन्ति, तथैव दृष्टत्वात् । इह चास्य सुखदुःख-

साधनानुभवस्तदानीं नास्तीति तदनुस्मरणमेव हर्षभयशोकनिदानं स्यात्। स्मरणमपि तदनुभवप्रभवमनुभवश्चेह जन्मनि सद्योजातस्य न सम्भवतीति जन्मान्तरानुभवसुखदुःखसाधनानुस्मरणनिमित्तक एवास्य हर्षभयशोकसमुत्पाद इति जन्मान्तरानुगमात्मा नित्य आत्मा।

ननु शिशोर्जन्मान्तरानुभूतस्मरणे सर्व्वदा सर्व्वस्मरणप्रसङ्ग इति चेन्न कल्पनायाः फलानुसारित्वात् यावत्कार्य्यं कारणकल्पनात् सर्व्वदा सर्व्वस्मरणं प्रसज्येत। न च तत्कल्पनायां किमपि कारणमुपलभ्यते, न चैकदर्शनात् सर्व्वं कल्प्यं दृष्टमपि वा निह्नोतव्यं परीक्षकैः। अपिच जातिस्मराश्च केचिदद्यत्वेऽपि देहान्तरवृत्तं प्रकाशयन्तः समुपलभ्यन्ते। एवं च पयसस्तृप्तिहेतुत्वमनुस्मरन् बालकः स्तन्याभिलाषेण मातुः स्तनतटे दृष्टिं निदधाति। स्तनप्रपानप्रवृत्तिस्तु इष्टसाधनताज्ञानमन्तरेण न सम्भवति जन्मान्तरानुभूतेष्टसाधनत्वस्य तदानीं स्मरणादेव सूपपद्यते।

अत्रेदमवधेयम्—जन्मान्तरवादिनये स्वकर्म्मवशात्मानवदेहधारणोत्तरं कोटिवर्षाणि व्याप्य कीटपतङ्गपतत्रिप्रभृतिविग्रहपरिग्रहदशायां न खलु कदापि तादृशं स्मरणं, चक्षुपरिस्तनस्थापनेऽपि तदीयपानचेष्टाया अदर्शनात् परं तु तदुत्तरमपि बहुव्यवहितमानवदेहधारणदशायामेव तदित्यस्य रहस्यं तर्करसिका एव पश्यन्तु।

स्यादेतत्—अस्तु तर्हि मन एव ज्ञानादेरधिष्ठानं, तस्य च नित्यतया न प्रागुक्तदोषाणामवकाशः, इति कृतमतिरिक्तात्मकल्पनेन।

अत्रोक्तं सूत्रकृद्भिः—"ज्ञातुर्ज्ञानसाधनोपपत्तेः संज्ञाभेदमात्रम्"—(न्यायसूत्रम् ३।१।१७) यथा ज्ञातारमभ्युपगच्छता ज्ञानसाधनानि चक्षुरादीनि प्रतिपद्यन्ते, तथा मन्तारं प्रतिपद्यमानेन मतिसाधनमभ्युपेयम्। यच्च तन्मतिसाधनं तन्मन इति संज्ञाभेदमात्रे पर्य्यवसानं स्यात्। तदुक्तं पक्षिलस्वामिना—"ज्ञातर्य्यात्मसंज्ञा न मृष्यते मतिसाधनं त्वभ्यनुज्ञायते। तदिदं संज्ञाभेदमात्रं नार्थे विवाद इति।"

—( ३।१।१७ ) यत्तूक्तं जयन्तभट्टेन—"केनचित्......करणेन भवितव्यमिति तत्रात्मसंज्ञा भवेदात्मनि च कर्तरि मनःसंज्ञेति ।" (न्यायमञ्जरी ४४१ पृः ) तन्न संगच्छते, परैः सिद्धकरणभावस्य तादृशपदार्थस्य आत्मसंज्ञयाऽनभिधानात् भाष्यादिविरोधाच्च ।

अयमभिसन्धिः—मनसो ज्ञानाद्याश्रयत्वस्वीकारेऽपि रूपादिज्ञानेषु व्याप्तिदर्शनादपरोक्षावभासस्येन्द्रियाधीनतया सुखादिविषयकमपरोक्षज्ञानमिन्द्रियजन्यं जन्यापरोक्षज्ञानत्वादित्यनुमानेन चक्षुरादिविविक्तं किमपीन्द्रियं व्यवतिष्ठते । ततसंयुक्ततयैव चक्षुरादिकं चाक्षुषाद्युपधायकम् अन्यथा चक्षुःसन्निकृष्टस्य त्वगादिसन्निकर्षे चाक्षुषत्वाचादेर्युगपदुत्पादप्रसङ्गः स्यात् । तस्य महत्त्वे चक्षुस्त्वगादौ युगपत संयोगसम्भवेन तद्दोषतादवस्थ्यमिति तस्याणुत्वमपि स्वीकरणीयम् । एवं च क्व लाघवम् ?—केवलं नामभेदमात्रस्यैवावशीयमानत्वात् ।

यदि च ज्ञानाश्रयतया सिद्धं मनो नापेक्षते करणान्तरमित्युच्यते, तदा रूपरसादिष्विन्द्रियसम्बद्धेषु युगपदालोचनानि प्रसज्यन्ते सामग्रीसान्निध्यात् । अत एवोक्तं प्रशस्तपादेन—"नापि मनसः, करणान्तरानपेक्षित्वे युगपदालोचनस्मृतिप्रसङ्गात् ।" ( ६८ पृः ) ननु कर्तृत्वं करणत्वं चोभयमेवास्तु मनस इत्यपि नाशङ्कनीयम् । तथा सति मनसोऽणुत्वे नैकदा करचरणयोः संयोगासम्भवादेकदा करावच्छेदेन सुखस्य पादावच्छेदेन दुःखस्यानुत्पादः स्यात् । न हि सुखदुःखयोर्यौगपद्यमनुभवविरुद्धम्, तदुक्तं—"तत्त्वचिन्तामणौ" प्रत्यक्षखण्डे नानावच्छेदेनैकदा चन्दनदहनादिसम्बन्धे सुखदुःखयोरेकदा अनुभवसिद्धत्वे नेष्टापादनात् । न च तद्यौगपद्यप्रत्ययो भ्रमः, बाधकाभावात्" ( ७६७ ) किं च ज्ञानाद्याश्रयस्यात्मत्वे सहसैव चिरप्रोषितागतदयितजनसन्दर्शनसुखोद्गतसकलशरीरव्यापिरोमहर्षादिदर्शनं विरुध्यते । न हि सम्भवत्यणुपरिमाणविशिष्टस्य

मनसः शिरःप्रभृति सर्व्वगात्रेषु युगपत् सम्बन्धः। अपि च शरीरा-धिष्ठातुरणुत्वे एकदा वामदक्षिणकरचरणाधिष्ठानासम्भवेन तेषां युगपत्सञ्चालनादिक्रियानुपपत्तिर्गीर्वाणशापप्रतेन अपहस्तयितु-मशक्या स्यात्। एवं तत्त्वज्ञानिनां कायव्यूहसम्पादनेन युगपदेव बहुषु शरीरेषु कर्म्मफलोपभोगोऽणुपरिमाणमनसो भोगा-श्रयत्वकल्पने विरुध्येत, कमलदलभेदनवत् तत्कालभेदानुमाने कायव्यूहकरणस्यैवानर्थक्यं स्यात्, एकस्मिन्नेव शरीरे कालभेदेन भोगसम्भवात्।

आस्तिकास्तु—

"आत्मानं रथिनं विद्धि शरीरं रथमेव तु।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च॥
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः।—"

(कठोपनिषद् ३।३—१०)

इत्यादिश्रुतिप्रामाण्यादात्ममनसोरैक्यं भावयितुमपि बिभ्यति। यदुक्तं विश्वनाथेन—"मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेदिति तन्न मनोरमम्। यतः.—महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः (४।१।६) इति वैशेषिकसूत्रे महत्त्वादेर्बहिरिन्द्रियजन्यप्रत्यक्ष एव कारणत्वं प्रतिपादितम् अन्यथातिरिक्तालोकादेरपि अनेकद्रव्य-वत्त्वाभावाद् रूपाभावाच्चात्मनस्तद्गतज्ञानादिगुणानां च मानसप्रत्यक्षं न स्यात्। अतएवोक्तमुपस्कारकारैः—उपलब्धिरिति बहिरिन्द्रियेणे-ति शेषः।" तथा च मनसोऽणुत्वेऽपि न तद्गतज्ञानादीनां मानस-प्रत्यक्षानुपपत्तिः। अत एव माध्वादिराद्धान्ते जीवानामणुत्व-मङ्गीकृतम्।

गुरुचरणास्तु—"प्रत्यक्षसामान्यं प्रति महानणुत्वाश्रया ये समवे-तास्तेऽवच्छेदकतासम्बन्धेन तद्‌भेदवत्परिमाणवत्त्वेनैव हेतुत्वं स्वीक्रियते, न तु महत्त्वेन तथाच मनसामणुत्वेऽपि आत्मवत्त्व-

विरहेणोक्तपरिमाणरूपकारणसत्त्वात् तदीयसुखादिप्रत्यक्षं निराबाधमेव। परमाणूनां द्व्यणुकानां च स्पर्शवत्त्वेन महत्त्वानाश्रयत्वेन चोक्तकारणविरहात् तेषां तदाश्रितगुणानां च न प्रत्यक्षम्। ( तत्त्वसारः ४ पृः )

( क्रमशः )

# सदाचारशीलो न वा कालिदासः ?

( लेखकः—के, ए, रामलिङ्गशास्त्री । )

कविकुलतिलकं कालिदासं किल केचिद् गोपालबालकं कथयन्ति ; अपरे तावदभीकाग्रगण्यं गणिकालम्पटमारटन्ति ; किञ्चास्य तदुपबृंहणानि इतिहासाभासप्रायाणि यद्यपि समुपलभ्यन्ते, तथापि इमानि प्रामाणिकचरित्रविरुद्धानीति न निर्दिदिक्षामः ; दिङ्मात्रम् अनन्यगत्योदाह्रियते—

कालिदासेन साकं वाणिन्या वीटीरसमास्वादयति पित्रा श्रीनीलकण्ठभट्टाचार्य्येण स्वसकाशं प्रेषितः श्रीकण्ठपदलाञ्छनो भवभूतिकविः स्वविरचितोत्तररामचरितग्रन्थविषया आदित आन्तमपठत्। 'किमपि किमपि मन्दं मन्दमासत्तियोगादविरलितकपोलं जल्पतोरक्रमेण। अशिथिलपरिरम्भव्यापृतैकैकदोष्णोरविदितगतयामा रात्रिरेव व्यरंसीत्॥" इति पद्यपठनावसरे 'कुतमधिकम्' ? इत्यभ्यधायि कविसार्वभौमेण। '…रात्रिरेव व्यरंसीत्' इति भवभूतिः कथयाञ्चकार, अत्र बिन्दुमधिकमाधायानन्तरुदिते 'रात्रिरेवं व्यरंसीत्' इति पाठे स्वारस्यमधिकमनुभवन् पुरतो निर्दिष्टमाशयमुवाच कविप्रकाण्डः। भवभूतिस्तु—ताम्बूलोदके पर्णं ? सुधाऽ-

धिकं रूपितेति वेश्यायै कथयतीति जने; अनन्तरं कालिदासः उत्तररामचरितप्रबन्धं सादरं स्वोकृत्य कदलीत्वग्भिः सुनिबद्धं कृत्वा रसो बहिः प्रस्रवतीति, पिबेऽपर्यत्वत्रभवानिति ददाविति। एतदादिभिरितिहासवादैर्वेश्यामुपभुञ्जानस्य चरितं काव्यं वा कथं नु नाम प्रमाणादर्शकोटिमाटौकेतेति स्वयमेव प्रियपाठकमहाभागा विचारयन्तु। किंच मेघसन्देशे—'तस्याः किञ्चित्करधृतमिव प्राप्तवानीरशाखं हृत्वा नीलं सलिलवसनं मुक्तरोधोनितम्बम्। प्रस्थानं ते कथमपि सखे! लम्बमानस्य भावि ज्ञातास्वादो विवृतजघनां को विहातुं समर्थः?॥" इत्यसभ्यं दूताय वारिदाय मन्त्रयते यक्षमुखेन। शाकुन्तलचतुर्थेऽङ्के—'अयं स ते तिष्ठति सङ्गमोत्सुको विशङ्कसे भीरु! यतोऽवधीरणाम्। लभेत वा प्रार्थयिता न वा श्रियं श्रिया दुरापः कथमीप्सितो भवेत्?॥" इति स्वियमेव मनसिकृत्य श्रियमर्थान्तरन्यासविधया प्रतिपादयति। "अहो! चेष्टाप्रतिरूपिका कामिजनमनोवृत्तिः, अहं हि—अनुयास्यन्मुनितनयां सहसा विनयेन वारितप्रसरः। स्थानादनुच्चलन्नपि गत्वेव पुनः प्रतिनिवृत्तः॥" इति स्वीयमवस्थान्तरमेव स्वानुभवसिद्धं दुष्यन्तवचनव्याजेन निरूपयति, "एवं हि नामाऽऽत्मानुमानसम्भावितेष्टजनचित्तवृत्तिः प्रार्थयिता जनो विडम्बते," तथाहि—स्निग्धं वीक्षितमन्यतोऽपि नयने यत् प्रेरयन्त्या तया यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव। मागा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी सर्वं तत्किल मत्परायणमहो! कामी स्वतां पश्यति॥" इति च कामुकानामवस्थां शृङ्गाराहिकया प्रदर्शयति। विक्रमोर्वशीये तृतीयेऽङ्के—चित्रलेखा—( उर्वशीं प्रति ) "अइ मुद्धे? अण्णसंकन्तप्पेमाणो णाअरा भारिआए अहिअं दक्खिणा होन्ति।" 'अयि मुग्धे! अन्यसंक्रान्तप्रेमाणो नागरा भार्यायामधिकं दक्षिणा भवन्ति इति। मालविकाग्निमित्रे च—बकुलावलिका—( मालविकां प्रति )

"भमरसम्पादो भविस्सदित्ति वसन्दावदारसब्बस्सं किंण चूदप्पसवो ओदंसिदव्वो ?" भमरसंपातो भविष्यतीति वसन्तावतारसर्व्वस्वं किं न चूतप्रसवोऽवतंसितव्यः ?" इति भ्रमरपीड़ासमं धारिण्या आक्रमणं भवेदिति भिया चूतकलिकावतंसमहृशः अग्निमित्रभूपतेरुपभोगः कथं भीतया भवत्या परिक्लिश्यताम् इति प्रोत्साहयति। मेघसन्देशे— 'गच्छन्तीनां रमणवसतिं योषितां तत्र नक्तं रुद्धालोके नरपतिपथे सूचिभेद्यैस्तमोभिः। सौदामन्या कनकनिकषस्निग्धया दर्शयोर्व्वीं तोयोत्सर्गस्तनितमुखरो मा स्म भूर्व्विक्लवास्ताः॥" इति उज्जयिनीनगरीरामणीयकदिदृक्षया—"वक्रः पन्थास्तव भवतु च प्रस्थितस्योत्तराशां सौधोत्सङ्गप्रणयविमुखो मा स्म भूरुज्जयिन्याः।" इति प्रोत्साह्य, "विद्युद्दामस्फुरणचकितैस्तत्र मुग्धाङ्गनानां लोलापाङ्गै-र्यदि न रमसे लोचनैर्व्वञ्चितोऽसि॥" इति, 'पादन्यासक्वणितरश-नास्तत्र लीलावधूतैरत्नच्छायाखचितवलिभिश्चामरैः क्लान्तहस्ताः। वेश्यास्त्वत्तो नखपदसुखान् प्राप्य वर्षाग्रविन्दूनामोक्ष्यन्ति त्वयि मधुकरश्रेणिदीर्घान् कटाक्षान्॥" इति गणिकाकटाक्षपात्र-तामभूरिति। रघुवंशे—इन्दुमतीस्वयंवरागतभूपतिसंशावलि-वर्णनप्रस्तावे—'यस्मिन्महीं शासति वाणिनीनां निद्रां विहारार्धपथे गतानाम्। वातोऽपि नास्रंसयदंशुकानि को लम्बयेदाहरणाय हस्तम्॥" इति वाणिनीवसनापहरणप्रसक्तिं भङ्ग्यन्तरेण प्रतिषेधति। मालविकाग्निमित्रे—इरावतीं नाम कामपि भोगदासीम् अग्निमित्रस्य वर्णयति; विक्रमोर्व्वशीये च—स्वर्वेश्याम् उर्व्वशीमेव प्रधाननायिकामुपनिबध्नाति, शाकुन्तलेऽपि—'अहिणवमहुलोलुवो तुमं तह परिचुम्बिअचूअमञ्जरीम्। कमलवसदिमेत्तणिव्वुदो महुअर! विम्हरिदोसि णं कहम्?॥" इति पद्यस्य गानेन हंसपदिकानाम्न्या कयापि वाराङ्गनया स्वयं भूङ्गमधिक्षिप्त इति च दुष्यन्तमुखेन प्रतिपादयति। एतदादिभिरुदाहरणनिरूपणैः सर्व्वथा

वेश्याङ्गना-सम्पर्कटोऽयं कविरिति प्रतिभाति।

अत्रेदं वक्तव्यम्—

काव्यस्य कवयितुर्वा गुणदोषपर्यालोचने प्रवृत्ते विमर्शकैः प्रथमतस्तावत् तादृश्यमवलम्ब्यैव यत् किमपि निरूपणीयम्, न तु कियदवयं दृष्ट्वा सर्वथा दूषणमात्रपरैः, न वा गुणकणिकां निरीक्ष्य नितरां शिरःकम्पनतत्परैः। यदि नाम मैवमन्दे शे अश्लीलव्याहारेण कविर्दूष्येत, तर्हि, 'दर्शयन्ति शरन्नद्यः पुलिनानि शनैः शनैः। नवसङ्गमसव्रीडा जघनानीव योषितः॥" (रा-कि-स-३०) इति मुग्धाङ्गनानां स्त्रीणां नवसङ्गमे क्रमेण प्रदर्श्यमानैर्जघनैः सममुपमिमानो धन्यधन्यधन्यमूर्धन्यधन्य ? आदिकविरपि 'कन्नः' इत्युपहासास्पदमभ्युपेत। वेश्यानां स्थितिगतिभाषा-सम्प्रदायादि प्रतिपादनं यदि गर्हणीयताभाजनम्, तर्हि,—'एष हि गणिकामातुरधिकारः' इति महता प्रबन्धेन तद्रूपवर्णनशुश्रूषुरो दण्डिकवीन्द्रोऽपि गणिकाकामुक इति जल्प्येत। यथा किल उत्तमाङ्गना निजदयितस्यापथान्निवारणे स्वकीयहावभावादिभिः सरसतामापाद्य, रामभद्र-युधिष्ठिरादिवत् प्रवर्त्तितव्यम्, न तु रावण-दुर्योधनादिवत् इति हृदयङ्गममुपदिशति। नन्वेवमेव काव्यमपि प्रबोधयति साहित्यसौहित्यादिभिः सारस्यासारपुरःसरमिति खलु आलङ्कारिका आमनन्ति। ईदृशं संवनननैपुण्यं,ननु कान्तकुमारीणां सृष्टिभिः कविभिराधेयं भवति। एतदेव च तत्तज्जनपद-जानपदतीर्थाधारस्थास्थानिदानसमुद्देशदेवतायतनादीनाम् अवस्थिति-गति रीति-सन्निवेशसदसद्विवेकादिकं कविवरैस्तैरेव खलु वर्णनीयम्; एतादृशमहाकवीनां सन्तानैरेव हि हृदयालूनां हृदयान्न कदाप्यपसरन्ति, सन्ततं हृदयहारीणि भवन्ति च। तत्र तावदादर्शभूतेन कवितल्लजेन रम्यं वा अरम्यं वा सर्वमपि वस्तु तत्तद्देश-काल-स्वभावानुगुणमेव वर्णितमिति न दूषणीयोऽयं कविकुलतिलकः। किं च, महाकवेरमुष्य रघुवंशा-

ष्टिषु काव्यरत्नसुधानिधिषु चादित आन्तम् आलोड़ितेषु आचारप्रेमिक एवायं कविर्लाम इति विशदोभवेत् नम्। तथाहि—रामचरितामृत-सागरं श्रीमद्रामायणं सर्व्वंष्वग्रन्थेष्वनुसरन्नसौ कविसार्व्वभौमः—आचार-पदं तत्तत्सन्दर्भसमुचितं सरसमुपनिबध्नाति, गोप्तरि दिलीपे कामधेनुपरिचरणार्थं गहनं गाहमाने सति, यथा किल पौरजनाः प्रमोदेन प्रभूतेन उत्सवसमये वीथ्यां सर्व्वेश्वरे वा सार्व्वभौमे वा युवराजे वा समागते सति फल-पल्लव-प्रसून-पटवास-लाज-मुष्ट्यादि तदुपरि विक्षिपन्ति, तन्वेवमेव बाललताः प्रसूनैः प्रजेश्वरमवाकिरन्निति सम्यगुपवर्णयति—तद्यथा—'मरुत्प्रयुक्ताश्च मरुत्सखाभं तमर्च्यमारादभिवर्त्तमानम्। अवाकिरन् बाललताः प्रसूनैः आचार-लाजैरिव पौरकन्याः॥" इति "पृक्तस्तुषारैर्गिरिनिर्झराणामनोकहाकम्पितपुष्पगन्धी। तमातपक्लान्तमनातपत्रम् आचार-पूतं पवनः सिषेवे॥" इति पद्येन शैत्य-सौरभ्य-मान्द्यमेदुरः समीरो राजर्षिमातपक्लान्तं प्रजार्थव्रतपूतमसेवतेति प्रस्तौति। षष्ठसर्गे 'सा शूरसेनाधिपतिं सुषेणमुद्दिश्य लोकान्तरगीतकीर्त्तिम्। आचार-शुद्धोभयवंशदीपं शुद्धान्तरक्ष्या जगदे कुमारी।" इति इन्दुमती-स्वयंवरघट्टे कविः स्ववचनेन, परिणये वधूवरयोः पावनवंशसम्भवत्वमवश्यं परीक्षणीयमिति ज्ञापयति। सप्तमसर्गे—'तदञ्जनक्लेदसमाकुलाक्षं प्रम्लानबीजाङ्कुरकर्णपूरम्। वधूमुखं पाटलगण्डलेखम् आचार-धूमग्रहणाद्बभूव (२७)' इति अजमहाराजस्य इन्दुमत्याश्च विवाहप्रयोगवर्णने गृह्योक्तविधानेन लाजहोमानन्तरं धूमग्रहणेनोपगतां वध्वा वदनश्रियं वर्णयति। अनन्तरपद्येन आर्द्राक्षतारोपणं वर्णयति, न कोऽपि कविर्विवाहप्रोद्दिष्टां शास्त्रानुसारिणीं रीत्योपवर्णयति। द्वादशसर्गे—'—अवज्ञेन काकुत्स्थः प्रयुक्तमथ दूषणम्। न चक्षमे शुभाचारः सदूषणमिवात्मनः।" इति जनस्थाने दूषणस्य रक्षसोऽभि-

सुखमायोधनार्थमागमनं, रामभद्र आत्मनो दूषणं मैथिलीविषयक-मनात्मज्ञैः कृतमिव न सेहे इति वर्णयति। चतुर्दशसर्गे—'राजर्षि-वंशस्य रविप्रसूतेरुपस्थितः पश्यत कोऽपरोऽयम्। मत्तः सदाचार-शुचेः कलङ्कः पयोदवातादिव दर्पणस्य।" इत्यस्मिन् पद्ये महा-कविरयं रामचन्द्रवचनव्याजेन स्वस्मिन् स्वीये काव्ये च पिशुनैः कैश्चिदारोपितं दूषणं 'सदाचार-शुचेः' इति विशेषणेन वाचकान् रसिकाग्रगण्यान् प्रबोध्य परिहरतीत्यभ्यूहितुं शक्यते। मालविकाग्नि-मित्रे चतुर्थेऽङ्के-विदूषकः—'देवि' दक्खिस्सं'ति आआरपुप्फगहण-कारणादो पमदवणं गदोम्हि।' इति, विक्रमोर्व्वशीये द्वितीयेऽङ्के—चित्रलेखा—( सस्मितम् ) 'एदस्सिं मुहुत्ते जाणिस्सामो को कंत्त-जिस्सदित्ति। आआरं दाव पडिवज्जस्स' इति। तृतीयेऽङ्के कञ्चुकी—'रमणीयः खलु दिवसावसानवृत्तान्तो राजवेश्मनि, तथाहि—उत्कीर्णा इव वासयष्टिषु निशानिद्रालसा बर्हिणो धूपैर्जालविनिःसृतै-र्वलभयः सन्दिग्धपारावताः। आचार-प्रयतः सपुष्पबलिषु स्थानेषु चार्चिष्मतीः सन्ध्यामङ्गलदीपिका विभजते शुद्धान्तवृद्धो जनः॥" इति। शाकुन्तले चतुर्थेऽङ्के—गौतमी—'जादे! एसो दे आणन्द-सन्दिणचक्खुसा परिस्सजन्दो विअ गुरू उवट्ठिदो, आआरं दाव पडिवज्जस्स' इति, पञ्चमेऽङ्के—कञ्चुकी—'अहो! नु खल्वीदृशो-मवस्थां प्रपन्नोऽस्मि। आचार इत्यवहितेन मया गृहीता या वेत्रयष्टि-रवरोधगृहेषु राज्ञः। काले गते बहुतिथे मम सैव जाता प्रस्थान-विक्लवगतेरवलम्बनार्था॥" इति च स्वीयदृश्यकाव्येष्वपि तत्तत्सन्दर्भानुरूपम् आचारपदं बहुशो निबध्नाति। अनाचरिष्णो-र्वचनं न पृथग्जनोऽपि बहु मन्यत इति विदितचरमेवैतद्विद्वद्वरिष्ठा-नाम, किंच, रघुवंशप्रारम्भे—"वागर्थाविव...' इति पद्येन,—'शब्द-जातमशेषं तु धत्ते शर्व्वस्य वल्लभा। अर्थस्वरूपमखिलं धत्ते मुग्धेन्दुशेखरः॥' इति शिवपुराणवर्णितं शब्दार्थयोरविनाभूतं

सम्बन्धं शिवायाः शिवस्य च स्वरूपमनुसन्धत्ते महाकविकुलगुरोऽय-मागमप्रामाण्याभ्युपगन्ता । वेदानामारम्भे उच्चारणीयेन प्रणवेन समं वैवस्वतं मनुं मानवानां सर्वेषामादिममपि प्रज्ञतानुसारेण मह्योक्षितामाद्यमुपमिमानः कवीन्द्रोऽयम्—'वैवस्वतो मनुर्नाम' इति पद्येन प्रणवोच्चारणपूर्वकं वेदारम्भविधिमनुस्मारयति, शुद्धिमति मानवे वंशे जातं दिलीपम् क्षीरनिधावुदितेनेन्दुना साकं तुलयन् कविकोकिलोऽयम् 'आजन्मशुद्धानाम्' इति सूचितम्, 'यस्यैतेऽष्टा-चत्वारिंशत्संस्काराः' 'अनिन्द्येषु विवाहेषु पुत्राः सन्तानवर्धनाः ।' इत्यादिस्मृतिप्रतिपादितमर्थम्—'सन्ततिः शुद्धवंश्या तु परत्रेह च शर्मणे ।' इति दिलीपवचनेन प्रकाशयति, 'ज्ञाने मौनम्…' इति पद्येन व्यधिकरणयोर्ज्ञानमौनयोः, क्षमाशक्त्योः, त्याग श्लाघा-विपर्ययोश्च स्वसामानाधिकरण्ये प्रयतितव्यं सर्वैरिति द्योतयति । 'अथाभ्यर्च्य विधातारम्' इत्यत्र च पुत्रमभोपसुभिर्भ्रूणः पूजामागम दृष्टां कर्तव्यां सूचयति, 'पवनस्यानुकूलत्वात्…' 'मन्दं मन्दं नुदति-पवनश्चानुकूलो यथा त्वाम्' 'शान्तानुकूलपवनश्च शिवश्च पन्थाः' इत्यादिभिः पद्यमणिभिः शकुनशास्त्ररहस्यमुपदिशति । 'धर्मलोप-भयाद्राज्ञीम्' इति पद्येन, 'ऋतुस्नातां तु यो भार्याम्' इति स्मृति-व्यवस्थामवबोधयति, 'नूनं मत्तः परं वंश्याः' 'मत्परं दुर्लभं मत्वा' इति पद्यरत्नाभ्याम्, तथा शाकुन्तले षष्ठेऽङ्के एतत्समानार्थकेन 'अस्मात् परं वत ! यथाश्रुतिसम्भृतानि को नः कुले निवपनानि करिष्यतीति । नूनं प्रसूतिविकलेन मया प्रसिक्तं धौताश्रुशेषमुदकं पितरः पिबन्ति ।" इत्यनेन पद्येन च, 'एष वा अनृणो यः पुत्री' 'प्रजया पितृभ्यः' इत्यादिश्रुतिबोधितं तत्त्वं विज्ञापयति । इन्द्रोपस्थानप्रतिनिवृत्तिसमये कल्पतरुमूलच्छायाश्रितायाः सुरभेरन-दृष्टया दिलीपस्य सन्ततिस्तम्भ इति वर्णयन् नीतिमिमामुपदिशति —'प्रतिबध्नाति हि श्रेयः पूज्यपूजाव्यतिक्रमः ।' इति, 'तव मन्त्र-

कृतो मन्त्रैः' इति पद्येन मन्त्र-शस्त्रयोस्तारतम्यभावं सम्यग् विवेचयति, 'क्षणमात्रमृषिस्तस्थौ सुप्तमीन इव ह्रदः' इति पद्येन समाहितचित्तस्य लक्षणमवगमयति, रजःकणैः खुरोद्धूतैः स्पृशद्भि-र्गात्रमन्तिकात्। तीर्थाभिषेकजां शुद्धिमादधाना महीक्षितः॥' इति सूक्तेन, 'आग्नेयं भस्मना स्नानमवगाह्यं तु वारुणम्। आपो-हिष्ठेति च ब्राह्मं वायव्यं गोरजःस्मृतम्॥' इति स्मृतिविहित-स्नानप्रकारं स्मारयति, 'अदूरवर्त्तिनीं सिद्धिं राजन्!' इति सुभाषितेन, 'अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव' इत्यन्यत्रेव निमित्तमनुमोदते, 'इत्याप्रसादादस्यास्त्वं परिचर्यापरो भव।' इति सूक्त्या समस्तदेवतात्मिकायाः कामधेन्वाः परिचरणेन किं किं दुरितं न विलीयते इति विज्ञापयति, 'निर्दिष्टां कुलपतिना' इति पद्येन, अध्येतारोऽपररात्रे उत्थायाधीतभागानावर्त्तयेयुरिति बोधयति; 'तस्याः खुरन्यासेति सूक्तौ 'श्रुतेरिवार्थं स्मृतिरन्वगच्छत्' इति सरसं पूर्व्वमीमांसाशास्त्रसिद्धान्तं श्रुतिमूलकं स्मृतिप्रामाण्यं निबध्नाति, 'अशाम वृष्ट्यापि विना दवाग्निरासीद्विशेषा फलपुष्पवृद्धिः। ऊनं न सत्त्वेष्व-धिको बबाधे तस्मिन् वनं गोप्तरि गाहमाने॥' इति सुभाषितेन राज्ञः सर्व्वदेवतात्मकत्वं ललितमुपवर्णयति, इति दिक्। एतदा-दिभिर्व्वाचरत्नप्रतुरमैः सूक्तैः, 'आचारः प्रथमो धर्मः' इत्युपश्लोकिता-चारपदीयहितैर्महाकविभिर्ग्रामणिरयं सदाचार-श्रोत एवेति विशदीभवेद्विचारकाणामिति विश्वसिमः, विस्तरभिया नेह प्रतन्यते इति शम्॥

---

# हिमालयान्तर्गतकाङ्गरीगुरुकुलविश्वविद्यालय-
# प्रथमायुर्व्वेदसम्मेलनस्य सभापतेः
# अभिभाषणम् ।

( लेखकः—श्रीताराचरणचक्रवर्त्ती व्याकरणतीर्थः कविभूषणः आयुर्व्वेदशास्त्री । )

ब्रह्मनिष्ठा ब्रह्मचारिणः, मान्या मातरः, सौम्याः सामाजिक-महोदयाश्च !

समितिरियमायुष्या, समिद्धबोधविद्यावद्विद्वद्वृन्दविभूषिता, शीतशिखरस्वभावप्रभावसौम्या, समन्ततः सुरसरित्सम्पर्कविशुद्धि-भाग्वनोपवनराजिसुशोभितशालसरलतालतमालहिन्तालनिम्बाम्र-पियालपीलुबलादिविविधवनस्पतिवानस्पत्यौषधवीरुद्‌द्रुमखचितशिला-श्रमरमणीया, तपस्योपवास-ब्रह्मचर्य्य-व्रतपरायण-मैत्रीपरविद्यार्थिजन-मन्त्रपूतघृताहुतिसमुद्‌भूत-सात्त्विकभावतिरोहितसकलजनचित्तकलुष-वृत्तिप्रशान्तश्वापदव्यापारा, विमलविपुलसत्त्वशमदमपथ्यवदात-श्रुतप्रथितसर्वायुर्व्वेदप्रबोधप्रचुरबुद्धिचिकित्सकाध्युषिता, सुतरामेव आयुर्व्वेदप्रचारार्थप्रवृत्तानां महर्षीणां पूर्वसमागमवार्त्तां स्मारयति सभ्यमहोदयान् ।

पुरा हि किल एतादृश्येव हिमवत्प्रदेशे पीड़ापरितापतप्त-प्राणिनामाक्रोशमसहमानैरनुक्रोशपुरस्कृतैरमलत्रिकालनिखिलज्ञान-शालिभिरङ्गिरोजमदग्निकाश्यपभृगुप्रमुखैः दिव्यचक्षुर्भिरात्तैर्महर्षिभिः समाहृताऽऽसीदायुर्वेदस्य प्रथमप्रचारार्थं मर्त्यलोके एवंविधा समितिः । तस्यां खल्वासीदग्रणीरुग्रतपा मुनिर्भरद्वाजः, यः स्वमहिम्ना सुरेश्वरसकाशादायुर्वेदं बुबुधे, शशंस शिष्येभ्यः, लेभे चामित-मायुर्लेभे ।

अथ कालवशाद्धीयमानस्यास्यायुर्वेदस्य पुनः प्रवृद्धिसाधनतत्परैः तत्रैव पुण्यभूमौ पुण्यव्रतैर्गुरुकुलवासिभिः संस्थापिता महोपकारा

परिषदिति साधुस्तत्रभवतां भूतेष्वनुक्रोशः। अस्य च सदसः वार्षिकं सम्मेलनं सम्पादयद्भिः श्रीमद्भिर्मादृशो जनः सभापतिपदे नियुक्त इति सहस्रशो धन्यवादैः प्रणामाभिनन्दनादिभिश्च भवतः सम्भावये। असम्भावितस्य मे ईदृशः सम्मानलाभः श्रीविभूतिमदूर्जितसत्त्वानां परमकारुणिकानां ब्रह्मभूयं गतानां भगवतां दयानन्दस्वामिमहोदयानां नित्यशुद्धबुद्धरूपस्याशरीरिण आत्मनः तथा साक्षाद्वैदिकधर्म्मावताराणां त्यागिकुलचूड़ामणीनां सकलजनश्रद्धाभाजनानां श्रीमतां श्रद्धानन्दस्वामिमहोदयानां भवताञ्च महत्या अनुकम्पायाः फलमेवावितथं व्यनक्ति। परमात्मनोऽयोग्यतां कार्य्यगौरवञ्चावेक्ष्य संशयाकुलहृदयोऽहं भवद्भ्यः समर्पयाम्यात्मानमतो महोदारैर्भवद्भिः क्षन्तव्या मे मन्तुमन्तस्त्वत्रुटिः।

सभ्यमहोदयाः,

अद्यत्वे कृतयुगे सर्वार्थत्यागिनां सर्वजनहितैकव्रतानां ब्रह्मर्षीणामिव कलिकल्मषक्लिष्टान् विविधव्याधिकवलितान् स्वजनशोकैः विक्रोशतः मानवानभिसमीक्ष्य पूर्वाचार्य्यपरमर्षिकल्पानां परपरमार्थपरिचिन्तनपरायणानां मनस्विनामिदानीं दृश्यते तत्प्रतिकारार्थां महती कार्य्यतत्परता। अतः समुचितोऽयं समारम्भ आयुर्वेदोन्नतिविधानस्य। न हि ऋते विधूततादृशतमसां साहचर्य्यात्सम्पाद्यतेऽनुजीविभिः सुमहत्कार्य्यं किमपि। तथाहि—

"किं प्राभविष्यदरुणस्तमसां वधाय।
तञ्चेत्सहस्रकिरणो धुरि नाकरिष्यत्॥"

परमत्रापि न दृश्यते सर्वथा विप्रतिपत्तिरहितः समारम्भः। सन्ति ह्येते सुयोगजल्पाः स्वोद्भावितसिद्धान्तसत्यनिश्चयाः, येऽसतैनैव सत्यमनुसन्धित्सवः संक्षोभयन्ति सरलानां चेतांसि।

सम्प्रति हि केचन भारतीयाः पाश्चात्त्यचिकित्साविद्यापद्धतिमेव स्वर्गीया यशस्याञ्च मन्यमानाः तस्यैव प्राधान्येन

विलुप्तानि आयुर्वेदाङ्गानि सम्पूरयितुमुपदिशन्ति । आपातरमणीय-मयाचितसौहृद्यमनुशासनमिदं प्राकृतजनसन्निपाते सुश्लाघ्यमपि न कथञ्चन यथार्थग्राहिणो बुद्धिमन्तः प्रशंसन्ति । न हि किञ्चित् पाश्चात्त्यचिकित्साविज्ञानं सर्वथा पूर्णमस्ति, येनायुर्वेदतन्त्रं पूर्णतां लभेत, तथाहि सति न पाश्चात्त्या इनफ्लुएञ्जादिभिर्जनपदध्वंस-करैर्व्याधिभिरप्राप्तकालं म्रियेरन् । एतेनैव च दृष्टान्तेन न वा सन्ति आयुर्वेदशास्त्राण्यपि पूर्णानि, यैर्व्याधिनिग्रहे मृत्युनिग्रहे च विमुक्तसन्देहाः कुशलाः भवेयुः । वस्तुतस्तु पूर्णब्रह्म विहाय न किञ्चिदस्ति जगति पूर्णं वस्तु ।

लोकायतिकसत्यनिष्ठयापि नैकान्तग्राहिणो भवितुमर्हन्ति पाश्चात्त्यचिकित्साविज्ञाने विज्ञा भारतीयाः । विभिन्नानि हि प्रति-देशपुरुषप्रकृतीनामवस्थानानि, यानि तत्तद्देशपुरुषप्रकृतिविशेषोपयोग-भाञ्जि भजन्ते भद्राणि ।

अस्मिन् प्रसङ्गे इदमपि च विभाव्यं, यदधुना लभ्यमानानि चायुर्वेदशास्त्राणि न तावत् पाश्चात्त्यचिकित्सकापातरमणीयमना-विष्कृततत्त्वप्रतियोगितासहानि न वाविर्भवन्ति प्रेक्षावन्तश्चरकप्रति-भानुकारिणः प्रतिसंस्कर्त्तारः भारतीयचिकित्सकेषु ये तथाविधानि भारतीयसाम्प्रप्रतिकूलानि मतानि प्रतिहत्य प्रचारयेयुः प्राणहित-तत्त्वानि प्राणाचार्य्याः । एतदपवादपरिजिहीर्षयेव केचन प्रथित-प्रभावाः वैद्याः साम्प्रतं पाश्चात्त्यप्रथामिवानुसृत्य वैद्यकपाठशालाः संस्थापयन्ति, समनुप्रवेशयन्ति च तत्र पाठविधावपि पाश्चात्त्यपुस्त-कानि । आयुर्वेदशास्त्रस्य शाश्वतपाठविधिं परित्यजतां स्वमनुष्ठितमिव च परकीयसिद्धान्तं समाश्रयतां तेषां प्रवृत्तिरेषा स्वार्था परार्था वा भवतु न तामालोचयितुमिच्छामि । परमत्र देशपूज्यानां श्रीमच्चित्त-रञ्जनदास ( Mr. C. R. Das ) महोदयानां वाक्यमिदं भूयो भूयः स्मर्त्तव्यमनुविधातव्यञ्च सर्वैः । यदुक्तं तत्रभवद्भिः जातीयमहा-

सम्भेलनाभिभाषणे "पाश्चात्त्यशिक्षारूपमतिथिं सत्कुर्व्वाणैरस्माभिः स्थापनीयमतिथिममादरात् प्रागेव स्वकीयं गृहमेकम्। प्राक् च पाश्चात्त्यशिक्षाग्रहणाज्ज्ञातव्या भारतीयैः स्वकीया सत्ता। स्वमत्ता-मनुपलभ्य न तावद्भारतीयाः पाश्चात्त्यशिक्षामनुकुर्व्वन्तोऽपि सत्यत्वेन ग्रहीतुमर्हन्ति।" वयमपि "श्रेयान् स्वधर्म्मो विगुणः परधर्म्मात् स्वनुष्ठितात्। स्वधर्म्मे निधनं श्रेयः परधर्म्मो भयावहः" तथा "सहजं कर्म्म कौन्तेय सदोषमपि न त्यजेत्। सर्व्वारम्भा हि दोषेण धूमेनाग्नि-रिवावृताः॥" इति भगवद्वाक्यद्वयं प्रमाणीकृत्य पुनः पुनः प्रार्थयामहे, यत् काममनुकुर्व्वन्तु श्रीमन्तः अनुकरणप्रियाः पाश्चात्त्यचिकित्साम्। परं न कथमपि भवद्भिर्विलोपनीया, विरोधनीया वा पाश्चात्त्यप्रमया अवितर्कस्मृतिविभागविदां निष्प्रोतुग्रपतापदर्शिनामाप्तानामिहामुत्र च लोके हिततमा चिकित्सापद्धतिः। असंशयं हि खल्वाप्त वचनं भवति यद्व्याहरति भगवान् पतञ्जलिः "रजस्तमोभ्यां निर्मुक्ता तपो-ज्ञानबलेन ये। येषां त्रिकालममलं ज्ञानमव्याहतं सदा॥ आप्ताः शिष्टा विबुद्धास्ते तेषां वाक्यमसंशयम्। सत्यं वक्ष्यन्ति ते कस्मादसत्यं नीरजस्तमाः॥"

अत्रैके प्राकृतचक्षुष आधुनिका वैज्ञानिकाः राजप्रतापादुद्रव्य-प्राचुर्य्याद्वा मृतशरीरव्यवच्छेदाधीशा मृतशरीराणि व्यवच्छिद्य यथाम प्रत्यक्षतः शारीरज्ञानमाविष्कुर्वन्तस्ते प्रत्यक्षज्ञानेन आप्तप्रदर्शित-शारीरज्ञानस्यासादृश्यमवेक्षमाणा आर्षशारीरज्ञानमप्रत्यक्षमूलकम-वैज्ञानिकञ्च विवेचयन्ति। वयमपि सुश्रुते चरके चोपलभामहे पाश्चात्त्यशारीरतत्त्वविरोधिवाक्यानि। परं न तानि मिथ्या प्रति-पादयामो वयं, न वा प्रतिपत्तुमर्हन्ति प्रेक्षावन्तः। महर्षयो हि तपःप्रभावादमलसत्त्वसमासीना दिव्यचक्षुषः सदा प्रत्यक्षीकुर्वन्तः शरीरिसमवायशारीरतत्त्वानि अध्यात्मशरीरविभागविदो भवन्ति। तेषामेवं गुणयोगाच्च तत्त्वसमाश्रितशरीरविश्लेषणपराणां शारीर-

तत्त्वानि सर्वदैव मृतशरीरव्यवच्छेदमात्रमवलम्बमानानां जड़वैज्ञानिकानां शारीरज्ञानेन ऐक्यमविदधत्यपि सत्यत्वेन विशिष्टवैज्ञानिकत्वेन च वरीवर्त्तन्ते। पाश्चात्त्या हि जड़विज्ञानकुशला लोके। न हि जड़-विज्ञानं (Physical Science) अध्यात्मयोगिविषयविश्लेषणक्षमं भवति। तत्र हि केवलं दिव्यचक्षुष एव प्रभवन्ति इति "न तु मां शक्यसे द्रष्टुमनेनैव स्वचक्षुषा। दिव्यं ददामि ते चक्षुः पश्य मे योग-मैश्वर"मिति भगवद्वाक्यात् स्पष्टं विज्ञायते।

इदमपेदच्च नः प्रत्यक्षं यज्जीवितशरीरे यावन्तो भावविशेषाः न ते मृतशरीरे समुपलभ्यन्ते। न तस्मात् मृतशरीरज्ञानमात्रमाश्रित्य जीवितशरीरस्य कृतस्ने ज्ञानेऽवैज्ञानिकत्वमारोपयितुमध्यवस्यन्ति विमृश्यसन्देहाः साधवः।

अथापरे भाषन्ते यत्, त्रिदोषान्तर्निविष्टा आयुर्वेदीयचिकित्सा न विज्ञानसंमता इति अत्र ब्रूमः—चिकित्सा खलु सर्वत्रैव व्याधि-तानां व्याधिपरिमोक्षार्थं स्वस्थस्य स्वास्थ्यरक्षार्थं च परिदृश्यते। अत्राह भगवान् धन्वन्तरिः "इह खल्वायुर्वेदप्रयोजनं व्याध्युपसृष्टानां व्याधि-परिमोक्षः, स्वस्थस्य स्वास्थ्यरक्षणञ्च" तत्र व्याधितानां व्याधिपरिमोक्षार्थ-मायुर्वेदविद एतानुपायाननुमन्यन्ते। तद्यथा—"अनातुरेण भेषजेन आतुरं चिकित्सामः, क्षाममक्षामेण, कृशं दुर्बलमाप्याययामः, स्थूलं मेदस्विनमपतर्पयामः, शीतेनोष्णाभिभूतमुपचरामः, शीताभिभूत-मुष्णेन, न्यूनान्धातून् पूरयामः, व्यतिरिक्तान् ह्रासयामः, व्याधिं मूल-विपर्य्ययेणोपचरन्तः सम्यक् प्रकृतौ स्थापयामः, तेषां नस्तथा-कुर्वतां भेषजसमुदायः कान्ततमो भवति।" पाश्चात्त्य-चिकित्सका अपि एतानेवोपायान् सर्वत्र चिकित्सायामनुवर्त्तन्ते। तथा कुर्वतां तेषां चिकित्सा यदि वैज्ञानिकी भवेत्तर्हि, तथाविधि-विहिताया आयुर्वेदीयचिकित्सायाः कथमवैज्ञानिकतादोषो नवाव-तार इति समीक्षकारिभिः लोकचरितेक्षणकुशलैरेव विवेचनीयम्।

सत्यमेतद्यदधुना पूर्वतरैर्व्वैद्यैरनुपदिश्यमाना "इञ्जेक्शनाख्या" काचनाभिनवा चिकित्सा पाश्चात्त्यचिकित्सकैराविष्कृता, यां खलु महाभ्युदयां महाफलां च मन्यमाना नवीना भारतीयचिकित्सका अपि आयुर्व्वेदस्य विश्वचिकित्साज्ञानाकरत्वसिद्ध्यर्थमेतस्यैवास्य "सूचिकाभरणरस" दृष्टान्तमुपन्यस्य आयुर्व्वेदसम्मतां व्याहरन्ति। परं लभ्यमानायुर्व्वेदपर्य्यालोचनपरम्परया नैवंभूतां चिकित्सामायुर्व्वेदसम्मतां प्रतिपादयन्ति कुशलाः। इन्जेक्शनाख्यया हि (Injection) प्रक्रियया प्रायः शिराभिः प्रविचार्य्यमाणमौषधं शोणितवेगसम्पर्कात् सर्व्वं शरीरं व्याप्नुवदाशु एव शुभाशुभाभिनिवृत्ति-प्रत्ययभूतं भवति। रोगं प्रशमयच्च प्रायो रोगान्तरमप्युत्पादयति। इत्थंभूतो भैषज्यप्रयोगः नार्षैर्व्वैद्यकशास्त्रानुमतः। यदुक्तं चरके "प्रयोगः शमयेद्व्याधिं योऽन्यमन्यमुदीरयेत्। नासौ विशुद्धः शुद्धस्तु शमयेद्यो न कोपयेत्॥"

## वाणी-वैभवम्।

(पूर्व्वानुवृत्तम्।)

(लेखकः—श्रीहरणचन्द्रतर्कवागीशः।)

"मणिदर्पणमिव त्रैलोक्यलक्ष्म्याः, निस्यन्दमिव दिशाम्, अवतार-मिव जलाकारं गगनतलस्य कैलासमिव द्रवतामापन्नं तुषारगिरि-मिव विलीनं चन्द्रातपमिव रसतामुपेतं हराट्टहासमिव जलीभूतम्, त्रिभुवनपुण्यराशिमिव सरोरूपेणावस्थितं स्फटिकभूमिगृहमिव, वसुन्धरादेव्या निर्गमनमार्गमिव सागराणां वैदूर्य्यगिरिजालमिव सलिलाकारेण परिणतमित्यादि।" अहो श्रुतिमात्रेणैव वर्णानां पुण्योद्भासितपवित्रतया उपहसितमानसमानसं समवतीर्णामरलोक-स्रोतस्वतीसलिलं मधुरताविक्षोभितजीवगणहृदयं त्रिलोकलोक

लोचनलोभनीयं पूतं सरोवरमेकं प्रतिफलति हृदयदर्पणे श्रोतृवृन्दा नाम् ।

यथा वा—

"दूरादयश्चक्रनिभस्य तन्वी तमालतालीवनराजिनीला ।

आभाति वेला लवणाम्बुराशेर्धारानिबद्धेव कलङ्करेखा ॥" इति

कालिदासवदनकमलप्रचुरत-मकरन्दबिन्दुर्मानसमधुकरं प्रीणयति मनीषिणाम्, चित्रयति च मानसपटे अनिर्वचनीयाम् अभिनवमधुरां कामपि मूर्त्तिम्। तथैवेयं श्रीमद्बाणभट्टरचनापद्धतिरपि वर्णानुपूर्व्या प्रोद्बोधिताकृते: सरोवरस्य मनोहारिणीं पिपासाकुलितचेतस: शान्तिसञ्चारिणीं सलिलमयीं स्निग्धमधुरां मूर्त्तिं प्रथयति ।

ततश्च अच्छोदसरोवरामलसलिलेनापनीतश्रम: लब्धशान्ति: तदीयोत्तरतीरप्रदेशे परिचरन् सहसा दूरत: समुपगतं वीणाझङ्कारालङ्कृतं गीतशब्दमाकर्ण्य शुश्रूषुर्व्याकुलचेता: स आत्मेन्द्रायुधं तमेव ध्वनिमनुसरन् समन्तात्स्वच्छां सुधाकरकरविशदशोभावलोकं विकसिताशेषकुसुमप्रभासमुद्भासितं महेश्वरविग्रहविशोभितं सिद्धायतनमपश्यत् ।

"अच्छनिर्झरजालकणजनितजड़िमभि: उत्तरकुरुकामिनीकर्णोत्पलप्रेङ्खोलनदोहदिभि: आकलितकङ्काले: पशुपतिजटाबन्धार्त्तवासुकिपरिपीतशेषै: भ्रमद्भृङ्गराजनगरजर्जरितजरठकुसुमै: उन्मदकोकिलकुलकवलोकृतसहकारकोमलाग्रपल्लवैरित्यादि" अत्रो अनुपदं चरति मधुरता पदसन्निवेशात्। प्रसादगुण: सहृदयं द्रवयति वर्णनोपधिना, पापिनामपि अन्धतमसाच्छन्ने मानसे अनुपम्रं अवालोकं उल्लासयति, दुष्प्रवृत्तिपरम्परा श्रोत्रसंयोगमात्रत एव तस्मादेशात्तिरोहिता सञ्जीवनं जीवयति । महत: सत्त्वस्य समुल्लासनेन अमतामप्यपाकृत्य रजस्तम:प्रभावं सत्त्वमेकमेव द्रढयति रचनाचातुर्यमस्य कवेर्बाणभट्टस्य । ततश्च तत्र कैलासशेखरशिरोमणे:

पञ्चाननस्य दक्षिणां दिशमासाद्यावस्थितां दक्षिणां मूर्त्तिं सुवतीं गृहीतविग्रहां शशधरसुधाधारामिव पुञ्जीभूतां त्र्यम्बकाट्टहासराशिमिव, विकसितश्वेतसरोजिनीमिव काशकुसुमविशदां महाश्वेतामपश्यत्।

"अस्य च दक्षिणां मूर्त्तिमाश्रित्याभिमुखीमासीनाम् उपरचितब्रह्मासनाम् अतिविस्तारिणा सर्व्वदिक्षु खप्लावकेन परिपाण्डुतक्षीरपयोधिपूरपाण्डुरेण अतिदीर्घकालसञ्चितेन तपोराशिनेव सर्व्वतो विसर्पता पादपान्तरेषु निस्रोतोजलनिभेन पिण्डीभूय वहतेव देहप्रभावितानेन सगिरिकाननं चन्द्रमयमिव तं प्रदेशं कुर्व्वतीं अन्यथेव धवलयन्तीं कैलासगिरिमित्यादि।"

हन्त भोः पूतभावेन सर्व्वा दिशः पवित्रतां नीताः, शैलेन तद्भूमिर्धवलीकृतेव, तदीयगगनतलमपि सर्व्वथाविलीनकल्मषं कृतमिव, किमन्यत् सर्व्वमेव दुग्धफेननिभश्वेतिम्ना रञ्जितं आसादितपुण्यसञ्चयमिव कृतम्। कलिकालकलुषराशिमपाकृत्य स्तूपीभूतकृतयुगमिव, घनीभूतत्रिभुवनपवित्रता मूर्त्तिमतीव, सुधांशोरंशुजालं पुञ्जीभूयैकतः स्थितमिव,विश्वस्य नश्वरतां, तिरोधापयितुं लब्धसमाधिर्धरित्रीव, तद्गतहृदया कन्यका कृतिनो वाणभट्टस्य शारदनीरदविशदं यशोजालं प्रथयति, विकिरतीव तदनुशीलयितृचेतसि योगनत्परताम्, आविष्करोतीव चित्तवृत्तिनिरोधवासनां संसारवतामपि मानवे, लोभयति पापमपि च पवित्रतालाभाय। कविकुलललामभूतस्यास्य सकलकलाविलासोल्लसिता तूलिका समाकलितसत्त्वभावा सर्व्वेषां चेतसा शुभ्रतामासादितवतीव।

सम्पादितोपासना कन्यका स्वागतसम्भाषणानन्तरम् अतिथिसत्कराय गृहीतयत्ना कृतनमस्कारेण चन्द्रापीडेनानुगम्यमाना द्वारि समुपवेशितेन तेन राजकुमारेण अभ्यागताश्च नाय उहिश्ना महाश्वेता एका।

"अलमतियन्त्रणया कृतमतिप्रसादेन, भगवति, प्रसीद, विमुच्यतामयमत्यादर इत्यादि" मधुरगिरा अभिषिक्तमिवात्मानं कृत्वा सोऽनन्येन तस्या मानसं सस्नेहमकरोत्। ततश्च तया समुपहृतानि फलमूलादीनि भुञ्जानः तदीयमहत्त्वचिन्तया समयमगमयत्। ततश्च कुसुमसुकुमारे नवीनयौवने कथमेतस्या ईदृशी दशा समुपस्थितेति कथं वा अतिकठोरमीदृशं व्रतमाचर्य्यते अनया इत्यादि। एवं तदीयदुःखेन दृढव्रताचरणव्रतसङ्कल्पसन्दर्शनेन च युगपदुपगतदुःखविस्मयः औत्सुक्यानुप्रेरित इव तदीयमुदन्तमवगन्तुमनाः सानुनयमवादीत् "भगवति! त्वत्प्रसादप्राप्तिप्रात्साहितेनाकुलीक्रियमाणो मानुषतासुलभो लघिमा बलादनिच्छन्तमपि मां प्रश्नकर्म्मणि नियोजयति, जनयति हि प्रभुप्रसादलवोऽपि प्रागल्भ्यमधीरप्रकृतेः स्वल्पमप्येकदेशावस्थानेन कालकलापरिचयमुत्पादयति" इत्यादि। नायकोऽयं विनयमहिम्ना महत्त्वममानुषमदर्शयत्। दर्शिता चार्य्याणामाचारे लोकातिशायिनी भक्तिरनेन वचनचातुर्य्येण प्रकाशिता, प्रणयमधुरः सुललितव्यवहारः पावयति दैवतोचितेन भावेन, किं बहुना अनया मिथोभाषणपरम्परया अनिर्व्वचनीयं परशोकविगलितं तापसजनातीतभक्तिप्रवणम् औत्सुक्यचालितमपि धीरतैकवृत्तिचेतः समावेदयति नायकव्यवहृतिः। स स्वकीयप्रश्नतो रुदन्तीं महाश्वेतामालोक्य स्वयमेवाचिन्तयत्।

"अहो दुर्निवारता व्यसनोपनिपातानां यदीदृशीमप्याकृतिमनभिभवनीयामाक्रमणीयां कुर्व्वन्तीत्यादि॥" ततो वेगवत्सलिलपातसन्दर्शनेन अपराध इव शोककारणं चिन्तयित्वा उत्थायाञ्जलिना प्रस्रवणतो मुखप्रक्षालनोदकमानीय तस्यै दत्तवान्।

(क्रमशः)

# "भट्टिकाव्यम् तस्य प्रणेता च।"

( पूर्व्वतोऽनुवृत्तम्। )

( लेखकः—श्रीअश्विनीकुमारकाव्यव्याकरणतीर्थः। )

दशमे—दग्धलाङ्गूलो हनूमान् लङ्कां दग्ध्वा पुनरपि रामान्तिकं गत्वा सीतावृत्तान्तं न्यवेदयदभिज्ञानञ्च रामाय प्रददौ। ततः सुग्रीवानुमत्या समग्रं वानरसैन्यं रामलक्ष्मणाभ्यां सह युद्धार्थं समुद्रोपकूलमुपतस्थे।

एकादशे—सति च प्रभाते रावणः राममागतं दृष्ट्वा बहुभिः प्रधानामात्यैः परिवृतः मन्त्रणार्थं सिंहासनमध्यतिष्ठत्। द्वादशे—नीतिकुशलो धार्म्मिको विभीषणः रावणं सीतां रामाय प्रत्यर्पयितुं तेन सह मैत्रीञ्च कर्त्तुमुपदिष्टवान्। कामाक्रान्तचेता विपरीतबुद्धिर्लङ्केश्वरस्तद्वाक्यमवज्ञाय पादेन तमाहरत्। दुःखितमनाः स च रामेण सह मिलितः समभवत्।

त्रयोदशे—बाणेन शुष्यति सागरे रामे सरित्पतिः स्वमूर्त्तिधरः सन् रामसकाशमागत्य पर्व्वतैस्तं सागरं बन्धुमादिष्टवान्। ततस्तदाज्ञाक्रमेण कपिसैन्यैरसङ्ख्यैः पर्व्वतैः समुद्रो बबन्धे। रामश्च ससैन्यो लङ्काद्वारमुपजगाम। राक्षसाश्च नानाविधायुधैः सज्जीभूय युद्धार्थं सन्नद्धाः समभवन्।

चतुर्दशे—प्रवृत्ते च महाहवे उभयपक्षस्यैव बहूनि सैन्यानि प्राणान् तत्यजुः। पश्चात् मायावी मेघनादः मायाजालं विस्तीर्य सर्व्वान् पराजित्य रामलक्ष्मणौ नागपाशेन बद्ध्वा रणभूमावपातयत्। तदनन्तरं विभीषणवाक्येन रामः गरुड़ं सस्मार, तदागमेन च ससैन्यः सञ्जातहर्षो मुक्तनागपाशः पुनरपि योद्धुमारेभे। धूम्राक्षकम्पनप्रहस्तनामानश्चातिबलाः राक्षसा रणे निहता आसन्।

पञ्चदशे—वीरप्रधानः कुम्भकर्णः संग्रामे भीषणं पराक्रमं सन्दर्श्य रामबाणविद्धः रणाङ्गने चिरनिद्रां भेजे। हते च कुम्भकर्णे देवान्त-

कातिकायत्रिशिरोनरान्तकनामानः रावणकुमाराः सदर्पं योद्धुमागताः सन्त एकैकं निहताः समभवन्। पश्चात्तु इन्द्रजिदर्द्धरात्रौ रणभूमिं प्रविश्य सप्तषष्टिकोटिवानरैः सह रामलक्ष्मणौ बाणैर्मोहितवान्। हनूमता समानीतेन औषधेन पुनर्लब्धप्राणाः ते हरयः रामलक्ष्मणौ भूयोऽपि जीवितौ दृष्ट्वा समोत्थिताः हरय इव जगर्ज्जुः, येन च मृगायमानाः मानवद्वेषिणो यातुधानाः परं विषादमाविदुः।

षोड़शे—रावणः मृतानां भ्रातॄणां पुत्राणाञ्च शोकादत्यर्थमरोदीत्। ततश्च तनयो मेघनादः "सर्व्वान् शत्रूनचिरेणैव शमनभवनं प्रेरयिष्यामीतीत्थं सगर्व्ववचनपरम्परया रावणस्य सान्त्वनामुत्पादयामास।

सप्तदशे—कृतरणाङ्गनप्रवेशः रणोन्मत्तो मेघनादः सुतीक्ष्णैः शरनिकरैरसङ्ख्यान् वानरान् गतासून् कृत्वा रामादीनां विषादवर्द्धनाय मायासीतां हनूमतः पुरः चिच्छेद। ज्ञातसत्यवृत्तान्ताः रामादयः तस्य वधाय लक्ष्मणविभीषणादीन् प्रेरितवन्तः। प्राप्तनिकुम्भिलायज्ञागारो लक्ष्मणः रावणतनयेन सह बहुधा संयुध्य ब्रह्मास्त्रेण तं नाशयामास। अनन्तरं पुत्रशोकसन्तप्तः क्रोधोन्मत्तो राक्षसराजः सकलैर्यातुधानैः सह युद्धार्थं रणस्थलं जगाम, तत्र च प्रवर्द्धमाने भीषणसंग्रामे रामः दिव्यास्त्रेण तस्य देववैरिणो रावणस्य शिरश्चिच्छेद।

अष्टादशे—पादप्रहारेणापमानितोऽपि भातृशोकस्यापरिहार्य्यतया विभीषणः पौरजनैः सह रावणशोकेन सकरुणं ररोद।

ऊनविंशे—रामवचनशान्तो दशाननानुजः लङ्काधिपतेरन्त्येष्टिक्रियामसाधयत्; लङ्कायाः राजपदे अभिषिक्तश्चाभवत्।

विंशे—विभीषणो रामस्याज्ञां मौलौ निधाय स्वामिविरहजदुःखक्लिष्टां सीतां रामसमीपमानीतवान्। समागतायामपि सीतायां मर्य्यादितजातशङ्को दाशरथिस्तां भार्य्यारूपेण पुनर्ग्रहीतुं नैच्छत्। तेन

च प्रत्याख्यानेन मर्म्माणि वाणविद्धा हरिणीव यन्त्रणाभिभूता सा चात्मशुद्धये प्रज्वलिते पावके विवेश।

एकविंशे—पावकः मूर्त्तिमतीं पवित्रतामिव जानकीं गृहीत्वा स्वमूर्त्तिधरः प्रादुरभूत्, सीताया अनन्यसाधारणं पातिव्रत्यं पवित्रताञ्च अकीर्त्तयत्। ब्रह्मविष्णुरुद्रेश्वरप्रमुखा बहवो द्युलोकनिवासिनः अमराश्च तत्र प्रत्यक्षीभूय सीतां रामञ्च प्रशशंसुः। देवराजस्य वरप्रभावान्मृता अपि शाखामृगाः भूयोऽपि प्राणानलभन्त। रामश्च देववाक्येनापगतशङ्कः सहर्षं सीतां जग्राह।

द्वाविंशे—पराजिताशेषशत्रुः देवपूजितो रामः सीतया लक्ष्मणेन अन्यैश्च विभीषणादिभिर्बन्धुभिः स्वाङ्कमयोध्यां प्रत्यावृत्य भरतं यौवराज्ये अभिषिषेच। स्वयञ्चाशेषपौरजनानां परमां प्रीतिमुत्पादयन् राज्यं पालयितुमारभत। एतावानेवास्य काव्यस्य संक्षिप्तवृत्तान्तः। अस्य च अन्यद्वैशिष्ट्यमन्यतो दृश्यते, यदत्र सन्ति चत्वारि काण्डानि। प्रकीर्णकाण्डं, अधिकारकाण्डं,प्रसन्नकाण्डं,तिङन्तकाण्डञ्चेति। तत्र व्यामिश्ररूपं सामान्यविशेषकार्य्यप्रदर्शकं तिङन्तकाण्डमादितः पञ्चमसर्गं यावत्। पाणिनीयाष्टकान्तर्गताधिकारसूत्रानुसारतः षत्वणत्वगुणवृद्ध्यागमपरिव्यापकप्रपञ्चनिर्देशकं अधिकारकाण्डं चतुःसर्गव्यापि षष्ठसर्गात् नवमसर्गपर्य्यन्तम्। गुणालङ्कारसमलङ्कृतं प्रसन्नकाण्डन्तु सर्गचतुष्टयात्मकं दशमात् त्रयोदशम्, लट्प्रकरणादिदशलकाररूपप्रदर्शकस्य तिङन्तकाण्डस्याधिकारः खलु चतुर्दशसर्गतो द्वाविंशतिसर्गावधिः। यावदिह जगति संस्कृतभाषायाः संस्कृतसाहित्यानाञ्चादरः पठनं पाठनञ्च विद्येरन्, तावन्नूनमेव काव्यमिदं विश्वविदितविद्यस्य तत्रभवतो महाकवेरतुलां कीर्त्तिं तन्वीत। न जानीमहे काश्मीरीयेण सुविख्यातपण्डितेन भौमककविना विरचितं रावणार्ज्जुनीयनामकं महाकाव्यम् ऋते अन्यद्वैविधं व्याकरणानुशासनप्रपञ्चकं किमपि महाकाव्यमस्ति न

वा। सन्ति चात्र बहवः काव्यशास्त्रालोचननिरताः कोविदाः ये खलु व्याकरणसूत्रप्रपञ्चमुदाहर्त्तुमिच्छुना कविना विरचितस्यास्य काव्यस्य निर्म्माणोद्देश्ये दृष्टिपातमकृत्वैव क्वचित् क्वचिदत्र श्रुति-दुःश्रावकं नीरसञ्च पदनिचयमवलोक्य नासिकामाकुञ्चयन्ति। तेषु च इदमेव वाच्यं यन्नाम यदि पुनरयं अनल्पवाग्विभवः कविः कथं कथमपि सुललितपदविन्यासमाधुर्य्येण तोषयितुमलमभविष्यत् साहित्यरसपिपासूनां रसिकानां मनांसि, तर्हि तद्ग्रन्थः कालिदास-विरचितेभ्योऽपि ग्रन्थेभ्यः निम्नासनं नाध्यकरिष्यत्।

किन्त्वेतदपि वक्तव्यमेव यत् ये नाम ज्ञानमिच्छवो जना युगपदेव काव्यव्याकरणमधेतुमीहन्ते, तेषां भट्टिकाव्यमतीत्य नान्यत् पुस्तकं वर्त्तते, यत् तादृशीमुररीकृताशां सफलतां विदध्यात्। तत्रापि शरद्वर्णनप्रसङ्गे यादृक् नामासाधारणमनन्यसुलभञ्च कवित्वं प्रदर्शितं, तत् किं न स्मारयत्यस्मान् माघभारवि-श्रीहर्षकवीनामनन्य-सुलभकविगुणान्? तथाच "वनानि तोयानि च नेत्रकल्पै"-रित्यादि। "सितारविन्दप्रचयेष्वि"त्यादि?। "तिग्मांशुरश्मिच्छुरितान्य-दूरा"दित्यादि। "न तज्जलं यन्न सुचारुपङ्कज"मित्यादि च। मन्ये व्याकरणसूत्रप्रपञ्चमुदाजिहीर्षुणा कविना न सम्यगवसरो लब्धः सर्व्वत्र कवित्वमलङ्कारादिशास्त्रेषु च पाण्डित्यं दर्शयितुमित्यत एव कवि-र्दशमैकादशसर्गाभ्यामलङ्कारशास्त्रे पाण्डित्यमदर्शयत्। तयोर्न-केवलं व्याकरणस्य काठिन्यपूर्णनीरसपदपरम्परा एव विद्यते, अपितु—रसकदम्बकल्लोलमयीनां कवित्वपूर्णकोमलपदावलीनामपि सुन्दरः सन्निवेशो दृश्यते। अपिच दशमैकादशसर्गयोः खलु प्रतिभावान् कविरनुप्रासालङ्कारादारभ्य यमककाव्यलिङ्गभ्रान्तिमदर्थान्तरन्यास-प्रभृतीनामशेषालङ्काराणामेवोदाहरणानि उदाहृतवान्। अत्र च सभ्यानामुपलब्धये कौतुकविनोदनाय च कति सम्पूर्णा एव श्लोका उद्ध्रियन्ते।

(क्रमशः)

## विविधकथा।

**षष्ठीपूजनम् :**—मि: के: एम्, कलमाराख्य: श्रावरावर्ण-कोम्पानीकार्य्यालये एप्रेन्टिसियारपदमलङ्कुर्व्वाण: कश्चित् खृष्टधर्म्मावलम्बी महाजन: स्वकीयप्रथमतनयजननात् षष्ठेऽहनि षष्ठीदेव्या समाराधनं यथाशास्त्रम् समपादयदिति श्रूयते। अपि नाम देवता अखिलानामेव लोकानां चेत:सु ईदृग्विधामेव प्रवृत्तिपरम्परां विदधुर: ॥ एडुकेशनगेजेट—२१।१।२८

**शिल्पवैचित्र्यम् :**—शिल्पोत्कर्षभूयिष्ठेऽधुनातनकाले श्रीमद्भिर्वैज्ञानिकप्रवरै: प्रतिदिनमुद्भाव्यमानानि यन्त्राणि सर्व्वेषामेव विस्मयविशेषमुपजनयन्ति नितराम्। तैस्तैश्च यन्त्रै र्मानुषाणाम् असाध्यतयैव प्रतीयमानानि कर्म्माणि सुखमेव सम्पाद्यन्ते इति शृङ्खलहीनसन्देशवाहकयन्त्रादीनाम् सन्दर्शनेन स्फुटं प्रतिभाति। साम्प्रतञ्च नवीननवीनं किञ्चन यन्त्रद्वयमुद्भावितं श्रीमतां पाठकानां गोचरीकुर्म्म:। तत्र च प्रथमं 'सत्यनिर्णायकयन्त्रम्'—यस्य साहाय्येन अनृतवादिनामपि समीपतस्तथ्यं स्फुटीक्रियते। अपरञ्च—'दूरस्थरोगिसमवस्थानिर्णायकं' यन्त्रम्, यस्य साहाय्यात् अतिदूरस्थस्यापि रोगिणोऽवस्थादिकं सम्यक् समालोच्य चिकित्सितुं प्रभवन्ति भिषज:। यन्त्रद्वयमेतत् महान्तमुपकारं घटयिष्यति जनानामित्यत्र नास्ति संशयो लेशतोऽपि सुमनसाम् ॥

**कुम्भकर्णावतार :**—हिन्दुरञ्जिकात: प्रतीयते यथा श्रीहट्टीयसाधारणचिकित्सागारे समानीता काचन, षष्ठे, सप्तमे वा हायने वर्त्तमाना बाला, या वर्षद्वयं यावत् स्वापमनुभवन्ती आस्त इति। वृत्तस्यास्य वैज्ञानिकीं व्याख्यां शुश्रूषामहे वयम्। (१।२।२८)

**समितय :**—यूरोपप्रदेशे आमेरिकाप्रदेशे च अनेका: समितय: संराजन्ते, या: सततं सर्व्वेषां विस्मयमादधति वैचित्र्यविशेषवत्तया। तासामेव कासां कासामपि परिचय: प्रदीयते।

प्यारिसगर्थ्यां वर्त्तते काचन समितिर्थस्याः सदस्यपदप्रेप्सूनां शारीरभारेण सार्द्धमणद्वयेन (2½ maunds) भाव्यम्। त्रिंशतसंख्यकाः सदस्यमहत्तमाः समितिमिमामलङ्कुर्व्वन्ति। समितेरस्याः सदस्य-वर्थ्यस्य कस्यापि देहभारो मणचतुष्टयात्मकः ( 4 maunds )।

तथा अविवाहितानाम् विकृताङ्गानां व्यर्थप्रेम्णां पत्नीं परित्यक्त-मनसाम् अलसानां खञ्जानां मूकानां वधिराणां लोहितकेशानां रोगिणाञ्चेत्येताः समितयो अनेकश एव भिन्नरुचीनां मानवानां परितोषापादनार्थं प्रतिष्ठां प्रापिताः। एङ्कैर्गल गेजेट— २।१।२८

**विवाहे दीर्घजीवनम् :**—कलौ चिरब्रह्मचर्य्यनिषेध-शास्त्रस्य सार्थक्यं न सर्व्वैः सनातनधर्म्मोऽनास्थावद्भिः स्वीक्रियते। परम् इदानीं पण्डितप्रकाण्डैर्विज्ञानविशोधितविवेकैर्यत् खलु प्रमाणितं, तेन सर्व्वैरेवात्र शास्त्रे अवश्यमेव रतिर्विधेया। कर्णेल-विश्वविद्यालयाध्यापकैः तत्रभवद्भिरध्यापकपादैः श्रीमद्भिः उइल-कक्समहोदयैः प्रमाणितं यत् विवाहिता एव दीर्घजीवनमनुभवितु-मलं भवन्ति, न पुनरविवाहिताः, यच्च नाम विषयो मरणविवरण-पाठात् स्पष्टमेव प्रतिभाति। सावधाना भवन्तु भो चिरकौमार्य्य-व्रतमालम्बमाना नवीना युवका युवतयश्च।

**शङ्खध्वनि :**—प्रायेण सकलेषु शुभकृतेषु प्रत्यहञ्च सायं शङ्खं धमन्तः सनातनधर्म्मावलम्बिनो धर्म्मान्तरवहरतीनां पुरुषाणा-मुपहासविषयतामेव नित्यं गच्छन्तीति प्रत्यचीकुर्म्मः। साम्प्रतन्तु विज्ञानाचार्य्येण भारतगौरवरविणा श्रीमता जगदीशचन्द्रवसुमहो-दयेन वैज्ञानिकपरीक्षा माश्रित्य शङ्खनादस्योपयोगिता प्रकटीकृता। परीक्षातस्तेनेदमधिगतं यथा शङ्खनादं समाकर्णयन्तो वायुप्रवाहे वर्त्तमाना निखिलरोगनिमित्तभूताः कीटा विनाशं गच्छन्तीति। आशास्महे इतःपरं त्रिकालदर्शिनाम् पुण्यचरितानामृषीणां शास्त्रेषु विरागवतां पुरुषाणां विरागवृत्तिरैतावृशानां प्रमाणपरम्पराणां

समालोचनेनाथाप्यस्तीति। नहि निरर्थकानि च महोदयमालोच-दिष्टानि। ( हिन्दुपत्रिका—२५।१।२८ )

---

## परिषत्सन्देशः।

**वार्षिकाधिवेशनमहोत्सवः।** गोरञ्जस्य प्रथमे वासरे सायं समवादनतः प्रवृत्तः परिषदः षष्ठाब्दीयो महोत्सवः। तत्र श्रीमन्तः सारदामठाधिपतयो विविधविद्याधराः शङ्कराचार्य्यपादाः सभापतेरासनमलमकुर्व्वन्। जार्म्मण्य (Germany) देशीयकन्मल (consul। महामहोपाध्यायगणनाथसेनसरस्वती-महामहोपाध्यायपद्म-नाथभट्टाचार्य्य-विद्याविनोद-राययतीन्द्रनाथचौधुरीश्रीकण्ठ-सार-देव-प्रसादसर्वाधिकारिप्रमुखा मनीषिसत्तमाः स्वोपस्थित्या महोत्सव-गौरवं विशेषेण वृद्धिमगमयन्। तत प्रथमतः समासमिते सभापति-वरणादिके सभाकृत्ये परिषदोऽध्यक्षमहोदयेन श्रीमता पशुपति-नाथशास्त्रिणा वाचिता विगतवर्षीयकार्य्यविवरणी कीर्त्तितानि च वर्त्तमानहायनीयकृत्यपरिचालकानां नामानि। ततः उपस्थितैः विद्वद्भिः कैश्चित् कैश्चित् वचनविचारमनोहरेषु कृतेषु वक्तृता-विशेषेषु श्रीमन्तः सभापतिपादा विविधतथ्यमधुरां रमणीयरमणीयां वक्तृतां प्रचारितवन्तः। अथ शेषं प्रापितेषु सभापतिसाधुवादा-दिकेषु सभाङ्गकर्मसु परिषन्मन्दिरस्य महाकविभासप्रणीतं 'प्रतिमानाटकं' महेन्द्रविक्रमविरचितं 'मत्तविलासं' प्रहसनञ्चेतद्-द्वयम् वङ्गरङ्गे च युगपत्पूर्वं रसिकजनानुरञ्जनपरितोषनिदानं रूपकद्वयं प्रयोगे साधु अभिकृतम्, यच्चापप्रयोगनाटकं सविशेषं कीर्त्तयन्तः सामाजिकाः व्यतीते निशीथे स्वमालयं प्रस्थिताः।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—आषाढ़, ५म वर्षस्य ३य संख्या ।

## मङ्गलाशंसनम् ।

( लेखकः—श्रीहरिहरशास्त्री अध्यापकः काशीहिन्दुविश्वविद्यालयस्य । )

( १ )

समाकुलकुलाबलाकुलदुकूलराशिं हरन्
कलिन्दतनयातटे निभृतनीपशाखां श्रयन् ।
स्मिताननसरोरुहे मधुरवेणुमाराधय-
न्नपायदवपावकादवतु कोऽपि गोपीपतिः ॥

( २ )

दलितनलिनजन्मभ्रान्तिमुत्पादयन्ती
मसृणचरणयुग्मं न्यस्य शीताद्रिशृङ्गे ।
दिनमणिमुदयन्तं लोकते या सलीलं
कलयतु कुशलं नः साऽद्य गौरी किशोरी ॥

( ३ )

तमःस्तोमं सद्यस्त्रिभुवनपिनद्धं शमयितुं
समर्था या शश्वद्द्रुतकनककान्तिप्रतिनिधिः ।

दुर्गतिः सा काचिन्मे स्फुरतु तुहिनाद्रिप्रकटिता
सहस्रारेऽजस्रं ग्रहपतिसहस्रोज्ज्वलवपुः॥

( ४ )

अधिविष्णुपदं समुन्नमन्नखरेन्दुस्फुरिता मरीचयः।
कुमुदं कलयन्तु सन्ततं व्यपनीयाशु तमःसमुच्चयम्॥

------

## आथर्व्वणं प्राणतत्त्वम्। *

( लेखक—श्रीउपेन्द्रनाथसेनगुप्त काव्यतीर्थ.। )

"देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा।
ऋषीणां चरितं सत्यमथर्व्वाङ्गिरसामसि॥"

प्रश्नोपनिषत्—२ प्रश्न।८

आर्य्यमिश्राः! त्रिहृदये उराः! अङ्गिरसामृषीणां चरितं यत् सत्यं तदिदमथर्व्वतत्त्वं यथामति व्याख्यातुकामा वयं, तत्र विषयस्य दुरवगाहत्वाद्वा व्याख्यानस्याभिनवत्वाद्वा भवद्भिरवधानं दीयमानमभ्यर्थये। अत्र अथर्व्वशब्देन प्राणः उच्यते। तथाच श्रुतिवचनं—"अथर्व्वा वै प्राणः"इति। अत्र के नाम प्राणाः भवन्तीति इहाभवे काचित् महतो विप्रतिपत्तिः। तदयदवयमर्व्वाचीना अनधिगतशास्त्रतत्त्वा अपि दुरवगाहे विषयेऽस्मिन् वगाहितुमुत्सहामहेऽतः दोषज्ञाः गुणदोषविभागदक्षा भाद्रितः यावदस्मदस्य प्रबन्धस्य समालोच्य साहसानुरूपं दण्डं मे कश्चित् विदधातु।

---

* परिषदो मासिकाधिवेशने पठितोऽयं प्रबन्धः।

अथवा उपनिषद्ग्रन्थसमुत्कीर्णे अथर्व्वमन्त्रावपि कुत्रस्यैवाभिधानस्य मे मतिरपेऽत्र, तत् किं नाम तच्छापालभिया। यास्के तु प्राणस्य बहुत्वमभिधेयं दृश्यते। प्रकृष्टरूपेण अनिति अनेन इति प्रपूर्व्वस्यानितेः करणे घञि प्राण इति निरुक्तिः। पञ्चानां शारीर-वायूनामन्यतमः प्राण इति सर्व्वेषां सुविदितोऽर्थः। अन्ये तु चत्वारः अपानः, समानः, उदानः, व्यानश्च। तत्र हृदयं प्राणायतनं, गुह्यम-पानस्य, नाभिदेशः समानस्य, वक्षस्तः कण्ठान्तशरीरभाग उदानस्य, व्यानस्य तु सर्व्वमेव शरीरमिति आयुर्व्वेदप्रवक्तार आचक्षते। एषु च प्राणस्यैव प्राधान्यं प्रतिष्ठितम्। ब्राह्मणादिष्वपि प्राणस्य वायुत्वेनैव बहुधा ग्रहणं कृतम्। तथाच कौषीतकीरहस्यब्राह्मणे "यावद्वै पुरुषो भाषते, न तावत् प्राणितुं शक्नोति, प्राणं तदा वाचि जुहोति, यावद्धि पुरुषः प्राणिति न तावत् भाषितुं शक्नोति वाचं तदा प्राणे जुहोति।" इत्यादावपि प्राणः वायुरेव। अस्माकन्तु प्रबन्धेऽस्मिन् समालोचनीयः प्राणः अथर्व्वनामा, यस्य किल अथर्व्ववेदे तच्छाखासु च बहुशोल्लेखो दृश्यते, अत एव भवतु तदर्थनिर्द्धारणमेव अस्माकमयत्नतो व्यापारः। प्रश्नमुण्डकमाण्डूक्याभिधेयास्तिस्र उपनिषदः अथर्व्व-वेदान्तर्गताः। आसां शारीरकमीमांसाव्याख्यानोपकारित्वं पश्यद्भिः श्रीमद्भिः शङ्कराचार्य्यपादैर्व्याख्या कृता। तत्र व्याख्याकारैः प्राणशब्दस्य प्रकरणसङ्गत्यर्थं बहवोऽर्थाः कल्पिताः। तद्यथा— "आदित्यो ह वै प्राणो रयिरेव चन्द्रमाः" ( प्रश्न १।५ ) इत्यत्र प्राणरयी अग्नीषोमौ, "प्राणः प्रजानामुदयत्येष सूर्य्यः" ( प्रश्न १।८ ) इत्यत्र प्राणः सूर्य्य एव, "तान् वरिष्ठः प्राण उवाच" ( प्रश्न २।३ ) इत्यादौ प्राणः वायुरेव "प्राणाग्नय एवैतस्मिन् पुरे जाग्रति" ( प्रश्न ४।३ ) इत्यादौ प्राणाग्नयः—प्राणादिपञ्चवायवः "विज्ञानात्मा सह देवैश्च सर्व्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र" (प्रश्न ४।११) अत्र तु प्राणाश्चक्षुरादयः "स प्राणमसृजत" ( प्रश्न ६।४ ) अत्र पुनः प्राणः हिरण्यगर्भाख्यः

"अप्राणो ह्यमनाः शुभ्रः" ( मुण्डक २।२ ) अत्र प्राणः क्रियाशक्ति-भेदवान् चलनात्मको वायुः. "सप्त प्राणाः प्रभवन्ति तस्मात्" ( मुण्डक २।८ ) अत्र सप्तशीर्षण्याः ( चक्षुरादीनि इन्द्रियाणि ) प्राणाः, यस्मिन् द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च सर्वैः" (मुण्डक २।२।५ ) अत्र प्राणैः करणैः । एवं बहुत्र । अत्र तु प्रबन्धविस्तरभिया तेषामुल्लेखात् विरम्यतेऽस्माभिः। अर्थवादवशादुपनिषदादौ प्राण-शब्दस्यान्येऽपि बहवोऽर्थाः दृश्यन्ते । तद्यथा "अन्नं वै प्राणाः" "आपो वै प्राणाः" एवमन्येऽपि । नन्विदानीं विचारयन्तु सन्तः बुद्धिव्यामोह-कारी ईदृशी व्याख्या कीदृशं महान्तमनर्थमुत्पादयति, विशेषतः सा यदा मादृशानां बन्धुरे वेदवर्त्मनि परिचालयित्री भवेत्। अत्र कोऽपि नाम विद्वान् न मन्यतां यत् खद्योतकल्पेन मया निरञ्जनज्ञानभास्कर-शङ्करभगवत्कृतौ दोषराशिः समुद्भाव्यते, तादृशे अविनये मादृशानां कः प्रसङ्गः। श्रीमच्छङ्करभगवत्कृतवेदान्तव्याख्यानतात्पर्य्यग्रहणे वेदान्तेषु शमदमादिविरहितानाम् मादृशानामनधिकारिणाम् अनधिगत सर्व्वशास्त्रार्थानाञ्च सर्व्वत्र बुद्धिरेव न प्रभवति, किमुत दोषाविष्कारे। स किल भगवान् सकलवादिवादनिरसनपूर्व्वकं स्वबुद्धिमन्दाकिनी-परमपावनवारिधारया शास्त्रमलमवधाव्य निष्कलङ्के सततमासने आचार्य्यान् समस्थापयत, तथाचैवंक्रमेण मोहमलकलिलं सनातनार्य्य-धर्म्मविहितव्यवहारमार्गपरिभ्रष्टं विपुलावयवजनव्रातं प्रज्ञातवेद-सिद्धान्तमूले धर्म्मे संस्थाप्य स्वयं युगे युगे सम्भूतानामवताराणा-मन्यतम इतीव प्रथयाञ्चकार। अथ चेत् पृच्छन्ति भवन्तः, तत्कथं नाम अर्व्वाचीनस्य ते ईदृशे अनर्थकार्य्ये उद्यम इति, तत्र किल उच्यते,—भद्राः ! न किल सर्व्वः सर्व्वं जानीयात्, अपि च भगवता शङ्करेण शाङ्करतं शारीरकव्याख्यानोपकारकं नहैव समर्थितम् अन्यत सर्व्वमुपेक्षितं। उपनिषत्स्वपि यास्तावत् शारीरकव्याख्यानोपकारिका एव व्याख्याताः, अत एव आथर्व्वणीनामष्टाविंशतिसंख्यकानां

मुपनिषदां मुण्डकादीनां तिसृणामेव तेन व्याख्या कृता,नान्यासामिति सर्व्वेषां सुविदितम् एव। अपिच द्वैतवादिनामद्वैतवादिनाञ्च सर्व्वेषामपि श्रुतिरेव परं प्रमाणम्। भगवता शङ्करेण जड़वादः समुपेक्षितः, कापिलादिभिस्तु स एव जड़ाजड़योर्व्वादयोरन्यतर इति कृत्वा समर्थितः, न किल कापिलं मतम् अनार्षं मिथ्या वा इति वक्तुं केनचिदपि शक्यते, मया तु अद्य प्राणशब्दस्य योऽर्थः समुपस्थाप्यते, स जड़गन्धी, अतएव भगवतः शङ्करात् तत्समर्थकं वाक्यं कथमाशास्यते, शङ्करसमर्थनाभावात् मन्मतमपि कथं हीयते? अपि चात्र एतद्वक्तव्यमेव यत् कुत्रचिदपि भगवान् शङ्करः नैवं किञ्चनोक्तवान् येन तु तन्मतं सर्व्वथा मन्मतस्य विरोधितया प्रतिभाति। तेन तु अद्वैततत्त्वव्याख्याने एव समग्रा स्वशक्तिः नियुक्ता प्राणादीनां शब्दानां प्रकृतार्थनिर्द्धारणे हेयमेतदिति कृत्वा तेन सर्व्वथा सम्यगायासः नैव स्वीकृतः। शङ्करव्याख्याने प्राणशब्दस्य बहुष्वर्थेषु व्यवहारः प्रागेव प्रदर्शिता मया, अत एव तद्विषयकविस्तारकथनेनालमिति मन्ये। अत्रातिप्रसङ्गमपि किञ्चिदुक्ता अस्माभिः प्रकृतमनुसरिष्यते। तत्र केचन पाश्चात्त्यकोविदसन्दर्निर्द्दिष्टशास्त्रमार्गाः अस्मद्देशीयाः अपि विपश्चितः एवमेव मन्यन्ते, यत् वेदशास्त्रं शास्त्रवत् किञ्चित् प्राचीनमनुषीवचसङ्कलितातिरिक्तम्, यच्चात्र किञ्चित् सालङ्कारवाक्यसम्पद्दोपचितगाम्भीर्य्यं, सुमधुरभावविभवप्रवृत्तमार्गाभां प्राकृतानिसृष्टवस्तुवर्णनसमाकुलं रमणीयत्वं प्रतिभाति, तत्तु केवलं तात्कालिकप्रौढ़कविकल्पनाविजृम्भणमेव, परन्तु तत्र सारवत्त्वं मनागपि नास्ति अपरे तु केचन नव्यन्यायदुर्व्वदग्धविदग्धाः स्वयं शक्तिविरहितत्वात् अमदीयं शरणमुपगताः अनारतं रघुनाथ इति जपन्तः, गदाधरसुपसन्नाः पक्षधरपक्षतिसमाश्रिताः वैतण्डिकाः शबरप्रभाकरभट्टादिष्वश्रद्धालव्वपि केवलं तेष्वेव श्रद्धधाना आस्तिक्यनिष्ठितबुद्धीनामस्मद्गुरूणां सयुक्तिकमपि वाक्यजालम् अर्व्वाचीनानामेतदिति कृत्वा

याग्दृष्टवस्तुबोधो जायते, तेन तु सर्व्वे "त्रिभुवनमणिदीप' बोधक' पद्मिनीनां तिमिरकरिविनाशं" सुस्वरमेवावगच्छन्ति। अस्ति चादित्यो यस्तु ईशावास्योपनिषदि "पूषन्नेकर्षे यमसूर्य्यप्राजापत्य" इत्यादि मन्त्रेण स्तूयते। अन्यच्च पुराणपाठाददितेस्तनयः पुमान् अवगम्यते आदित्यनामा कश्चित् देवः। श्रुतिरपि पौराणिकीमिमां वार्त्तां समर्थयति, अथवा पौराणिकी वार्त्ता श्रुतेरेवानुवादः। तथाच तैत्तिरीयसंहितायां श्रूयते "अदितिः पुत्रकामा साधेरभ्यो देवेभ्यो ब्रह्मौदनमपचत। तस्या उच्छेषणमददुः, ततः प्राश्नात्, सा रेतोऽधत्त, तस्मै चत्वार आदित्या अजायन्त।" अतः श्रुतिष्वपि अदितेस्तनय एव आदित्यः अत्र सन्देहस्यावसरलेशोऽपि नास्ति। अथ केय-मदितिः! किमियं काश्यपपत्नी दाक्षायणी, इन्द्रादीनां प्रसवित्री उत अन्या कापि? श्रुतिसंवादादस्याः अन्यत्वमेवाभ्युपगम्यते। तथाच सायणकृताथर्व्ववेदभाष्यधृत' शतपथवचनं, "अदितिर्व्वै आकाशः" तथाच—"को ह्येवान्यात् कः प्राण्याद् यदेष आकाश आनन्दो न स्यात्।" इत्यादि श्रुतिवचनञ्च आकाशस्य प्राणहेतुत्वं दर्शयति।" अस्ति चापरा श्रुतिः—"द्यौर्वशास्तनयित्नुर्गर्भो नक्षत्राणि जरायुः सूर्य्यो वत्सः वृष्टिः पीयूषः" इति। अत्र रूपकेणोपगूढं तत्त्व-मेव निर्द्धारणीयम्। भवतु द्यौरेव वशा प्रसवित्री वा, अन्यथा कापरा सूर्य्यसदृशं वत्सं प्रसवीत। भवतु च नक्षत्रमण्डलं जरायुः, यतः खगोलान्तर्वर्त्तिनं सूर्य्यं परितः भ्रूणं संवेष्ट्य जरायुरिव भचक्रं व्याप्य भ्रवादीनि नक्षत्राणि वर्त्तन्ते, अतः सौसादृश्यात् युक्तमेव नक्षत्राणां सूर्य्यस्य जरायुरूपेणोपस्थापनम्। परं किमिदमापतितम् गर्भः स्तनयित्नुरिति? मेघात् सूर्य्यसञ्जननं केनापि न दृष्टं श्रुतं वा। येऽत्रकेचन जलदजालावृत । सूर्य्यस्य मेघपटलाद्वहिरागमनरूप-व्यापारमेव व्याख्यानतां नयेयुस्तत्र वयं ब्रूमः, सर्व्वत्र समुच्चितविधिना प्रकृतार्थोपसंग्रहे एकत्रैवान्वाचितविधिनाप्रकृतार्थोपसंग्रहणं नाति-

पेशलं भवति। यद्यत्र सूर्य्यो विद्युदित्यर्थः स्वीक्रियते, तदैव वाक्यस्यान्वयो भवति नान्यथा, अपिच तथा कृते कश्चिदपि नूतनः अर्थश्च नाविर्भविष्यति सम्यक्शास्त्रानुसरणञ्च कृतं स्यात्। तथाच वैशेषिकमतादयमर्थं प्रमाणमुपगम्यते। अत्र प्रमाणप्रदर्शनार्थं किञ्चिद्वैशेषिकं मतमुदाहरिष्यामो वयम्, यत् लब्धप्रतिष्ठैराधुनिकैरपि विज्ञानाचार्य्यैः अविसंवादेन स्वीकृतम्। तथाच वैशेषिकदर्शने पञ्चमाध्याये द्वितीयाह्निके सूत्रद्वयो "अपां संघातो विलयनञ्च तेजः-संयोगात्" ( वैशेषिक ५।२।८ ) "तत्र विस्फूर्जथुर्लिङ्गम्" ( वैशेषिक ५।२।९ ) अत्र प्रथमसूत्रस्यतेजःशब्दस्य व्याख्यानप्रसङ्गेन श्रीमच्छङ्करमिश्रपादैः "दिव्येन तेजसा" इत्युक्तम्। द्वितीयसूत्रव्याख्यान प्रसङ्गेन तु "तत्र दिव्यासु अप्सु दिव्यानां तेजसाम् अनुप्रवेशे विस्फूर्जथु-लिङ्गं वज्रनिर्घोष एव लिङ्गमित्यर्थः। आत्यन्तिकविद्युत्प्रकाश-स्तावत् प्रत्यक्ष एव तदनुपदञ्च स्फूर्जथुः सोऽपि प्रत्यक्ष एव तेनानु-मीयते यस्मान्मेघात् करकाः प्रादुर्भवन्ति तत्र दिव्यस्तेजो विद्युद्रूप-मनुप्रविष्टं तदुपष्टम्भेन करकारम्भिकाणामपां द्रवत्वप्रतिबन्ध इति" उक्तम्। अधुना "वृष्टिः पीयूषः" इत्यस्य श्रुत्यंशस्यार्थोऽपि स्फुटीकृतः। अत एवात्र सूर्य्यशब्दस्य विद्युदेवार्थः, यस्यास्तु विद्युतः आकाश एव उत्पत्तिस्थानं या च भचक्रान्तवर्त्तिनि नक्षत्रपरिवेष्टिते स्थाने अवतिष्ठते मेघस्तु यस्याः आधारः अपिच या आधेयरूपेण तत्र स्थित्वा वृष्टिरूपतोयानामुत्पत्तेः कारणं भवति। अयमेव सूर्य्यः आदित्यो वा श्रुतिषूपनिषत्सु च प्राण इति प्रसिद्धः, अतः प्राणोऽपि विद्युदेवेति फलितार्थः। इयमेव विद्युत् पाश्चात्यानां "मिलेकट्रि-सिटि"नाम्नः वस्तुनः सूक्ष्मा मूर्त्तिः, आकाशशब्दाभिधेयस्य द्रव्यस्य सूक्ष्मं रूपम्। ( विद्युत् Electricity ) ( आकाशः Ether ) अधुनायमंशस्यार्थोऽयं दृढ़ीक्रियते।　　　　( क्रमशः। )

---

# हिमालयान्तर्गतकाङ्गरीगुरुकुलविश्वविद्यालय-प्रथमायुर्व्वेदसम्मेलनस्य सभापतेः अभिभाषणम् ।

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीताराचरणचक्रवर्त्ती व्याकरणतीर्थः कविभूषणः आयुर्व्वेदशास्त्री । )

महानुभावाः !

एतदपि द्रष्टव्यं यत् सर्व्वस्यैव कर्म्मणस्त्रिविधं फलं भवति—इष्टमनिष्टं मिश्रञ्च । प्राच्यं पाश्चात्त्यं वा चिकित्साविज्ञानं नैतत् कदापि त्रिकमतिवर्त्तते । तस्मान्न मोहादेकान्तग्राहिणो भवन्ति परीक्षकाः एतद्विवेकवशवर्त्तिनः । केचित् इञ्जेक्शनविधिं तथा कुइनाइनादीनि पाश्चात्त्यभेषजानि देशीयवैद्येषु प्रवर्त्तयितुं निबन्धयितुमिच्छन्ति तत्तद्रोगाधिकारे वैद्यकशास्त्रे । न वयं तदाद्रियामहे । तानि हि औषधानि विदेशादेव वैदेशिकाः वणिजः भारते प्रवेशयन्ति । तेषामौषधानां निर्म्माणप्रणाली तदध्यक्षैरेव विदिता वर्त्तते । अपरदेशीयास्तत्र न प्रवेष्टुं पर्य्येष्टुं वार्हन्ति । अत्र प्रमाणमपि न दुर्लभं भवेत् । यतः अस्मद्देशीयाः पाश्चात्त्यचिकित्सका अत्र साक्षात्प्रमाणभूता विराजन्ते । अमी हि ते परप्रणीतानि परस्वस्तिपुष्टिकराणि च भेषजानि प्रयुञ्जते आतुरशरीरे । परं न तदौषधनिर्म्माणे तद्विधाः प्रभवन्ति । एवं हि दुष्प्रापोपादानानि अज्ञातनिर्म्माणविधिकानि औषधानि यदि आयुर्वेदशास्त्रे उपनिबद्धानि भवेयुस्तर्हि दैवात्कालचक्रनियमाद्वा तदौषधानामलाभेऽसंभवे वा अनायासलभ्यौषधव्यवहारेषामनभ्यस्तकर्म्मणामस्माकं परवर्त्तिनोऽन्ववायाः कथमात्मरक्षां लोकरक्षां वा कुर्य्युः । किञ्चेदमपि प्रत्यक्षं यत्तान्यौषधानि यथा

तद्देशीयानामनेकान्यश्रितनमानि न तथा साक्षात्तुरोपात् चेषदोषैर्व्याहा एतद्देशीयानामारोग्यपुष्टिकराणि समुपलभामहे ।

आर्य्यमिश्राः !

एवं द्विविधा आयुर्व्वेदीयतिवार्त्ता श्रूयते लोके, पाश्चात्त्यप्रथानुसारिणी आर्षमतानुयायिनी च । पूर्वोक्तकारणं भूयो भूयो विचिन्तयन्तो न वयं सर्वथा पाश्चात्त्यचिकित्सामनुमोदितुमुत्सहामहे आयुर्वेदीयचिकित्सकाः साम्प्रतं यथादिवो हिजन्ते । परं लभ्यमानसुश्रुततन्त्रमवेक्ष्य स्पष्टमिदं प्रतीयते यत्पुरासीद्भारतेऽस्त्रचिकित्सायाः महती समुन्नतिः । अतिकष्टसाध्ये मूढ़गर्भोद्धारणेऽश्मरीसमाहरणे चायुर्वेदोत्कर्षः पाश्चात्त्यचिकित्सकैरपि स्पष्टतया स्वीकृतः । अत्र वैद्यकशब्दसिन्धुनामकग्रन्थभूमिकायां तत्रभवता उमेशचन्द्रकविराज महोदयेन यल्लिखितं तदुल्लिख्यते :—

"The subjects of मूढ़गर्भ and अश्मरी which relate to difficult delivery and operation of stone respectively are treated in so masterly a manner, that Dr. Charles ( the then Principal of the Calcutta Medical College ) desired to see them. At his request, Dr. Durgadas Gupta, and myself translated them into English and submitted the said for his perusal. Dr. Charles highly praised the process of delivery in difficult cases and even confessed, that, with all his great experience in midwifery and surgery, he never had any idea of the like being found in all the medical works that came under his observations."

( Vaidyaka Sabdasindhu, Preface, Page 36. )

परमिदानीं वैद्यानां प्रमादात् श्रुतिमात्रपर्य्यवसाना संजाता

सौश्रुती शस्त्रचिकित्सा। यतस्तत्प्रतिविधातुं यतेत। अत्र पाश्चात्त्यचिकित्सकानां साहाय्यं न कथमपि परिहरणीयम्। ते हि साम्प्रतं शस्त्रावचारणे निःसंशयं प्रशंसनीया भवन्ति। संज्ञाविलोपे "क्लोरोफर्म" ( Chloroform ) प्रयोगस्तेषामतीव प्रशस्तः, तस्मात् "कृत्स्नो हि लोको बुद्धिमतामाचार्यः शत्रुश्चाबुद्धिमतामेतच्चाभिसमीक्ष्य बुद्धिमता धन्यं यशस्यमायुष्यं पौष्टिकं लौकिकमभ्युपदिशतो वचः श्रोतव्यमनुविधातव्यञ्च" इति चरकवचनात्तथाविध "क्लोरोफर्मा" दिप्रयोगसौष्ठवं शस्त्रादिकञ्च तेभ्य आदातव्यम्। आदाय च गुणेन कर्म्मणा वा तत्प्रतिरूपकमितद्देशीयभेषजमाविष्कर्तुं प्रयतितव्यम्। न च मोहात् प्रमादाद्वा चिरं परमुखापेक्षिणो भवेयुः।

अत्र राजानुकूल्यमवश्यमेवेष्टव्यं भवेत्। शस्त्रकर्म्माणि हि प्रतिविषयं राजानुमतिमपेक्षन्ते। यदाह सुश्रुतः "उत्कर्षणापकर्षणस्थानापवर्त्तनोत्कर्त्तनभेदनच्छेदनपीडनर्जुकरणदारणानि चैकहस्तेन गर्भं गर्भिणीं चाहिंसता, तस्माच्चाधिपतिमापृच्छ्य परञ्च यत्नमास्थायोपक्रमेत।"

तस्मादायुर्वेदीयास्त्रचिकित्सोत्कर्षसाधनसमाधिभिः सुधीभिः विद्यार्थिभिरादावध्येतव्यः प्रमाणलाभार्थं सौश्रुतोऽस्त्रचिकित्साग्रन्थः। ततः स्वदेशे परदेशे वा पाश्चात्त्यास्त्रचिकित्साविद्यालयं प्रविश्यास्त्रप्रयोगोऽभ्यसितव्यः। अथ प्राच्य-पाश्चात्त्यचिकित्साशास्त्रं समालोच्यान्योर्गौरवं लाघवं च परीक्ष्य कर्म्मसु प्रयतितव्यम्। पाश्चात्त्यविद्यालयप्रवेशासम्भवे प्रथमतोऽधीती सुश्रुते विद्यार्थी कर्म्माभ्यासार्थमस्त्रोपचारप्रथितयशसं पाश्चात्त्यास्त्रचिकित्सकमुपासीत। तेषामुपदेशं साहचर्य्यं च समाश्रित्य सर्वदा कर्म्म कुर्य्याद्वा। प्राग्राजानुमोदनादेतदतिरिक्तं नान्यत् किमपि साधनमस्माकमायुर्वेदीयास्त्रचिकित्सासमुन्नतये सुष्ठु प्रतिभाति।

सभ्यमहोदयाः !

आयुर्वेदस्य सर्वाङ्गसुन्दरः कायचिकित्साविधिरपि भारतीयानामनादरात् समुचितशिक्षोपदेशाभावाच्च प्रतिदिनं क्षीणाया अपि क्षीणतरां दशामधिगच्छति। यद्यपि प्रतिनियतमेतदर्थं संस्थाप्यन्ते बहवो वैद्यविद्यालयास्तथापि तत्र रोगिनिवासादीनामसद्भावात् प्रत्यक्षशिक्षाविमुखाः वैद्यशास्त्रमात्राभ्यासपराः शिक्षार्थिनः प्रायशः कर्मक्षेत्रे विफलमनोरथा भवन्ति। उभयज्ञा हि भिषजः चिकित्सां कुर्वन्तश्चिकित्साफलभाजो भवन्ति। तदुक्तम्—"यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः। स मुह्यत्यातुरं प्राप्य प्राप्य भीरुरिवाहवम्॥ यस्तु कर्मसु निष्णातः धार्ष्ट्याच्छास्त्रबहिष्कृतः। स सत्सु पूजां नाप्नोति वधं चार्हति राजतः॥ यस्तूभयज्ञो मतिमान् स समर्थोऽर्थसाधने। आहवे कर्म निर्वोढुं द्विचक्रः स्यन्दनो यथा॥"

एतदर्थं हिमाद्रेर्विन्ध्यपर्वतस्य वा सन्निधौ जनवति प्रदेशे स्थापनीया रोगिनिवाससमेताः सकर्मशालाः वैद्यकविद्यालयाः। यत्र परिदृष्टकर्माणः पर्य्यवदातश्रुताः भिषजोऽध्यापनार्थं प्रयतेरन्। विद्यार्थिनश्चार्य्यप्रकृतिसम्पन्नाः सर्वेन्द्रियोपपन्नाश्च वनविचारमनुविचरन्तो दर्शं दर्शमौषधान्यन्विष्य, तद्गुणसौष्ठवमभ्यक्षत् परीक्ष्य, शास्त्राणि च गुरुमुखात् श्रावं श्रावं विदित्वा कर्मदर्शने भैषज्यव्यवस्थापने रोगिचरित्रज्ञाने चाभीक्ष्णं प्रवर्तेरन्। न च तैरभिध्यायां विद्वेषे राजद्विष्टे वा कर्मणि कर्मणा मनसा वचसा वा बुद्धिः प्रेरणीया। सर्वेषु हि प्राणिषु बन्धुभूतैस्तैः शत्रुमित्रनिर्विशेषेण जनसेवकैः आरोग्यसम्पादनादन्यत्किमपि न करणीयं भवेत्। इत्थमायुर्वेदोन्नत्यर्थमात्मानमुत्सृजद्भिः मैचोपरैस्तैः इंग्लण्ड-फ्रान्स-जर्मण्यादिपाश्चात्यदेशं भारतवर्षस्य च प्रदेशात् प्रदेशान्तरं पर्य्यटद्भिस्तत्रत्यपुस्तकागारेभ्यः वैद्यकग्रन्थाः बहिर्निःसारयितव्याः। लभ्यमानाश्च चरकसुश्रुतहारी-

तादिग्रन्थांश: मुद्रणव्यवस्थया लोके प्रचारणीया:। किञ्च विदित-शास्त्राणां कर्मकुशलानां जितहस्तानां गुरूणामपि कुलमध्युष्य अध्ययनान्तरैरध्ययनपरैर्वा विद्यार्थिभिस्तद्विषयसम्भाषा गुरुशुश्रूषा च विधेया। तद्विषयसम्भाषा हि भूयो ज्ञानाभिवृद्धिकरी भवति। गुरुशुश्रूषया च गुरव: प्रसन्ना: स्वानुभूतान् प्रयोगान् प्रकाशयन्ति। अपरमपीदं गुरुकुलवासस्य सार्थक्यं यत्प्रमहारोत-जतूकर्णंश्रुता बहवो दृष्टफला: भेषजयोगा: शिष्यपरम्परया प्रचलन्ति भिषक्समाजे। तेषामुद्धारार्थं गुरुसेवां प्रशंसन्ति कुशला:। अपरं च अग्निवेश-सुश्रुतादयो महर्षयोऽपि गुरुकुलाध्ययनादेव प्रकृष्टां शिक्षामवापु:। तस्मात् प्राच्यसभ्यतापक्षपातिनो बुद्धिमन्तो भारतीया: गुरुकुलशिक्षां न परित्यजेयु:। स्वयं राजपुरुषान् वा समाराध्य धनादिभिरुपदेशादि-भिश्च कामं भवद्भि: गुरुकुलशिक्षादोषा: संशोधनीया:, परमस्य विनाशे न कथमपि यतितव्यम्।

मान्या: सभासद: !

इदं महदाशास्थानं यद् गुरुकुलविश्वविद्यालयाधिपतिभि-रत्रभवतां विश्वजनीना दृष्टिरायुर्वेदोन्नतये प्रदत्ता। मन्येऽचिरादितो भारतभूमि: भूपतियोग्यै: भिषग्भि: विभूषिता प्राक्तनीनां पुरातनीं ख्यातिं लप्स्यते।

यत:—

> इत: पुराऽपि लब्धश्रीर्वेदोऽयं ब्रह्मचारिभि:।
> ब्रह्मचर्यविहीनानां विभ्रमाद् व्याहतिं गत:॥
> "गुरुकुल"प्रसादात्तु ब्रह्मचर्ये व्यवस्थिते।
> पुनर्वर्धिष्यते कामं ब्रह्मचारिप्रभावत:॥

सभ्या: !

इत्यास्तां विस्तर:, केवलमाशास्महे :—

> श्रियं सदा संदिशतु प्रजानां
> प्रजापति: प्राणधनादिहेतुरा।

भूर्भारतोया भवतात् सुखाय
शमञ्च विघ्नानि वहन्तु शान्तिम् ॥

इति शम् ।

# "भट्टिकाव्यम् तस्य प्रणेता च ।"

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीअश्विनीकुमारकाव्यव्याकरणतीर्थः । )

तथाच दशमे—

"सरसां सरसां परिमुच्य तनुं
पततां पततां ककुभो बहुशः ।
सकलैः सकलैः परितः करुणा-
रुदितैरुदितैरिव खं विततम् ॥" १
हुतं हुतं वह्निसमागतं गतं
महीमहीमद्युतिरोचितं चितम् ।
समं समन्तादपगोपुरं पुरं
परैः परैरप्यनिराकृतं कृतम् ॥" २
"अवसितं हसितं प्रसितं मुदा
विलसितं लसितं स्मरभासितम् ।
न समदाः प्रमदा हतसम्मदाः
पुरहितं विहितं न समाहितम् ॥" ३

अन्यच्च एकादशे—

"अक्ष्णोः पतन्नीलसरोजशोभाद्भृङ्गः करेणाप्यधिया निरस्तः ।
सङ्गं ताम्राम्बुरुहाभिसन्धिस्तृष्णातुरः पायितवोऽपि भृङ्गः ।"

अन्ये च बहव एवंविधाः श्लोकाः सन्ति, किन्तु बाहुल्यभयात्तदुदाहरणात् विरतिमवलम्बे। का कथा काव्यव्याकरणालङ्कारशास्त्राणां, यादृक्नामासाधारणपाण्डित्यं प्रकटितं कविना द्वादशसर्गे अर्थशास्त्रविषये तेन प्रकृतैव प्रवृत्तिः प्रवर्त्तते वक्तुं यत् चाणक्य इव नीतिचतुरोऽयं कविरासीत् सर्व्वेषामग्रणीरर्थशास्त्रे। रावणमुपदेष्टुमुक्तै र्व्विभीषणवचनैरेव एतत् सुस्पष्टं भवति। तथाच—

"यदा विगृह्णन्न च संदधानो वृद्धिं क्षयं चानुगुणं प्रपश्येत्।
आसीत राजावसरप्रतीक्षस्तदा प्रयासं वितथं न कुर्य्यात्॥
एकेन सन्धिः कलहोऽपरेण कार्य्योऽभितो वा प्रसमीक्ष्य वृद्धिम्।
एवं प्रयुञ्जीत जिगीषुरेतां नीतिं विजानन्नहितात्मसारम्॥"

इत्यादि।

अधुनातु विषयान्तरमाश्रित्य वदामि यत्—

अन्यदपि वैशिष्ट्यं कवेरस्य दृष्टिपथमायाति—यथा स प्रायश एव वाल्मीकेः कीर्त्तिस्तम्भं रामायणमनुचकारानुकारीव तथापि लघीयानेवान्यथा-भावः क्वचित् क्वचित् उपलभ्यते। तथाहि प्रथमसर्गे पुत्रेष्टियागे समाप्तिं गते तिस्रो राजमहिष्यः हुतोच्छिष्टं प्रापुरिति वर्णितमस्ति भट्टिकाव्ये। रामायणे तु कश्चिद्दिव्यपुरुषो यज्ञावसाने पावकादुत्थाय दिव्यपायसं दत्तवानिति। तथाच रामायणे—"ततो वै यजमानस्य पावकादतुलप्रभं। प्रादुर्भूतं महद्भूतं महावीर्य्यं महाबलम्॥······दिव्यपायससम्पूर्णां पात्रीं पत्नीमिव प्रियां। प्रगृह्य विपुलां दोर्भ्यां स्वयं मायामयीमिव॥ इदन्तु नृपशार्द्दूल पायसं देवनिर्म्मितम्। भार्य्याणामनुरूपाणामश्नीतेति प्रयच्छ वै॥"

अपरञ्च—"वैमातुरः कृतप्रजिताशप्रशस्तः" अत्रच पद्यांशे "वैमातुर" इति पदप्रयोगेणैवमनुमीतं विपश्चिद्भिर्य्यथाम कौशल्यायाः कैकेयीतोऽपि हुतोच्छिष्टस्य भागद्वयं लब्ध्वा सुमित्रा पुत्रौ प्रसूतौ। कालिदासस्य रघुवंशेऽपि तथैव दृश्यते। किन्तु रामायणे दशरथः

स्वयमेव दिव्यपायसं तिसृषु राज्ञीषु विभज्य प्रददौ। तथाच— "कौशल्यायै नरपतिः पायसार्द्धं ददौ तदा। अर्द्धादर्द्धं ददौ चापि सुमित्रायै नराधिपः॥ कैकेय्यै चावशिष्टार्द्धं ददौ पुत्रार्थकारणात्। प्रददौ चावशिष्टार्द्धं पायसस्यामृतोपमम्॥ अनुचिन्त्य सुमित्रायै पुनरेव महामतिः।" द्वितीये विश्वामित्रो विजया जयेति च द्वे अस्त्रे रामाय प्रददौ। रामायणे तु विश्वामित्रो बला अतिबला चेति मन्त्रद्वयं दत्तवान्। यथाह—"मन्त्रग्रामं गृहाण त्वं बलामतिबलां तथा। ...एतद्विद्याद्वये लब्धे न भवेत् सदृशस्तव।" अन्यच्च अत्र हि जृम्भकास्त्राणि ताड़कावधात् पूर्व्वमेव अर्पितान्यभवन्, रामायणे तु ताड़कावधात् परमिति। "अजिग्रहत्तं जनको धनुस्तत् येनार्द्दित-दैत्यपुरं पिनाकी" अनेन तु श्लोकेन स्पष्टमेव प्रतीतं भवति, यथा रामो हरस्य तद्धनुर्व्वभञ्ज, येन स त्रिपुरासुरपुरीं भस्मसात् चकार। रामायणे रामस्तद्धनुर्द्विधाकृतवान् येन खलु त्र्यम्बकः दक्षं निजघान। तथाच—"दक्षयज्ञवधे पूर्व्वं धनुरायम्य वीर्य्यवान्। विध्वस्य त्रिदशान् रोषात् सलीलमिदमब्रवीत्॥" चतुर्थे—शूर्पणखायां लक्ष्मणं कामयमानायां सत्यां लक्ष्मणस्तस्याः खड्गेन नासिकां चिच्छेदेति वर्णितमस्ति भट्टिकाव्ये। रामायणे तु सूर्पणखा सीतां ग्रसितुमुद्यतासीत्; ततो रामवचनेन लक्ष्मणस्तस्याः कर्णनासिके अच्छिनत्। यथाच— "अद्येमां भक्षयिष्यामि पश्यतस्तव मानुषीम्। त्वया सह चरिष्यामि निःसपत्नं यथासुखम्॥...इत्युक्तो लक्ष्मणस्तस्याः क्रुद्धो रामस्य पश्यतः। उद्धृत्य खड्गं चिच्छेद कर्णनासे महाबलः।" भट्टिकाव्यस्य चतुर्द्दशसर्गे दृश्यते, यत् रावणो रणारम्भे एव मायामयमुण्डेन सीतां विमोह्य युद्धार्थं सैन्यं प्रेरितवान्। यथा "विमोह्य मायामयराममूर्द्ध्ना सीतामनीकं प्रजिघाय योद्धुम्।" किन्तु रामायणे—मायामय-मुण्डेन सीतायाः मोहनस्योल्लेखो नास्ति। अपरञ्च रामायणे प्रहस्त-वधात् परमेव क्रोधोद्दीप्तो दशाननः बुभुत्सुः केवलमेव वानरसैन्येषु

प्रविवेश, किन्तु रामेण पराजितः कथं कथमपि प्राणैरवियुक्त एव पुनर्लङ्कापुरीं जगाम। अत्र तु प्रहस्तवधात् परमिन्द्रजिद्-रणार्थं गतवानिति। तस्य निधनानन्तरन्तु रावणः एकवारमेव योद्धुं गतः रामेण हत आसीदिति।

सर्व्वत्र वाल्मीकिरामायणमनुकुर्व्वतः कवेरेतेषु विभिन्नमतानुसरणे किं बीजं तन्न विद्मः। किन्तु क्वचित् क्वचिदन्यथाभावावलम्बने विरुद्धभावस्य समावेश एव समजायत इति मन्ये। तथाहि— "अजिग्रहत्तं जनको धनुस्तदि"त्यादिना तु एतदेव प्रमाणितं भवति, यत् त्रिपुरासुरपुरीध्वंसकारि धनुरेव न्यासरूपेण जनकराजगृहे आसीत्, रामोऽपि तदेव बभञ्ज। किन्तु एतत् विरुद्धमिव प्रतिभाति, यतस्त्रिपुरासुरपुरीध्वंससमये स्वयं नागराजो वासुकिरेव शिवस्योपकृतये धनूरूपेण पर्य्यणमत्, समरावसाने च स नूनं स्वमूर्त्तिमग्रहीदिति तु अविरुद्धा भारती। तथाचोक्तम्—"रथः क्षौणी यन्ता शतधृतिरगेन्द्रो धनुरथो, रथाङ्गे चन्द्रार्कौ रथचरणपाणिः शर इति। दिधक्षोस्ते कोऽयं त्रिपुरतृणमाडम्बरविधिर्व्विधेयैः क्रीड़न्तो न खलु परतन्त्राः प्रभुधियः॥" तत एव मन्ये केचन पण्डिता उक्तश्लोकमन्यथा पठन्ति। यथा—"अजिग्रहत्तं जनको धनुस्तत् येनार्हिददुयागमृगं पिनाकी" इत्यादि। अन्यच्च सीताहरणसमये मारीचेन दूरमाकृष्टे रामे, मायारूपधारिणः मारीचस्य मायामयशरभ्रान्ता जानकी यदा पौरुषवचनैर्लक्ष्मणं तिरश्चकार, तदा लक्ष्मणस्तां शप्त्वा रामसकाशं जगाम। यथा—"मृषोद्यं प्रवदन्तीं तां सत्यज्यो रघूत्तमः। निरगाच्छुक्रहस्तं त्वं यास्यतीति शपन् वशी॥"

रामायणे तु लक्ष्मणस्तस्याः शुभं प्रार्थयन्नेव रामसन्निधौ जगाम। यथाच—"गच्छामि यत्र काकुत्स्थः स्वस्ति तेऽस्तु वरानने। रक्षन्तु त्वां विशालाक्षि समग्रा वनदेवताः॥" इत्यादि। अत्र तु विरुद्धमतमनुसरतः कवेर्नैपुण्यं न किञ्चित्, अपितु तादृशभावाद्वस्तुतस्तस्य

संयमिनः धृतब्रह्मव्रतस्य च लक्ष्मणस्य ईदृशाधैर्य्यं शापप्रदानञ्च तच्चरित्रे कलङ्काङ्कनमिव। अत एव केचन मन्यन्ते कविर्नासीत्तादृशो निपुणः चरित्रचित्रणे इति। यात्तु अधुना उपसंहारावसरे एतदेव वक्तव्यं यत् सत्सु च शतशः सहस्रशो वा भेदेषु रामायणादस्य काव्यस्य, सत्सु च मानुषसुलभेषु शतशश्चरित्रगतेषु विषयगतेषु वा प्रमादेषु, यन्नाम व्याकरणसूत्रप्रपञ्चरूपोद्देश्यमुररीकृत्य विश्वविदितकीर्त्तिः कविवरो महान्तं प्रयत्नमध्यवसितवान्, तस्य तु सम्पूर्णाङ्गता सर्व्वत्रैव परिस्फुटेत्यत्र नास्ति वितर्कलेशावकाशः कस्यापि। इत्यलं तावत् पल्लवितेन।

---

## प्रवासनिवेदनम्।

( लेखकः—महामहोपाध्यायः श्रीप्रमथनाथतर्कभूषणः। )

( १ )

मातर्वङ्गधरे धरैकमुकुटालङ्कारहीरप्रभे !
श्रीचैतन्यमहाप्रभुप्रभृतिभिर्वन्द्यैः सुतैर्वन्दिते !
हित्वा त्वां बत विश्वनाथनगरीवासाय यद्याचते
दुःखोऽयं तनयः कृपामयि मयि क्रोधस्तदा त्यज्यताम्॥

( २ )

स्निग्धश्यामवनाभ्रचित्रवसने ! शुभ्राद्रिसौरप्रभा-
भास्वच्छृङ्गकिरीटिनि ! द्रुतसरिद्धारावलीमण्डिते !
नीलाम्भोनिधिनीरधौतचरणे ज्योत्स्नोज्ज्वले जन्मदे
श्यामे वङ्गधरेऽम्ब तेऽकृतिसुते मय्यस्तु दृष्टिः शुभा॥

( ३ )

आजन्माश्रयदायिनि द्रविणदे सम्मानसौख्यप्रदे
तुष्टाऽभूः करुणामयि प्रतिदिनं मां पालयन्ती शिवे।

तत्त्वे ह्यप्रतिरूपकं किमपि नो कर्त्तुं समर्थोऽस्य यत्
प्रस्थानानुमतिं चिराय विसृजन् याचेऽम्ब तत् क्षम्यताम् ॥

( ४ )

आ बाल्यात् पयसा गवां स-हविषा खाद्यैर्विचित्रैः फलै-
रन्नैः पुष्टिकरैः सुशीतलजलैः संवर्द्धितेयं तनुः।
विन्मूत्रादिमलं सदाऽपहृतमहो क्रोड़े त्वया निर्घृणं
मातर्नैव मया कदा किमपि तत्त्वे ह्यानुरूपं कृतम् ॥

( ५ )

धन्यास्ते तनयाः स्वजातिशुभदाः शौर्य्यार्य्यशीलोज्ज्वला
येषां कीर्त्तिरखण्डिता जननि ते प्रीतिं परां यच्छति।
दीनोऽकिञ्चन एष दुःखितसुतो मातर्न विस्मर्य्यतां
चेज्जन्मात्र भवे पुनस्त्वदुदरे तन्मे भवत्वर्थये ॥

( ६ )

पादाघातविदारणातिदहनज्वालाभिकद्देजिताऽ-
प्यस्मत्सौख्यविधायिनी भवसि यत् त्वं सर्व्वदा सर्व्वदे।
अस्मत्तातपितामहादिजननि ग्रामण्डलीमण्डने।
तस्मै वङ्गवसुन्धरे करुणया क्षन्तव्यमित्यर्थये ॥

( ७ )

प्रातर्वहन्मृदुसमीरणलोलवल्ली
भ्रश्यत्प्रसूनमकरन्दविमुग्धभृङ्गैः।
उद्गीयमानममलं करुणायशस्ते
मातर्ममाऽस्तु सततं शुभदं प्रवासे ॥

( ८ )

ध्यानं प्रयाणसमये तव मातरास्तां
तन्नाम मे श्रुतियुगाभरणं सदाऽस्तु।

जिह्वाऽनिशं रटतु ते महनीयकीर्त्तिं
त्वं दैवतं मम परं विजयस्व शश्वत् ॥

## संस्कृतशिक्षाक्रमः ।

मध्यमशिक्षायाम्। ( वर्षत्रयेण )

१—संस्कृतपाठ्ये गद्यपद्ययोः प्रौढ़ं ज्ञानम् ।

( तत्र गद्यपद्यसंग्रहात्मका ग्रन्थाः अपेक्षिताः ) ( प्रतिश्रेणि ( प्रतिवर्षं ) सहस्रश्लोकपरिमितो गद्यपद्यभागः )। ( गद्ये पञ्चतन्त्र-दशकुमारचरितश्रीहर्षचरित-शिवराजविजयानां संगृहीता भागाः, पद्ये कालिदासकाव्यानां किरातार्जुनीयादीनां च भागाः। नाटकेषु भासस्य स्वप्नवासवदत्तम्, पञ्चरात्रमित्यादि, कालिदासस्य शाकुन्तलम्, वेणीसंहारादि च अविकलमेव यथोपयोगं संग्राह्यम्। यावता प्रौढ़िर्भवेत्। )

( छन्दोज्ञानार्थं वृत्तरत्नाकरादिः कश्चन ग्रन्थः प्रथमश्रेण्यामेव-शिक्षणीयः )

२—व्याकरणे—व्याकरणस्य सर्वेषु प्रकरणेषु योग्यता यथा संपद्यते, संस्कृतभाषायामधिकारश्च भवेत्। अधीतानधीतग्रन्थेषु सर्व्वाणि पदानि सम्यङ् निर्द्धृत्य साधयितुं च शक्नुयात् तावदध्याप्यम्। (पाणिनीयव्याकरणस्य सौकर्येण शिक्षार्थम् अभिनवप्रकल्पितं किमपि प्रौढ़ं सरलं च पुस्तकं संमेलनविदुषामभिमतं नियतीकृतं स्यात् )

तावत्तु मध्यकौमुदी, सहस्रोदाहरणा अष्टाध्यायी, सारस्वत-

१। संग्रहीतग्रन्थप्रकाशनात् पूर्वं निर्दिष्टग्रन्थेषु केषांचित् कियद्भागाः शिक्षकैर्नियमनीयाः।

चन्द्रिके, मुग्धबोधः कालापकातन्त्रे, शाकटायनम्, जैनेन्द्रव्याकरणम् वेत्येवंविधैर्ग्रन्थैर्विकल्पितैः शिक्षा प्रवर्त्तनीया। विशेषेण मध्यकौमुद्येवात्र समीचीनानुमन्यते। उत्तमशिक्षायां व्याकरणमधिजिगांसुभिस्तु नियमेनैव साध्येतव्या।

३—अनुवादः— संस्कृतगद्यपद्ययोर्भाषान्तरीकरणम्। देशभाषायाः संस्कृतेऽनुवादः, संस्कृतनिबन्धलेखाभ्यासश्च।

४—कोषे—अनेकार्थशब्दविज्ञानम्, प्रवृत्तिनिमित्तज्ञानपुरस्सरम्।
( अमरकोषादिभ्यः शिक्षणीयम् )

५—साधारण्येन समस्तभूगोलज्ञानम् भारतवर्षेतिहासः। एतदर्थ संस्कृते पुस्तकान्यपेक्ष्यन्ते। तावत् हिन्दीभाषापुस्तकैरपि शक्यते प्रवर्त्तयितुम्।

६—पदार्थविज्ञानम् ( Science ) विज्ञाने प्रवेशयोग्यता यावता भवेत् तावद्विज्ञानभागो रसायनभागश्च संस्कृतेन हिंदीभाषया वा शिक्षणीयः।

७—धर्मशिक्षा-गृहस्थाचारशिक्षा ( मनुस्मृत्यादिभ्यः सूत्रेभ्यश्च ) ( जैनानां रत्नकरण्डश्रावकाचारतः )।

निम्ननिर्दिष्टेष्वन्यतमं द्वयमावश्यकम्।

८—अलङ्कारशास्त्रे दोषगुणालङ्काराणां भाषापरिष्कृतेर्नियमानां व्युत्पत्तिशास्त्रसम्बन्धिनां ( शक्तिलक्षणाव्यञ्जनाविशेष्यविशेषणभावनियमप्रकृतिप्रत्ययाद्यर्थविशेषाणां च ) विषयाणां, साधारण्येन रसस्य नाटकाङ्गानां च ज्ञानं यावता भवेत् तथाविधं शृङ्गारबाहुल्यविरहितमुपयुक्तोदाहरणसंदृब्धं सरलया शैल्या निबद्धमनतिगुरु किमप्यभिनवं पुस्तकम्। तावत् चन्द्रालोककुवलयानन्दौ, काव्यादर्शः साहित्यकौमुदी वा, दशरूपकं च तत्सहचरम् इत्येवं शिक्षा प्रवर्तनीया )

९—न्यायशास्त्रे—पदार्थविभागादिबोधः, तल्लक्षणबोधः, नवीन-

न्यायपरिभाषाबोधश्च । (न्यायबोधिनी—सिद्धान्तचन्द्रोदयेतिटीका-द्वययुतस्तर्कसंग्रहः, न्यायप्रदीपो वा श्रीगङ्गासहायकृतः) ।

अथवा

८—पूर्णमङ्कगणितम्, व्यावहारिकगणितमहत्कृतम् रेखागणितं च (अभिनवशैलीनिबद्धं गणितपुस्तकम्, लीलावती वा एतदर्थं नियमनीया)

९—मुहूर्तभागः सारणीभागश्च । (मुहूर्तचिन्तामणिः, ग्रहलाघवम् चेत्येवंविधा ग्रन्थाः) (बृहज्ज्योतिषसारो वा)

अथवा

८—हिन्दीभाषासाहित्यम् । (महाकाव्यानि अलङ्कारग्रन्थाश्च हिन्दीसाहित्यसंमेलनपाठनक्रमात्संग्राह्याः) ।

९—ङ्गिलभाषाकाव्यपरिचयः)

अथवा

८—आङ्गलभाषासाहित्यम्
९—आङ्गलभाषाव्याकरणम्
} मौट्रिकयोग्यतोपयुक्तम्

अथवा

८—९ आयुर्व्वेदः (लघुत्रय्यीत्यादिः)

अथवा

८—१ पुराणविषयः (श्रीमद्भागवतम्, रामायण-महाभारतांशाश्च) अथैतेषु वृत्तार्थम् विकल्परूपेण यथाभिरुचि एकं द्वयं वा ऐच्छिकम्

(ष) अन्यतमवेदभागः । (मन्त्रसंहितादिः) संस्कारग्रन्थः यज्ञयागादिसहितः, मुहूर्त्तग्रन्थश्च । (कर्मकाण्डार्थम्)

---

(ष) येषां वेदाधिकारस्त एवात्र प्रवेष्टुमर्हन्ति ।

(क) अध्यापनकलापरिचयः।

(ख) कथावाचनशैली हरिकीर्तनशैली वा।

(ग) ज्योतिषफलकथनाभ्यासः (बृहज्जातकादिजातकग्रन्था अप्येतदर्थमध्येतव्याः)

(घ) वक्तृताशैली। (स्वस्वाभीप्सितधार्मिकसामाजिकराजनैतिकादिविषयपरिज्ञानाय समपेक्षितग्रन्थाध्ययनम्)

(ङ) संगीतम्।

(च) रोगनिदानभेषजव्यवस्थाभ्यासः।

(छ) आङ्गलभाषा। (मिडिलयोग्यतोपयुक्ता)

(ज) समाचारपत्र—ग्रन्थसम्पादनशैली।

(झ) चित्ररचनाचातुर्यम्, घटिकासंस्कारादि च। (फोटोग्राफी, सरङ्गं हस्तचित्रम्)

(ञ) मुद्रणलेखः (टाइप् राइटिं) संक्षिप्तलेखप्रक्रिया (शार्ट हैण्ड राइटिङ्ग)

(ट) वास्तुसम्बन्धिमानचित्रकलाकौशलम्।

(ठ) वनस्पतिविज्ञानम्।

(ड) कृषिविद्या।

(ढ) वस्त्रवयनसूचीकर्मादि।

(ण) काष्ठवस्तुनिर्माणम्।

(त) वाणिज्यपरिचयः, अर्थशास्त्रं च। (एकोनोमी)।

---

(छ) एतावत् आङ्गलभाषाज्ञानं यथासंभवं सर्वैः संपादनीयम्। अधिकमभ्यासमभिवाञ्छद्भिस्तु पूर्वनिर्दिष्टेषु विकल्पेषु (८—९) अपि आङ्गलभाषा ग्राह्या।

१। एतेषु द्वयर्थेषु विषयेषु कश्चिदयन्यापेक्षा चेद्धिन्दीभाषानिबद्धैरेव ग्रन्थैः कार्यं परिचालनीयम्। संस्कृतेऽपि सर्वविषयग्रन्थसंग्रहाय यतनीयं च।

# चन्द्रालोकम् ( नाटकम् ) ।

( लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः । )

## नान्दी ।

निःसङ्गं गुणहीनमादिरहितं विश्वस्य पारे स्थितं
वेदान्तप्रतिपाद्यतत्त्वमजरं द्वन्द्वातिगं निर्म्ममम् ।
नानाधर्म्मविवादमूढमनसां यत्सारभूतं महः
पूर्णब्रह्मसनातनं प्रददतां तन्नः शिवं शाश्वतम् ॥

अपिच-

आकल्पं कल्पनातीतमवाङ्मानसगोचरम् ।
त्रिजगद्वन्दितं वन्दे रामं सत्यपराक्रमम् ॥

नान्द्यन्ते

सूत्रधारः—( प्रविश्य ) अलमतिवाग्विस्तरेण । अद्य तावदस्मिन् विजयदुन्दुभिध्वनिमुखरदिक्चक्रवाले सदामुदितजननयनमानसाभिरामे विविधागमतन्त्रमन्त्रवेदिभिः काव्यालापामृतरसस्निग्धमतिभिः सदाचारपूतैर्भट्टपल्लीसमाजरत्नैर्वशिष्ठादिभिर्भूसुरसत्तमैरुपसेविते सारस्वतमहोत्सवे किमपि नवं नाटकमभिनेतुमहमार्य्यमिश्रैरादिष्ट इति । (विचिन्त्य) तत् कतमन्नाटकं सामाजिकसन्तोषणाय समारभे, आं ज्ञातम्, भट्टपल्लीनिवासिना वशिष्ठान्वयसमुद्भवेन श्रीमता धर्ज्जटिप्रसादभट्टाचार्य्येण कविना प्रणीतं चन्द्रालोकं नाम नाटकमभिनेतव्यमस्ति । तद्यावदधुना गृहिणीमाहूय सङ्गीतकमारभे । ( नेपथ्यमवलोक्य ) आर्य्ये ! गृहकार्य्यमवसितञ्चेदितागम्यताम् ।

नटी—( प्रविश्य ) अज्ज ! किं आणवेदि ।

सूत्रः—आर्य्ये ! शिक्षितसम्प्रदायबहुलेयं रङ्गभूमिः । तदिमां

नवेन केनापि प्रयोगकौशलेनाभिनन्दयितुमहं सनिर्ब्बन्धमादिष्टः।
तदुच्यतां किं विधेयमत्र।

नटी—भाव। का अहं अविवादलोअचारित्ता इत्थिआ।

सूत्र:—आर्य्ये! न सम्यगभिहितं भवत्या।

नटी—कधं विअ।

सूत्र:—शक्तिर्दैन्यनिपीड़ितस्य करुणा दुःखार्त्तिदिग्धात्मनः
शान्तिः प्राप्तशुचः क्षमा बलवतस्तृप्तस्य तृप्तिः परा।
आशा विश्वविकारमुग्धमनसो भ्रान्तस्य नीतिः शुभा
वागीशस्य वचो धनं धनवतः सृष्टासि मे त्वं प्रिये॥

नटी—( सलज्जं ) सुदूरपराहृदाक्खु पुरिसेहिं नारीणं वाआलदा,
ता क्खमीअदु मे अज्ज।

सूत्र:—भवत्याय्र्ये! उक्तपूर्ब्बमपि कथन्तदधुना विस्मृतवत्यसि।

नटी—आं; त्वं क्केव नाड्अं चन्द्रालोअं नाम।

सूत्र:—अथ किम्।

नटी—को णाम तदो सुहं ण कामेदि।

सूत्र:—तथापि तेन कविना दुर्ज्जनभयादेवमभिहितम्—
साध्वसाध्विति न ग्रानं नाटके नापि पाटवम्।
उत्कृष्टे वापकृष्टे वा नवेऽस्मिन् धीयतां मनः॥

नटी—ता अज्ज! देव्वाणुग्गहेण सव्वं सुसम्पसं भवे।

सूत्र:—आर्य्ये! देवताप्रसादलब्धप्रकर्षाणां जीवानां किमसाध्यमस्ति।

तथाच—
यत्सिक्ता त्रिदशाधिराजतनयो मग्नोऽपि सिन्धोस्तले
निक्षिप्तोऽपि शिलोच्चयात् सगरलान्यन्नानि भुक्तोऽपि वा।
चण्डालैरसिभिर्हतोऽपि गजराट् पादेऽपि सम्पातितोऽ-
व्यापन्नः, किमसाध्यमस्ति भुवने यस्यास्ति दैवी कृपा॥

नटी—तह एव वि देवदा: सोत्थि करिस्सदि।

सूत्र:—( अवलोक्य ) आर्य्ये ! त्वद्गीतश्रवणसुखलालसया प्रतीक्षन्ते किल सर्व्वत: सामाजिकास्तदारभ्यतां सङ्गीतकम्।

नटी—अज्ज ! जइ एव्वं ; ता अत्थि मे अवरं किम्पि वत्तव्वं।

सूत्र:—किं किम्।

नटी—अत्थि दाव अस्सिं णअरिट्ठाणे साहुचरित्तो मअरन्दओ णाम सप्पुरिसो ब्बह्मणो ; सो एत्तिअं कालं महाराअदक्खिणदेवस्स मन्तसचिवो वअस्सो वा भविअ चव्व-चुस्स-लेज्झ-पेएहिं खज्जभज्ज-प्पहुदिहिं सुहेण कालं जाविअ परिवारं अ पोसाविअ आसी। किन्तु तस्स उण रण्णो मिअआप्पसङ्गादो आरब्भिअ केण वि कारणेण उब्बि-ग्गस्स सच्चिहाणे णत्थि गमणोआओ। तदो दाणीं दरिद्द्ब्बह्मणस्स जढरे कुदो अण्णं। अम्हो ! जइ णाम भवं तस्स दसां पेक्खदि, तदो भअदो करुणा भवे त्ति एत्थ इदं मे सकरुणं वअणं।

सूत्र:—तदेतेनास्मिन्नाटकारम्भे किमन्यदायातम्।

नटी—अज्ज ! विआरव्वभिचारे भवं ज्जेव एत्थ कज्जणिव्वा-अको।

सूत्र:—( विचिन्त्य ) आर्य्ये ! अपि पृच्छामि किमनेन ब्राह्मणेन राजसेवा परित्यक्ता ?

नटी—णक्खु णक्खु ; तह वि णत्थि तारिसो लाहो।

सूत्र:—अतस्तद्दारिद्र्यनाशाय किं विधेयमत्र विचिन्त्यते।

नटी—( सलज्जम् ) णाहणाहिणअलाहस्स अज्झंसं दइस्संत्ति।

सूत्र:—आर्य्ये ! साधु मन्त्रितम्।

( नेपथ्ये )—अब्बह्मण्णं ; अब्बह्मण्णं।

सूत्र:—( श्रुत्वा ) आर्य्ये ! को नामाब्रह्मण्यमिति प्रलपन् क्रियते।

नटी—अज्ज ! सो ज्जेव अयं मअरन्दओ णाम ब्बह्मणो।

(नेपथ्ये)—अले दलिहवाह्मण ! कहं उण दाणीं वि णिद्दासि ? जावमहालाओ णिअआसं गदो ण्हुविअ मह दुग्गदिदेहं व्व कं वि अहिगदो, दावज्जेव मे भग्गं भग्गं ; सोहग्गलच्छी अत्थमिदा तुमं वि एफन्दणरहिदं वट्टसि।

सूत्र:—(नेपथ्यमवलोक्य) आर्य्य मकरन्द ; क भवान् गच्छति ? नचेत् कार्य्यातिपातस्तदा मदालयमागम्य पुनातु मां महाभाग:।

विदूषक:—( प्रविश्य ) दलिद्दस्स णिम्महाअस्स ण णत्थि को वि मित्तं, ता कहं उण आआरेसि भावो।

सूत्र:—आर्य्य ! भवद्दैन्यनाशप्रतिविधित्सयानयासहार्य्यया किमपि मन्त्रितम्।

विदू—भाव ! जधा रोगत्तं जणं लोहेदि अम्लतिन्तिड़ीफलप्पदंसणेण ; जधा वा लोहेदि क्खेओट्ठानादो वरं आणेदुं गोवालओ वलीवद्दं तधाव्व मं एव्वं लोहेसि। सव्वे उण जाणन्दि मअरन्दओ दलिद्दो लोहपरवसो अत्थि ; अदो तुमं वि दाणीं मए सह वाणराह कअलीफलप्पदंसणं विअ किलेसि।

सूत्र:—कथं नाम मृषा शङ्कते भवान् ; श्रूयतां तावत् ; अद्य तावदस्मिन् महोत्सवे चन्द्रालोकं नाम नाटकमभिनेतव्यमस्ति।

विदू—भाव ! तहिं किं मं वाणरं कदुअ णच्चइस्सदि।

सूत्र:—तत्र यावदार्योऽस्माकं भविष्यति, तदर्थेण भवन्तं पोषयिष्यामि।

विदू—जइ एव्वं ; ता एसो दलिद्दो ब्बह्मणो जीविस्सदि अणन्दं पुत्तं अ ण्हुविस्सदि। ( स्वगतं दीर्घं नि:श्वस्य ) अहवा कहिं णाम हदभायधेअस्स मङ्गलं ; च्छाअत्थं णिदाहे जं रुक्खं गच्छेमि सो ज्जेव घणसव्विविदपत्तसमिद्धो वि पत्तसूणो जिण्णो होदि ; उद अपाणत्थं-साअरं गदस्स वि मज्झसो ज्जेव साअरो सुक्काअदि, ( प्रकाशम् ) भाव ! जधा णिहिट्ठं महाराअभअणं गदुअ राअसेवावसरं अस्सिस्सं, तुमं वि सङ्गीदअं आरभेहि।

सूत्र:—आर्य्ये ! अभिवादये ( प्रणमति )

नटी—अज्ज ! वन्दामि ( प्रणमति )

विदू—तुम्हाणं सोत्थि होदु। ( निष्क्रान्तः )

सूत्र:—आर्य्ये ! तदधुना निर्म्मलकराभिनन्दितो भगवान् शशधर: प्रकृतितिलक इवावभाति गगनमण्डले। तदिदानीमस्मनावसरोपयुक्त-सङ्गीतकमारभ्य तानलयविशुद्धया गीत्या मोहय सर्व्वं रङ्गम्।

नटी—जं अज्ज ! आणवेदि। गीयते—

गगणे सोहइ ससहलो विमलो
भुअणं तप्पइ अमिदपूलकलो।
लअणो सोहणओ सुन्दलवअणो,
सददं देदि सुहं सीदलकिलणो।

सूत्र:—आर्य्ये ! सुमधुरगीतिकाश्रवणसुखनिमीलितनयना किल सर्व्वतो रङ्गभूमिस्तत् किमिदानीमाचरणीयमस्माभिरत्र।

नटी—सव्वं विसुमरिदं अज्जेन ?

सूत्र:—(विहस्य) आर्य्ये ! किमन्यत्, यत् सत्यं, वरवर्णिनीवदन-पङ्कजसुधापानमत्तमधुकर: सर्व्वोऽपि सर्व्वं विस्मरति तदिदानीमपि—

त्वद्गीतश्रवणादार्य्ये ! यथा मुग्धोऽहमात्मना।
सद्योर्व्वश्या रतिं लब्धा तथायं दक्षिणभूपति: ॥

तदेहि कुशीलवादीनाहूय नेपथ्यरचनां सम्पादयाम:।

( उभौ प्रस्थितौ )

## इति प्रस्तावना।

---

# चन्द्रालोके

## प्रथमोऽङ्कः ।

ततः प्रविशति—विदूषकेणानुगम्यमानो राजा ।

राजा ( स्वगतम् )

या ज्योत्स्ना शशिमण्डले जलधरे या नाम सौदामनी,
या श्रीः पद्मसरोवरे, नयनयोर्या मुग्धताराममणिः ।
या पीयूषसरिद्वरा मरुतटे योषित्सभे या रतिः
सा मे भृङ्गवधूर्नवोत्पलदले चित्ते चिरं वर्त्तते ॥

विदूषकः । इदो इदो एदु वअस्स ! ( निपुणमवलोक्य ) वअस्स ! कर्ण्णं उव्विग्गो विअ भिअआप्पसङ्गादो लक्खीअदि ?

राजा । (स्वगतम्) अयि भो वराक ! कथं नु त्वमिदं मनोगतं वेत्सि ?

विदू । वअस्स ! अविणाम कोवि राआ भवदो रज्जं विजेदुं पच्चासीददि ?

राजा । वयस्य ! न राज्यं ; अपितु मनोराज्यमिदं विजेतुं काचिदत्र समागता ।

विदू । वअस्स ! का सा, क्क वा सा ?

राजा । मदवरोधचतुःशाले ।

विदू । हीमाणहे ! णिअपिढुममज्झगदमोदअं विअ तां जदा ण्व अहिलासो हुविस्सदि, तदा ण्व खाइस्सदि अदो का दे भावणा ।

राजा । बलेन शाठ्येन जिताः सपत्ना
जिष्णोः सदा खेलनवद्विभान्ति !

निबन्धुमन्तः सुहृद' यदीष्टे
तद्दुर्लभं प्रेम वयस्य! विद्धि ॥

विदू। हुं ; अध वअस्स! किंणामहेआ सा।

राजा। वयस्य! उर्व्वशी नामधेया घोटकी कापि।

विदू। ही ही भो! घोड़ओए भवदो माणसं मुद्धं णाम; ता होदु; णत्थि देसकालपत्तविआरो प्पणइणं प्पणअव्ववहारेसु, ता वअस्स! एदेण दक्कड्डसरिसेण दक्खिणकरेण आसिसं देमि सोत्थि होदुत्ति।

राजा। वयस्य! चिरमनुगृहीतोऽस्मि।

विदू। ( दिशोऽवलोक्य ) पेक्खदु पेक्खदु वअस्स! आआसदण-मोदओ मोदओ विअ कावड़िअ। दिणअरो पुव्वदिअङ्गणाअअणप्फंस-किदत्थो वि दाणीं पच्छिमदिग्वहूहत्थे सराअ' णिपड़िदो, ता सम्भावेमि; अस्सिं क्खु रमणिज्जे समए एरिसे पुप्फोज्जाणे चित्त-विणोदणो वाअ' जं णाम विन्देदि सा ज्जेव जइ घोड़ओरूवं परिहरिअ रमणिज्जं रमणीरूवं गेह्निअ आअच्छदि, तदा किं होदि।

राजा। वयस्य! अलं विकल्पेन। सा हि निशायां रमणीयं स्त्रीरूपं परिगृह्णाति। सर्व्वे पुनर्जानन्ति यथया कापि प्राप्ता घोटकी।

विदू। ( स्वगतम् ) हंहो ? उव्वसीणामहेआ घोड़ओत्ति सद्देण दाणीं एव्वं सुमरेमि, किन्तु क्खु उव्वसी णाम कावि अच्छरा भवे।

राजा। तद्वयस्य! नान्यस्मै कथनीयमेतद्वृत्तम्।

विदू। णक्खु णक्खु महाराअ। दाणीं सुहं सं दति।

राजा। तदवलोकय मे प्रियासङ्गमसङ्केतस्थानम्। ( उपविश्य ) वयस्य! प्रकृष्टपुण्योपचयाधिगतदुर्लभजनसमागमसुखेन मानवो-ऽप्यहं देवसुलभं भोगमुपभुञ्जानश्चरितार्थोऽस्मि, किन्तु पुरा यादवपति-प्रणोदितदनावमानाद्बिभेमि सर्व्वदा प्रतिपक्षेभ्यो, यतः—

यः संहर्त्ता निखिलजगतां वासुदेवः स वैरी
वीराश्चान्ये यदुकुलभवाः कोटिशस्तन्नियोज्याः।
पार्थाः पञ्च प्रथितयशसस्तेऽपि वीराः सहायाः
स्मारं स्मारं यदिदमखिलं हा विधे ! व्याकुलोऽस्मि॥

(क्रमशः)

## संस्कृतसाहित्यपरिषदः षष्ठवर्षकार्य्यविवरणम्।

उन्निद्रनीलनलिनद्युतिचारुवर्णं
सन्तप्तहाटकनिभे वसने वसानम्।
सद्रत्नशोभितकिरीटविराजमानं
नारायणं सुरगुरुं प्रणतोऽस्मि देवम्॥"

संस्कृतसाहित्यपरिषदो वयःपरिमाणस्य षष्ठो वर्ष इदानीमतिक्रान्तः। यस्य चराचरगुरोर्नारायणस्य प्रसादात् निर्व्विघ्नं परिसमाप्तिं गतोऽयं षड्वर्षपरिमितः कालस्तस्य सर्व्वाभीष्टप्रदं चरणाम्बुजयुगलं पुनः पुनः स्तुत्वा, गुरुजनान् प्रणम्य, अन्यांश्च सामाजिकान् यथायोग्यं समभिनन्द्य परिषदः षड्वार्षिकं कार्य्यविवरणं संक्षेपेण विज्ञापयितुमुद्युक्ताः स्मः।

माननीयाः सभासदः, सुविदितमिदं भवताम्, यत् अधोनिर्द्दिष्टानि परिषदा स्वकर्त्तव्यतया प्रारब्धानि।

सभानुष्ठानादिना शास्त्रानुशीलनं भाषानुशीलनञ्च।
अध्यापनेन शास्त्रज्ञानस्य सम्यग् विस्तारः।
संस्कृतग्रन्थानां संग्रहः।
संस्कृतभाषया पत्रिकाप्रकाशः।
संस्कृतग्रन्थप्रकाशनम्।

समानकर्म्मभिः सहयोगः।

संस्कृतनाटकाभिनयश्चेति।

सभापतिसम्पदा परिषदियं आदितः प्रभृत्येव सौभाग्यशालिनी। प्रथमवार्षिकोत्सवसभायां महामहिमश्रीमन्त आशुतोषमुखोपाध्यायाः, द्वितीयस्यां सुगृहीतनामानो देवप्रसादसर्व्वाधिकारिणः, तृतीयस्यां विद्वज्जनवल्लभा श्रीमन्त आशुतोषचतुर्धुरीणाः, चतुर्थ्यां नाटोराधिपतयः उदारचरिता श्रीयुक्तजगदिन्द्रनाथरायबाहादुराः सभापतिपदमलमकुर्व्वन्।

**सभानुष्ठानम्**—वैशाखे सम्पादितः पञ्चमवार्षिकमहोत्सवः मनोमोहनरङ्गमञ्चे तत्रभवतः पुण्यश्लोकस्य काशिमवाजाराधिपस्य महाराजस्य श्रीमन् मणीन्द्रचन्द्रनन्दिबाहादुरस्य नेतृत्वेन। तत्र सभाकृत्यावसाने उपस्थितानां विदुषां सामाजिकानां च कृतार्थं महाकविभासविरचितं "दूतवाक्य" "दूतघटोत्कचं" तथा भट्टनारायणकृति"वेणीसंहारनाटकम्" अभिनीतानि। गीतवादित्रप्रचुरेण प्रयोगकौशलसम्पन्नेन च अभिनयेन तथा पण्डितमुखैः महाराजेन च प्रदत्तैर्व्याख्यानैः सा उत्सवसभा परमानन्दसन्दोहप्लाविता व्याजत।

तत ऊर्द्ध्वं एकादशसु मासेषु संसाधितानि एकादश मासिकाधिवेशनानि, तेषु निबन्धानां पाठः, समालोचनञ्चाजायेताम्। प्रायेण सर्व्वेष्वेव निबन्धेषु रचकानामनुशीलनपाटवं स्फुटं प्रादुरासीत्। अस्य अनुष्ठानस्य यदन्यतरत् उद्देश्यं वर्त्तते, तत्रापि वयं चरितार्था जाताः। समालोचनप्रसङ्गेन संस्कृतभाषया यदालपनमपेक्षितं तेन छात्राणां भाषाप्रयोगनैपुण्यं सम्यग् विवृतमासीत्। वर्त्तन्ते इदानीं बहवश्छात्रा ये एतदभ्यासबलादेव सभासु देवभाषया यथावत् व्यवहर्त्तुं शक्नुवन्ति। यस्मिन् यस्मिन् मासि यो यो निबन्धो येन येन रचयित्वा पठितः, तेषां नामानि कीर्त्त्यन्ते।

| मासः | प्रबन्धः | लेखकः |
| --- | --- | --- |
| वैशाखे | न्यायचर्चा | श्रीयुक्तहारिकानाथन्यायशास्त्री |
| आषाढ़े | रोगाणां संक्रामकता | श्रीयुक्तशचीन्द्रनाथविद्याभूषणः |
| श्रावणे | योगविभूतिः | " कृष्णप्रसन्नतर्कवागीशः षट्तीर्थः |
| भाद्रे | प्राचीनभारते साक्ष्यविधिः | अमरेश्वरठाकुरः एम् ए, |
| आश्विने | संस्कृतभाषा लौकिकी आसीन्न वा | सदानन्दभादुड़ी एम् ए, |
| कार्त्तिके | आयुर्व्वेदे दर्शनतत्त्वम् | ताराचरणआयुर्व्वेदशास्त्री, |
| अग्रहायणे | जातिबाधकविचारः | कालीपदतर्काचार्य्यः |
| पौषे | गोत्रप्रवरविमर्शः | दुर्गामोहनकाव्यसांख्यपुराणतीर्थः वि ए |
| माघे | प्राचीनभारते राष्ट्रसंस्थानम् | जानकीनाथसाहित्यशास्त्री |
| फाल्गुने | आथर्व्वणप्राणतत्त्वम् | उपेन्द्रनाथसेनगुप्तकाव्यतीर्थः |
| चैत्रे | निद्रा | दक्षिणाचरणभट्टाचार्य्यः वि, ए। |

परिषदः कार्य्यनिर्व्वाहकसमितिरपि अस्मिन् वर्षे द्वादश वारान् मिलिता सती यथानियमं कार्य्यव्यवस्थां सम्पादयामास।

**पाठशाला**—अस्मिन् वर्षे विंशतिर्विद्यार्थिनो यथानियमं पाठान् अलभन्त विभिन्नेषु विषयेषु। एते विद्यार्थिनस्त्रिभिर्भागै-र्विभक्तुं शक्यन्ते। केचन परिषदो वृत्तिं गृहीत्वा परिषद्भवने एव ऊषुः, केचन बहिःस्थाः पाठकाल एव उपातिष्ठन्त। अपरे च केचन प्रवीणाः कृतविद्या विषयविशेषम् अध्येतुकामा आगतवन्तः। अस्मिन् वर्षे चतस्रो वृत्तयः प्रदत्ताः, न्यायशास्त्रे द्वे, स्मृतावेका, सांख्ये चैका। पूर्व्वेषु वर्षेषु मासिकी वृत्तिः प्रतिजनं षड्रूप्यक-परिमिता आसीत्, अस्मिन् वर्षे द्रव्याणां मूल्यवृद्धिं अनुभूय वृत्तिः सप्तरूप्यकपरिमिता कृता। अतीते वर्षे विभिन्नासु परीक्षासु—अष्ट-विद्यार्थिनोऽवतीर्णाः तेषां पञ्च आसन् कृतकृत्याः। अस्मिन् वर्षे दश आसन् परीक्षार्थिनः परीक्षाफलानि तु इदानीमपि प्रकाशं नायातानि, यद्यपि परिषदाचार्य्यैः राजकीया वृत्तिः काचित् काचित्

लभ्यते, तथापि परिश्रमतुलनया तत् साहाय्यं अकिञ्चित्करमिव प्रतिभाति। ये खलु अध्यापका अध्यापनविधौ आत्मानं सर्व्वथा न्ययुञ्जत, अस्य निःस्वार्थस्य कर्म्मणः कृते ते सर्व्वेषां संस्कृतसेविनां कृतज्ञताम् अर्हन्ति।

**पुस्तकालयः**—अस्मिन् वर्षे परिषत्पुस्तकालये रूप्यकाणां सार्द्धशतचतुष्टयेन नूतनपुस्तकानि क्रीतानि। कलिकातानगरीस्थ-मिउनिसिपाल्‌महासभया पुस्तकालये वार्षिकदानरूपेण सार्द्धशत-द्वयं रूप्यकाणां प्रदत्तं पुस्तकालयाय। त्रिवाङ्कुरमहाराजानां तथा वरोदानृपतीनां ये पुस्तकप्रकाशिन्यौ संस्थे वर्त्तेते, ताभ्यां नवप्रका-शितानि पुस्तकानि मूल्यं विनैव प्रेषितानि। सभ्यानामवगत्यर्थं मुद्रितपुस्तकानां सूची मुद्रापिता प्रचार्य्यते चेदानीम्। ये खलु परिषत्-सदस्यास्ते रूप्यकद्वयं न्यासरूपेण संस्थाप्य खण्डमेकं पुस्तकस्य गृहं नेतुं शक्नुवन्ति, ये तु न परिषत्सदस्यास्ते परिषद्-गृहे एव पुस्तकानि पठितुं प्रभवेयुः। हस्तलिखितग्रन्थानां सूची इदानीमपि न मुद्रापिता, अचिरेणैव कालेन सा सम्पत्स्यते। अतीव सुखकरी भवेत् एषा वार्त्ता भवतां यत् ग्रन्थानां यथावदुपयोगः प्रारब्ध एव। बहवो विद्वांसः परिषत्पुस्तकालयस्थितान् ग्रन्थान् गृह्णन्ति पठन्ति च। यद्यपि ग्रन्थानां संग्रहः नेदानीमपि आशानुरूप-स्तथापि ये ग्रन्थाः संगृहीतास्ते विद्यार्थिनां पण्डितानां गवेषकाणां च साधारणव्यवहाराय अलमित्येव आनन्दकारणम्।

**पत्रिका**—जैयष्ठे मासि पत्रिकायाः प्रथमः प्रचारो जात इति कृत्वा पत्रिकाया वर्षगणना विगतवर्षपर्य्यन्तं जैयष्ठमासत एव कृता, परं परिषदो वर्षगणना वैशाखात् एव अक्रियत। उभयमसमञ्जसं भवतीति पर्य्यालोच्य पूर्व्वनियमं विघटय्य पत्रिकाया वर्षगणना अस्मिन् वर्षे वैशाखादेव कृता। सम्पादितञ्च अस्मिन् वर्षे पत्रिकाया रैजिष्ट्रासनाख्यं राजानुमोदनरूपं कर्म्म, तस्माद्दाकमाशूल प्रेषणव्यय

इदानीं स्वल्प एव स्यात्। अयं तावत् सुमहान् उत्कर्षः साधितः प्रकाशनविधौ यत् पत्रिका इयानीं यथाकालमेव प्रप्रकाशते। संस्कृत-पत्रिकाणां एतादृक् सौभाग्यं प्रायेण अदृष्टचरमेव। एतत्संसाधकाः श्रीमन्तो नगेन्द्रनाथसिद्धान्तरत्नमहोदयाः पत्रिकापाठकानां सर्व्वेषां धन्यवादमर्हन्ति।

**ग्रन्थमुद्रापणम्**—ग्रन्थमुद्रापणं परिषदोऽन्यतमं प्रधान-मुद्देश्यम् परं समुचितस्य अर्थस्य अभावात् एष व्यापारः नास्माभिरितः पूर्व्वं प्रारब्धः। इदानीमतिविलम्बो न श्रेयसे सम्पद्यत इति मत्वा "कालीतन्त्र"मित्याख्यस्य कस्यचित् विरलप्रचारस्य उत्तमस्य तन्त्र-ग्रन्थस्य प्रकाशः स्वीकृतः। ग्रन्थोऽयं परिषत्पुस्तकागारस्थ-हस्तलिखित-पुस्तकानां मध्ये प्राप्तः। अन्यानि त्रीणि हस्तलिखितानि पुस्तकानि केषाञ्चित् प्रसिद्धानां तन्त्रविदां भवनतो लब्धानि। एतेषां पुस्तकानां आदर्शत्वेन तन्त्रशास्त्रविदां श्रीमतां सतीशचन्द्रसिद्धान्तभूषणाना-माध्यक्षेण च संस्कृतटिप्पण्यलंकृतोऽयं ग्रन्थो वङ्गभाषामर्मानुवादेन सह मासद्वयेनैव प्राकाश्यमेष्यति इति सम्भाव्यते। एतदपि आशास्यते यदादौ मातृनामङ्कितग्रन्थावलम्बनात् प्रारम्भोऽयं भूयसे कार्य्य-प्रसाराय भविष्यति।

**समानकर्म्मभिः सहयोगः**—विगतवर्षत्रयं यावत् पूर्व्व-वङ्गसारस्वतसमाजप्रवर्त्तितानां परीक्षाणां कलिकाता-केन्द्रस्य समग्रो भारः परिषदा स्वीकृतः। आसु परीक्षासु बहूनां दूरदेशस्थानाम् अपि समादरो दृश्यते। अस्य समाजस्य मूलं ढाकानगर्य्यां वर्त्तते। कलिकातायां कार्य्यपरिचालने समाजस्य असौकर्य्यं भवतीति परिलक्ष्य एवंविधे कार्य्ये साहाय्यं कर्त्तव्यमिति मत्वा परिषदा एष भारो गृहीतः।

अनेकेभ्यो दरिद्रेभ्योऽध्यापकेभ्यस्तथा बहुषु पुस्तकालयेषु परिषत्-पत्रिका मूल्यं विनैव दीयते। कालेन स्वशक्तिवृद्धिमनुसृत्य दान-

पात्राणां संख्यावर्द्धनाय अपि परिषद् आशां पुष्णाति। भवति प्रति वर्षं रूपकत्रयप्रदानेऽपि बहूनां विदुषामसामर्थ्यम् अतस्तेषु स्वल्पेन मूल्येन-मूल्यं विनैव वा पत्रिकाप्रदानाय वर्त्तते परिषदो बलवती वासना।

**अभिनयः**—विगतेषु—वर्षेषु परिषदा शूद्रकस्य "मृच्छकटिकं" विशाखदत्तस्य "मुद्राराक्षसम्," आर्य्यक्षेमीश्वरस्य "चण्डकौशिकं" कालिदासस्य "अभिज्ञानशकुन्तलम्" श्रीहर्षकृतं "नागानन्दम्" भट्टनारायणकृतं "वेणीसंहारम्" भासकृतानि "मध्यमव्यायोग दूतवाक्य दूतघटोत्कचानि" प्रयुक्तानि। अधुना बहुष्वेव अभिनयव्यापारेषु दृश्यते यूरोपीयानुकरणेन वेशसम्पादनमभिनेतॄणाम्, परं तद्देशकालपात्रोचितं न भवतीति प्रत्नतत्त्वविदां युक्तिमुररीकृत्य परिषदा यथाशक्ति प्राचीनोचितं प्रसाधनादिकं सम्पादयितुं प्रयत्यते। महाकवेर्भासस्य नाटकानि अज्ञातानि इव आसन्। त्रिवाङ्कुरमहाराजप्रयत्नैस्तेषामाविष्कारो जातः। एतद्देशे तदभिनयस्तु प्रथमं परिषदैव अवतारितः। केचन विद्वांस एवमपि मतमतन्वन् यत् एतानि भासनामाङ्कितानि पुस्तकानि कूटकृतानि। अत्र विषये प्रत्नतत्त्वविदां मतभेदाः कामं सहस्रशो भवन्तु परमस्माकम् एषां ग्रन्थानां भासकृतत्वे दृढ़ः सम्प्रत्ययः। बहुविधानि नाटकीयचित्राणि एषु ग्रन्थेषु अन्येषु वा अर्व्वाचीनेषु ग्रन्थेषु कुत्रापि न सन्ति। प्रथमदर्शनकाले एते ग्रन्थाः नीरसा इव प्रतिभान्ति। यदा पुनरभिनयार्थमालोच्यन्ते, तदा इक्षुवत् रसराशिमाविष्कुर्व्वन्ति। यदि कोऽपि अर्व्वाचीन एवंविधान् ग्रन्थान् रचयितुं समर्थो भवेत्, तर्हि तस्य शक्तिरलौकिकीति वयमुच्चैर्वोषयेम। भासस्य रूपकत्रयमस्माभिः भवतां सेवायां प्राक् समर्पितम्, अपराण्यपि यथाशक्ति समर्पयिष्यन्ते।

एतावत् कालपर्य्यन्तं परिषदा प्राचीनानामेव रूपकाणामभिनयः कृतः, वर्त्तन्ते नवीनानामपि कृतयः, ता अपि नोपेक्षितव्याः। नवी-

मानामुत्साहवर्द्धनार्थं ता अपि अभिनेयाः। पर्य्यालोच्यन्ते च इदानीं तादृशाः केचन ग्रन्थाः। तेषां यथायथमनुशीलनं कृत्वा भवतां पुरतः स्थापयितुं शक्ष्यात् इति आशा वर्त्तते परिषदः। परिषदोऽभिनयो वत्सरमध्ये वारद्वयं भवति शरदि वसन्ते च। एतमभिनयं द्रष्टुं न केवलं पण्डिताः परं संस्कृतानभिज्ञा अपि समुत्सुका भवन्तीति महत् सौभाग्यं परिषदः। अस्मिंस्तु वर्षे शारदोत्सवो विघ्नैरुपहत इति भृशं दुःखिता वयं भवतां सविधे आत्मनां त्रुटिं निवेदयामः।

**उपसंहारः**—संस्कृतसाहित्यपरिषदिति गुर्व्वर्थकं नाम खलु वहति अस्माकं सभा। नामश्रवणादेव बहुविधा भावा मनसि उद्यन्ति। बहुविधा आशा जाग्रति, बहुविधानि कर्त्तव्यजातानि नेत्रपथवर्त्तीनि भवन्ति, परं तासामाशानां पूर्त्तिस्तेषां कर्त्तव्यानां पालनं सपदि सम्भवति किम्? बहूनां सुधियां मते संस्कृतशिक्षाव्यवस्था परिवर्त्तयितव्या। संस्कृतज्ञानां बुद्धिरेकदेशदर्शिनी भवतीति हेतोः संस्कृतज्ञा आधुनिकशिक्षितानां समाजे यथावत् मानं न लभन्ते। संस्कृतविद्या अर्थकरो न भवतीति हेतोः संस्कृतज्ञानां शिल्पादिशिक्षणं प्रयोजनीयमित्येवमेव बहवः इदानीं विचारयन्ति। निखिलभारतवर्षीयसंस्कृतसम्मेलनेनापि एतदर्थं कोऽपि नूतनः शिक्षाक्रमो विरचितः, सोऽस्माकं पत्रिकायां प्रकाशितो भवतां दृष्टिपथमायातः स्यात्, एतत् कार्य्यं परिषदेव साधयतु इति बहवः कामयन्ते। परिषत्पुस्तकालये सर्व्वविधानां लुप्तप्रचाराणां प्रकाशितानामप्रकाशितानां वा ग्रन्थानां पूर्णः समावेशो दृष्टुमिष्यते मनीषिभिः। पाश्चात्त्यरीत्या ग्रन्थानां मुद्रापणं प्रकाशनञ्च बहूनां मते प्रथमं कर्त्तव्यम्, सर्व्वतोभावेन शास्त्राणां अनुशीलनार्थं प्रचारार्थं च परिषदा दिशि दिशि बहवो व्याख्यातारो नियोज्यन्तामिति वाञ्छन्ति अपरे। परिषत्पत्रिकायाः क्षुद्रः आकारः बहुभ्यः न

रोचते। पुष्ठशतद्वयपरिमिता पत्रिका अतिप्रोतिकरी भवेत्। परिषदः स्वकीयो मुद्रायन्त्रमपि कार्य्योपयोगाय स्यात्। नाट्यशास्त्र-नियमानुसारेण विनिर्म्मिता एका नाट्यशाला दर्शकानां नयनानन्द-वर्द्धिनी, परिषदश्च गौरववर्द्धिनी स्यात्। इत्येवमेव अस्माकं हितैषिणां मनोरथा बहुश उत्तिष्ठन्ते। परं यादृशे दुर्द्दिने अस्माभिः कार्य्यं प्रारब्धं, तेन द्रुतपदक्षेपः कथं सम्भाव्यते? प्रबलप्रचरितैः राजनीतिकमतवादैः सर्व्वेषामेव शिक्षितानां मनांसि विह्वलानि वर्त्तन्ते; वाणिज्यसङ्कटात् सर्व्वे धनिनोऽवसन्नाः; विद्यार्ज्जनं विहाय अर्थार्ज्जनं प्रति भूयसां मनांसि आकृष्टानि। द्रव्याणां औमूल्यात् एकेन रूप्यकेण क्रेतव्यं वस्तु रूप्यकचतुष्केण क्रीयते। यदीदृशे दुर्दिने परिषद् आत्मानं रक्षितुं शक्नोति, तत्रभवतां सुदृढोऽनुराग एव कारणम्। अधुना क्षुद्रमपि साहाय्यकं बहु मन्तव्यम्। मिउ-निसिपालमहासभया पुस्तकालयार्थं यद् दानं कृतं, तदर्थं तत्सदस्य-वर्य्येभ्यो धन्यवादः प्रदीयते। त्रिवाङ्कुरमहाराजास्तथा वरोदा-महाराजा विनैव मूल्यं पुस्तकानि प्रददति, तदर्थं तेभ्यो धन्यवादः प्रदीयते। ये खलु महात्मानः दैनिक साप्ताहिक मासिक पत्रिका-पुस्तकादिप्रदानेन निरन्तरं परिषदमुपकुर्व्वन्ति, तेभ्योऽपि धन्यवादा वितीर्य्यन्ते। अर्थगणनाविशारदाः श्रीमन्तो राजेन्द्रनाथघोष-महोदयाः अस्मिन् वर्षे आयव्ययपरीक्षकरूपेण स्थित्वा आयव्यय-गणनाविषये सूक्ष्मां शैलीं प्रदर्श्य बहुश उपकृतवन्तः परिषत्कर्म्म-चारिणः, अतस्तेभ्योऽपि अस्माकं कृतज्ञता विज्ञाप्यते।

महाभागाः, नूनमापत्काले वर्त्तामहे वयम्, परं यदि पुरुषोत्तमस्य कृपा परिषदं प्रति अक्षुण्णा स्यात्, यदि भवतामनुरागः परिषदं प्रति अक्षुण्णः स्यात्, तदा सर्व्वां बाधा अतीत्य कर्त्तव्यजातानि पालयितुं अवश्यमेव वयं समर्था भवेम।

"मूकं करोति वाचालं पङ्गुं लङ्घयते गिरिम्।
यत्कृपा तमहं वन्दे सच्चिदानन्दविग्रहम्॥"

# आयव्ययसंक्षेपलिपिः ।

## आयः ।

| | |
|---|---|
| वृत्तिरूपेण संगृहीतम् | २६६४।० |
| मासिकरूपेण प्राप्तम् | ५॥० |
| सामयिकदानरूपेण लब्धम् | २७९) |
| पत्रिकाविज्ञापनलब्धम् | १८६) |
| पुस्तकालये न्यस्तम् | २८) |
| कुसीदरूपेण प्राप्तम् | ६०॥≶१० |
| पत्रिकामूल्यरूपेण प्राप्तम् | ३१।≠५ |
| पत्रिकाप्रेषणव्ययार्थं लब्धम् | १२॥≶० |
| यावज्जीवनसभ्यानां दानम् | २७५) |
| सेभिंग्स्ब्याङ्कागारात् गृहीतम् | ८००) |
| | ४३५३॥।१५ |

| | |
|---|---|
| आयसमष्टिः | ४३५३॥।१५ |
| पूर्ववर्षस्य उद्वृत्तम् | २८७।१० |
| | ४६४१।≠५ |
| व्ययसमष्टिः | ४५०५॥≠५ |
| उद्वृत्तम् | १३५।≠० |

आयव्ययलिपिरचक.—

श्रीवामाचरणकाव्यतीर्थ ।

आयव्ययलिपिपरीक्षक.—

श्रीभवनीकान्तमित्र. बि एस् सि, बि, एल्

## व्ययः ।

| | |
|---|---|
| पुस्तकालयभाण्डारात् प्रतिगृहीतम् | ६) |
| सेभिंग्स्ब्याङ्कागारे न्यस्तम् | १७०॥≶१० |
| गृहशुल्कम् | ३५६) |
| आलोकव्ययः | ९८≠५ |
| पत्रिकापत्रक्रयार्थम् | ३१७॥/५ |
| पत्रिकाबन्धनव्ययः | ३०।≶० |
| पत्रिकाप्रेषणशुल्कम् | २४०॥।१५ |
| पत्रिकामुद्रणव्ययः | ५०६॥० |
| पत्रिकासम्बन्धिविविधकर्मार्थम् | ३१।≠५ |
| पत्रिकाकर्मचारिवेतनम् | २२९।/० |
| कर्मकारकाणां वेतनम् | ५५७॥≶५ |
| शिक्षोपकरणक्रयार्थम् | १४७॥≶५ |
| गृहोपकरणनिर्वाहार्थम् | ७५≠० |
| पाथेयव्ययार्थम् | ६२।/१५ |
| शुल्कपत्रक्रयार्थम् | २२।५ |
| मुद्रणव्ययः | २८१) |
| अभिनयार्थम् | २१६॥≶१० |
| अभिनयोपकरणक्रयार्थम् | २२॥।१० |
| पुस्तकक्रयार्थम् | ४०७/५ |
| विद्यालयसाधारणव्ययः | २६॥/१५ |
| विविधेषु | ६०/० |
| छात्राणां वृत्तिः | १३६।० |
| सारस्वतसमाजपरीक्षाव्ययः | २७॥≠५ |
| पुस्तकप्रकाशार्थव्यय. | ≠१० |
| राजस्वम् | २॥।/० |
| देवपूजादिव्ययः | १०) |
| मञ्चोपकरणसंस्कारार्थम् | ॥० |
| विज्ञापनपत्रसंचयव्ययः | ११॥० |
| व्ययसमष्टिः | ४५०५॥≠५ |

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—श्रावणी, ५म वर्षस्य ४र्थं संख्या ।


## मत्स्यभक्षणम् । *

( लेखकः—श्रीगिरीशचन्द्रवेदान्ततीर्थः । )

ब्राह्मणानां मत्स्यभक्षणं पापजनकमुत न, इत्येतत् तावत् प्रबन्धेऽस्मिन् विविच्यते ।

वङ्गप्रभृतिकतिपयदेशवासिनः श्रौतस्मार्त्तधर्म्मानुष्ठाननिपुणाः विशिष्टब्राह्मणा अपि स्मरणातीतकालतो मत्स्यं भक्षयन्ति हव्यकव्यत्वेन च व्यवहरन्ति । तेषामाचरणमेतच्छास्त्रविगर्हितमाहोस्वित् शास्त्रानुमोदितमेतदेव तावत् प्रथमतो विचारणीयम् । यद्यपि पुरा काले श्रौतस्मार्त्तशासननियन्त्रिते ब्राह्मणपरिचालिते समाजे एतादृशप्रश्नप्रतिवचनयोरवसरः प्रयोजनञ्च नासीत्, तथाप्यधुना धर्म्मविप्लवकारिणां समाजविध्वंसनशौण्डानां कुक्कुटमिश्रप्रायाणां मानानां पण्डितम्मन्यानामनल्पफल्गुजल्पन-संजनितशास्त्रज्ञानविधुर-जनभ्रान्तीनां दूरनिरसनायैतद्विषयकं शास्त्रतात्पर्य्यं "हिन्दु"-संज्ञाभिहितानामार्य्याणामावश्यकेन गोचरणीयम् । ये तु श्रुतीनाधीतवन्तः शास्त्रमत एव मुनिवचनतात्पर्य्यज्ञानदरिद्राः शास्त्रार्थ-

---

* सम्पादकमतनिरपेक्षोऽयं प्रबन्धः ।

विशदकारिसन्निबन्धकाररोहान्ममजानानास्ते तावदनायाससम्बमुद्रित-पुस्तकतो यत्किञ्चिद्वचनमायत्तीकृत्य तस्यापातदृष्टार्थमुपजीव्य साधारणजनान् बोधयितुं यतन्ते, यत्—"मत्स्या ब्राह्मणैरभक्ष्याः" मत्स्यभक्षणपाप्मनैव वङ्गीया ब्राह्मणाः पातित्यमुपगता अतस्तेषां भक्ष्याभक्ष्यविवेकयोः किं प्रयोजनम् ?

वङ्गद्वेषिणां शास्त्राभासयुक्त्याभासावलम्बिनाम् तेषां तेषां वराकाणां प्रबोधाय प्रवर्त्ततेऽयमुद्यमः ।

तथाहि मनुनोक्तम्—

"यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ।
मत्स्यादः सर्व्वमांसादस्तस्मान्मत्स्यान् विवर्जये"दिति ।

याज्ञवल्क्येनापि—

"मत्स्यांस्तु कामतो जग्ध्वा सोपवासस्त्र्यहं वसे"दिति । एतद्वचन-द्वयमात्रार्थतः सर्व्वे मत्स्या ब्राह्मणैरभक्ष्या इत्यापाततः प्रतिभाति ।

परन्त्वेतत्समनन्तरमेव मनुना पुनरभिहितम्—

"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्व्वशः ॥" ५।१६

वचनेऽस्मिन् पाठीनः ( बोयालनाम्ना प्रसिद्धः ), रोहितः, राजीवः (यस्य गात्रे रेखा वर्त्तते) सिंहतुण्डाः ( येषां मुखं सिंहमुखवद्दिस्तृतं, धागट्-भेउस्-गागल-रिठा-ढाइन्-मागुर-प्रभृतयः ) सर्व्वे सशल्काश्च हव्यकव्यनियोज्यत्वेन भक्ष्यत्वेन चाभिहिताः। एतेषां भक्ष्यत्वं विशदभावेन बोधयितुं कुल्लूक-भट्टेन मुन्यन्तराणां वचनावली समुद्धृता ।

तत्र यमः—

"राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च ।
पाठीन-रोहितौ चापि भक्ष्या मत्स्येषु कीर्त्तिताः ॥"

याज्ञवल्क्यः—

"भक्ष्याः पञ्चनखाः श्वावित् गोधाः कच्छपशल्लकाः ।
शशश्च मत्स्येष्वपि तु सिंहतुण्डकरोहिताः ॥
तथा पाठीन-राजीवाः सशल्काश्च द्विजातिभिः ।"

हारीतः—

"सशल्कान् मत्स्यान् न्यायोपेतान् भक्षयेत् ॥"

भट्टमेधातिथिस्तु रोहितपाठीनयोः श्राद्धादावेव भक्ष्यतामाह नत्वाह्निके भोजने। तदुक्तिरेवं—"पाठीन-रोहितौ मत्स्यविशेषौ, तयोर्हव्यकव्यनियोगेन श्राद्धादौ भक्ष्यताभ्यनुज्ञाता, न त्वाह्निकभोजने, राजीवसिंहतुण्ड-सशल्कानां सर्व्वशः हव्यकव्याभ्यामन्यात्राप्यनिवृत्तिर्भोजने।" वङ्गगौरव-स्मार्त्तधुरन्धरमहामतिः कुल्लूकभट्टस्तु मतमेतदसहमानः कारिकया चिच्छेद। यथा—

"एवञ्च—भोक्तव्यौ न कर्त्रापि श्राद्धे पाठीनरोहितौ।
राजीवाद्यास्तथा नेति व्याख्या न मुनिसम्मता ॥"

वङ्गीयसामगब्राह्मणानां कर्म्मानुष्ठानपद्धतिकर्त्ता बालवलभिभुजङ्गापरनामा प्राचीनतमविविधस्मृतिनिबन्धकारः सुप्रसिद्धो भवदेवभट्टोऽपि प्रायश्चित्तप्रकरणनामके निबन्धे भक्ष्याभक्ष्यविचारप्रसङ्गे मत्स्यस्य भक्ष्यता विस्पष्टं व्यवस्थापिता। तस्य वाचो युक्तिरीदृशी—यद्यपि मत्स्याः सामान्यतो निषिद्धास्तथापि मत्स्यविशेषाणां भक्ष्यता प्रतीयते। यतो—

"नकुलं मूषिकञ्चैव सर्पमण्डूकमेव च।
विज्ञातांश्चैव मत्स्यांश्च जग्ध्वा कृच्छ्रं समाचरेत् ॥"

इति व्यासवचने विज्ञातमत्स्यभक्षण एव प्रायश्चित्तमुक्तं, न तु मत्स्यमात्रभक्षणे। हारीतेनापि "भक्ष्याणामप्याममांसरुधिरभक्षणे त्रिरात्रमिति" सूत्रे आममांसभक्षण एव त्रिरात्रोपवासप्रायश्चित्तं विहितम्। देवलेनापि—

"मत्स्याश्च विकृता नक्राः सर्पशीर्षा विलेशयाः" इत्यनेन विकृताः सर्पमस्तकतुल्यमस्तका गर्त्तवासिनश्च मत्स्या निषिद्धाः, न तु सर्व्वे। एवं निषिद्धमत्स्यभक्षणे विविधप्रायश्चित्तबोधकानि बहूनि मुन्यन्तरवचनानुग्रपन्यस्य कामतोऽकामतः सकृदभ्यासादिविषय-भेदेन च तेषामवकाशं प्रदर्श्य भवदेवभट्ट उपसंहरति स्म—"अनिषिद्ध-मत्स्यमांसभक्षणे तु दोषाभावात् प्रायश्चित्ताभाव एव" इति। एवं व्यवस्थाप्य पुनरप्याशङ्क्य मुन्यन्तरवचनानां विशेषं प्रादर्शयत् यथा—

"वृथा मांसं न भोक्तव्यमन्यत्र श्राद्धकर्मणि।
अन्यथा भक्षयन् विप्रः प्राजापत्यं समाचरेत्॥" इति
छागलेयेनोक्तं यदपि
"मत्स्यांश्च कामतो जग्ध्वा सोपवासस्त्र्यहं वसे"दिति
याज्ञवल्क्येनापि—
"तत् सर्व्वं निषिद्धचतुर्द्दश्यादिविषयम्।"
यच्च मनुनोक्तम्—
"यक्ष-रक्षः-पिशाचान्नं मद्यं मांसं सुरासवम्।
तद्ब्राह्मणेन भोक्तव्यं देवानामश्नता हविः॥" इति॥

तदप्याममांसाभिप्रायेणैव, आममांसस्यैव राक्षसान्नत्वेन नाना-गमेषु प्रसिद्धत्वात्।

पूर्व्वोक्तहारीतवचनेऽपि आममांसभक्षणे त्रिरात्रोपवासप्रायश्चित्तं विहितम्, तस्यैव वचनान्तरे न्यायोपेता मत्स्या भक्ष्यत्वेनाभिहिताः। "न्यायोपेतान्" इत्यनेन पक्षाः सशल्कप्रभृतयो गृह्यन्ते। अतः शल्करेखारहित,-विकृत-सर्पशीर्षविलेसयानां मत्स्यानां भक्षणे आममांसस्य च भक्षणे निषेधः प्रायश्चित्तञ्च इत्यवधेयम्। तदितर-मत्स्यास्तु द्विजातिभिः सर्व्वथा भक्ष्याः।

देवलवचने "विकृतमत्स्य"-शब्देन शुष्कमत्स्यो लवणरहित

( मोनाइरिस् ) मत्स्यस्य ज्ञापित इति प्रतिभाति। यतः न "कलञ्जं भक्षये"दिति निषेधे कलञ्जत्वेन शुष्कमीनोऽपि बोध्यः।

दृश्यते च महाभारते कर्णपर्व्वणि कर्णशल्यकथाविमर्षे मद्रदेशवासिनां शक्तु मत्स्यभक्षणनिन्दा। यथा—

"पुंभिर्व्विमिश्रा नार्य्यश्च ज्ञाताज्ञाताः स्वयेच्छया।
येषां गृहेष्वशिष्टानां शक्तु मत्स्याशिनां तथा॥
पीत्वा सीधु सगोमांसं क्रन्दन्ति च हसन्ति च।" ४० अ।

शुष्कमीनचूर्णं शक्तु मत्स्यशब्दस्याभिधेयम् इत्यवधेयम्। अद्यत्वेऽपि वङ्गेषु दुर्लभमीने प्रदेशे शुष्कमीनचूर्णानि छोमजातीयैरुपादेयखाद्यत्वेन व्यवह्रियन्ते। अतः "शक्तु मिश्रितमत्स्याशिना"मिति नीलकण्ठव्याख्यानं न समीचीनम्।

"शुष्कमीनमन्त्वन्नं शृङ्गीं कर्कटकन्तथा।
अवीरायास्तथा चान्नं भक्त्वा चान्द्रायणञ्चरेत्॥"

इति महाजनपरिगृहीतवचनेन च शुष्कमीनभक्षणे चान्द्रायणमभिहितम्।

अत्रापरमेकं वक्तव्यम्—प्रदर्शितप्रमाणानुसारेण शल्करहितराजीवशून्यचन्द्रमस्तकवर्म्मि-मत्स्यस्य भक्ष्यत्वं नायाति। किन्तु बौधायनधर्म्मसूत्रे "वर्म्मि मत्स्यस्य भक्ष्यता विशिष्य प्रतिपादिता। यथा—"मत्स्याः सहस्रदंष्ट्रि, चिमिचिम, वर्म्मि, बृहच्छिरो, मशकरि, रोहित-राजीवाः" ( प्रथम प्र पा। ५। अ। १५८ सू। ) अयन्तु वर्म्मि मत्स्यः वङ्गदेशे "वाइम" नाम्नाप्रसिद्ध इति भिषक्प्रवरैरवगतम्। यतोऽनेकेषु रोगेषु वर्म्मि मत्स्यः पथ्यतया व्यवह्रियते। सर्व्वतन्त्रस्वतन्त्रमाधवाचार्य्येण पराशरभाष्ये विशिष्य राजीवादिमत्स्यानां भक्षणीयताभ्यनुज्ञाता। यथा—"अत्र मत्स्यनिषेधो राजीव-सिंहतुण्डकादिव्यतिरिक्तविषयः।......एते श्राद्धे नित्यभोजने च भक्ष्या इत्यर्थः। ( पराशरमाधवः। ३ अः। ७१७ पृः

एसियाटिक् सोसाइटी मु। पु।) हेमाद्रिरपि परिशेषखण्डे श्राद्धप्रकरणे श्राद्धीयद्रव्यासादनप्रसङ्गे "पैठीनसी"वचनमुपन्यस्य मत्स्यानां सातिशयपितृतृप्तिकरत्वमाह स्म। यथा—"पैठीनसीस्त्वाह "ब्राह्मणानलङ्कृत्य मांसापूपदधिमधुघृतपायस कृसरफलविकारानिति मत्स्यांश्चोपसादये"दिति। उपसादयेत परिवेशयेत्। मत्स्यग्रहणञ्च मांसेषु मत्स्यानां सातिशयपितृतृप्तिकरत्वद्योतनार्थम्। ( एसियाटिक् सोसाइटि मु। पु। १२६७ पृ ) याज्ञवल्क्यसंहितायां—तृप्तिविशेषसम्पादकश्राद्धीयद्रव्यकथनप्रस्तावे उक्तम,—

"हविष्यान्नेन वै मासं पायसेन तु वत्सरम्।
मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥
ऐणरौरववाराहशाशैर्मांसैर्यथाक्रमम्।
मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः॥"

"मत्स्यो भषः पाठीनादिस्तस्येदं मात्स्य"मिति विज्ञानेश्वरः। ( आचाराध्यायः। २५८—५९ )

एतत्समनन्तरं पुनर्महाशल्कमत्स्यस्यानन्ततृप्तिकारकत्वमुक्तम्। यथा—

"खड्गामिषं महाशल्कं मधुमुन्यन्नमेव च।
यद्ददाति गयास्थश्च सर्व्वमानन्त्यमश्नुते॥"

प्राचीनतमसूत्रग्रन्थं प्रति दृष्टिपाते सति प्रदर्शित-वचनावलीनां सुसंवादिप्रमाणान्तरं दृश्यतेतराम्। गोभिलेन श्राद्धसूत्रे। पितृतृप्तिकरद्रव्यविधानप्रकरणे उक्तम्—

"मासद्वयं मत्स्यैः। ( ८। षष्ठीखण्डिका ) समन्नौर्ण्यैः। ( ८।६। ) अनन्तरं अक्षय्यतृप्तिविधायकमुक्तम्।—

"महाशल्कः" गोभिलसूत्रभाष्यकारैरुपाध्यायैर्महामहोपाध्याय-स्वर्गतचन्द्रकान्ततर्कालङ्कारचरणै"र्महाशल्क"-शब्दस्यार्थनिर्णयप्रसङ्गे विविधव्याख्यातृवचनानुरञ्जित्य स्वमतं प्रदर्शितम्। यथा—

"महाशल्को मत्स्यविशेषः । स च रोहितादिरिति वाचस्पतिमिश्रः । रोहितमत्स्य इत्यपरे । तथाच—

ब्रह्मपुराणम्—

रोहितामिषमुत्पन्नं दत्त्वा तु रघुगोद्भवाः ।
अनन्तां विप्रयच्छन्ति तृप्तिं गौरीसुतस्तथा ॥
एकशल्कोऽर्द्धचन्द्रश्च ललाटे खड्गसंयुतः ।
शुक्लवर्णश्च यो मत्स्यो महाशल्कः स उच्यते ॥"

इति पुलस्त्योक्तस्तु युक्तः । एतद्वचनार्थतो "महाशल्कः ।" "चिंड़ी"नाम्ना प्रसिद्ध इति प्रतिभाति ।

सामाजिकमहोदयानामेतदवश्यं ज्ञातव्यम्, यत्—यस्य वर्णस्य यत् वस्तु भक्ष्यं, तेनैव तस्य देवपितृअर्चनं कर्त्तव्यम । तथाहि भगवता रामचन्द्रेण वनवाससमये बदरफलमिश्रितेङ्गुदपिन्याकेन पिण्डं विधाय पितरमुद्दिश्य भावगद्गदकण्ठमभिहितम्—

"इदं भुङ्क्ष्व महाराज ! प्रीतो यदशना वयम् ।
यदन्नः पुरुषो राजन् तदन्नास्तस्य देवताः ॥"

इति ( शुद्धितत्त्वधृतरामायणवचनम् ) ।

"नाभक्ष्यं नैवेद्यार्थे ।" ६५।अ।१२ । "भक्ष्येऽप्यजामहिषी-क्षीरे ।" १३ । "पञ्चनख,-मत्स्य,-वराहमांसानि च ।" १४ । इति सूत्रयता विष्णुनापि विशिष्य मत्स्यस्य भक्ष्यतां प्रतिपाद्य केवलं वैष्णवनैवेद्ये तस्यादेयत्वमभिहितम् । रघुनन्दनभट्टाचार्य्यवर्य्यैः प्रपञ्चितमेतदेकादशीतत्त्वे—"नाभक्ष्यमिति यद्वर्णस्य यदभक्ष्यं स्वरूपतो लशुनादि, तत्तेन न देयं, न तु रात्रौ दध्याद्यपि ।

आह्निकतत्त्वे तु—

"अनिवेद्य न भोक्तव्यं मत्स्यं मांसञ्च यद्भवेत् ।
अन्नं विष्ठा पयो मूत्रं यद्विष्णोरनिवेदितम् ।"

इति मत्स्यसूक्तवचनं प्रदर्श्य "अनेन स्वयं भोज्य-मत्स्यप्रदि देयमित्युक्तं विष्णुवचनेन तु अनेवंविधं निषिद्ध"मित्युक्तम्।

अतोऽत्र तत्रभवतां सामाजिकानामवधेयम्, यत्—मनु-याज्ञवल्क्य-शङ्ख्हारीत-गोभिलप्रभृतीनां धर्म्मशास्त्रकाराणां मते मत्स्य-विशेषाणां खाद्यता एवं मेधातिथिकुल्लूकभट्ट-विज्ञानेश्वर-हेमाद्रि माधवाचार्य्यभवदेव-भट्टरघुनन्दनभट्टाचार्य्यप्रभृतिव्याख्यातॄणां मतेऽपि। एषु—विज्ञानेश्वरः हिन्दुस्थानवासी, हेमाद्रिमाधवाचार्य्यौ दाक्षिणात्यवास्तव्यौ, भवदेवभट्ट-कुल्लूकभट्ट-रघुनन्दनभट्टाचार्य्याः कुशाग्रीयधियो जन्मना वङ्गभूमिं समलञ्चक्रुः। भट्टमेधातिथिस्तु कं प्रदेशं जन्मना सगौरवं चकार, नैतदद्यत्वेऽपि विनिश्चितम्। तस्य लिपिभङ्ग्या तु प्रायेण तस्य वङ्गवास्तव्यता प्रतिभाति। मनुसंहिताया एकादशाध्यायपरिसमाप्तौ कश्चित् श्लोको दृश्यते। तस्यार्थस्त एतावन्मात्रं ज्ञायते—मनोः स्मृतिरतीव मानास्पदम्, मेधातिथेर्व्याख्यैव तस्याः समुचिता टीका।

देवशेन सा अखण्डरूपा कुत्रापि न प्राप्यते। सहारणपुत्रो राजा मदनस्तु तत इतो लिखितैर्देशान्तरादाहृतैः पुस्तकैर्भाष्यस्य जीर्णोद्धारमचीकरत्। कोऽसौ मदनः? कदा कुत्र समभवत्तदपि न ज्ञायते।

इदमपरं प्रष्टव्यम्, यदि मत्स्याः सर्व्वदेशवासिनामार्य्याणां निर्व्विशेषं भक्ष्यास्तर्हीदानीन्तना हिन्दुस्थानीया दाक्षिणात्याश्च कथं वङ्गवास्तव्यान् ब्राह्मणान् "मछलिखाता है" इत्यभिभाष्य विगर्हन्ति। न च केवलं विगर्हन्ति, अपितु मत्स्यखादकान् प्रति अतीव घृणां प्रदर्शयन्ति। पर्य्यनुयोगस्यास्योत्तरत्वेन इदं तावदुच्यते—यदपरिज्ञात-कारणतः सुदीर्घकालात् मत्स्यव्यवहाराभाव एव ईदृशाचरणस्य मूलम्। नात्र किञ्चिच्छास्त्रशासनं सम्भवति। अद्यत्वेऽपि वङ्गेषु विभिन्नप्रदेशेषु दृश्यते, यत् सत्यं शास्त्रे विशिष्टखाद्यतयोक्तमपि शिष्टैः परित्यज्यते,

परन्तु शास्त्रनिषिद्धमपि अविशङ्कं भुज्यते। तद्यथा—गोधामांसं पवित्रतया शास्त्रेषोक्तं, वन्यवराहमांसञ्च शास्त्रतो न निषिद्धम्। परन्त्वेतदुभयमपि वङ्गेषु कुत्रापि न मानवैर्भोजिक्रियायां व्यवह्रियते। धर्म्मशास्त्रकर्त्तृभिर्भक्ष्यतया विहितं कूर्म्ममांसं पूर्व्वोत्तरवङ्गवासिनो ब्राह्मणा अभ्यवहरन्ति, किन्तु दक्षिणपश्चिमवङ्गवासिनो नैतद्-भक्षयन्ति, प्रत्युत भक्षकान् नितरां विगर्हन्ति। परन्तु कलिकाता-प्रदेशेषु क्षुद्रशम्बूको भक्ष्यतामुपगतः, शास्त्रेषु त्वेष निषिद्धः। दृश्यते चास्य भक्षणे प्रायश्चित्तव्यवस्था। तद्यथा—

"मत्स्यकण्टकशम्बूकसङ्खशुक्तिकपर्द्दकान्।
पीत्वा नवोदकञ्चैव पञ्चगव्येन शुध्यति॥"

पञ्चगव्येन तन्मात्रपानेन व्रतरूपत्वात्। तेन तत्पीत्वोपवसेत्। तदशक्तौ अष्टौ पणा देयाः (प्रायश्चित्ततत्त्वम्)

कर्क्कटकमांसमपि कूर्म्म-विगर्हिभिर्भुज्यते। परन्तु प्राक्-प्रदर्शित"शुष्कमीने"त्यादि वचनेनास्य भक्षणे चान्द्रायणमभिहितम्। किं बहुना पातित्यजनकमपि पलाण्डुलशुनममत्स्यादेरविशङ्कं भुज्यते। अत्र तु कारणं जानाति भगवान् परमशिव एव। "पलाण्डोर्द्दशजातयः" इति शास्त्रं दर्शयता माधवाचार्य्येण दशश्रेणी-विभक्तानां पलाण्डूनामभक्ष्यता प्रतिपादिता।

इदन्तावदुपसंहारे वक्तव्यम्—यदैतिहासिकग्रन्थेऽपि प्राचीनकाले मत्स्यभक्षणनिदर्शनं प्राप्यते। रामायणपाठेनैतज्ज्ञायते कबन्धो रामचन्द्रं सनिर्ब्बन्धमवोचत्—"हे राघव! त्वं पम्पासरोवर-स्थान् रोहित-चक्रतुण्ड-नलमीननामकानुत्कृष्टमत्स्यानिषुभिर्निहत्य निस्त्वक्पक्षान् अयस्तप्तान् कृत्वा भुङ्क्ष्व। एते मत्स्या अकृशा एकमात्रकण्टकाश्च। तदानीं मत्स्यस्याखाद्यत्वे राघवं प्रतीदृक् प्रलोभनं न प्रदर्शितम्। अपिच वाल्मीकेर्लेखनीतोऽपि भक्ष्यप्रकृति विशेषणसंयोजने लालानिःसरणं न समभवत्। तथाहि—

"रोहितांश्चक्रतुण्डांश्च नलमीनांश्च राघव।
पम्पायामिषुभिर्मत्स्यांस्तत्र राम वरान् हतान्॥
निस्त्वक्पक्षानयस्तप्तान् अकृशानेककण्टकान्।

(अरण्यकाण्ड। ७३ सर्ग १२।१३।)

मत्स्यानां निरतिशयमुपयोगिता याज्ञवल्क्यवचनादवगम्यते। स तु प्रतिग्रह-समर्थस्य प्रतिग्रहाकरणे फलविशेषमुपवर्ण्य कतिपय-द्रव्याणामप्रत्याख्येयत्वं जगाद। तत्र मत्स्योऽपि गणितः। यथा—

"प्रतिग्रहसमर्थोऽपि नादत्ते यः प्रतिग्रहम्।
ये लोका दानशीलानां सतानाप्नोति पुष्कलान्॥
कुशाः शाकं पयो "मत्स्याः" गन्धाः पुष्पं दधि क्षितिः।
मांसं शय्यासनं धानाः प्रत्याख्येयं न वारि च॥

(१।आ।२१३—१४)

# आथर्व्वणं प्राणतत्त्वम्।

(पूर्व्वतोऽनुवृत्तम्।)

(लेखकः—श्रीउपेन्द्रनाथसेनगुप्तः काव्यतीर्थः।)

"यत्प्राणस्तनयित्न नाभिक्रन्दत्योषधोः।
प्रचीयन्ते गर्भान् दधतेथोवह्वोर्विजायन्ते॥"

(अथर्व्ववेदः ११।२।६।२)।

अस्यार्थः, यथा—"यदा गोषु गर्भमादधिषुः वृषभ इव सूर्य्यः मेधमुखेन शब्दायमानः ओषधोवर्गं प्रत्यभिगच्छति, तदा तच्छब्दश्रवण-

मात्रेणैव ओषध्यस्ताः गर्भं गृह्णन्ति। न किल कदाचिदपि मध्याह्नायमानः सूर्य्यः मेघमुखे धावति, यत्तु तावद्धावति, तत्तु विद्युदात्मकं तेज एव। अत उपनिषदि यः प्राणः स विद्युदात्मकः एव, अत्र सन्देहलेशोऽपि न कर्त्तव्यः। अत्र छान्दोग्यश्रुतिगतानाम् "अथ हैनमावसथीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते, सोऽहमस्मि स एवाहमस्मीति" इत्यादीनां वाक्यानां तथा अथर्व्वशिर उपनिषद्गतानाम् "अथ कस्मादुच्यते वैद्युतं यस्मादुच्चार्य्यमाण एव व्यक्ते महति तमसि द्योतयति तस्मादुच्यते वैद्युतम्" इत्यादीनां वाक्यानामर्थजातं द्रष्टव्यम्। अत्रेदं वक्तव्यमेव, यत् प्राणशब्देन सूर्य्यादीन् निर्द्दिशयन्तः ऋषयः न कञ्चन प्रमादं कृतवन्तः, यतोऽयमाकाशः तावत् महदेकं वैद्युतं क्षेत्रं ( Magnetic field ) सूर्य्यश्च विद्युच्छक्तेः महानाधारः केन्द्रश्च, (Centre of electric currents pervading the solar system and also a preservatory of the same. ) यत्किञ्चिदस्माकं वक्तव्यमस्तदुक्तमेव, परमधुना श्रुतिभिरस्य मतस्य सङ्गतिं दर्शयित्वा विरम्यतेऽस्माभिः प्रसङ्गात्। तथाच "स मिथुनमुत्पादयते रयिञ्च प्राणञ्चेति, एतौ मे बहुधा प्रजाः करिष्यते इति आदित्योह वै प्राणो रयिरेव चन्द्रमा रयिर्वा एतत् सर्व्वं, यन्मूर्त्तञ्चामूर्त्तञ्च तस्मान्मूर्त्तिरेव रयिः॥" ( प्रश्नोपनिषत्—१।४—५)। अथ कथं मिथुनं परस्परं संसर्गधर्म्मवत्त्वात्,—यदेव आदित्यः स एव रयिः ( चन्द्रमा इति शङ्करः )। एतत्सर्व्वमित्याद्युक्तेः। केवलं क्रियाभेदवशादुपाधिद्वयी, अत एव शङ्करस्तु "एकं तु मिथुनं, गुणप्रधानकृतो भेदः" इति भाष्ये उक्तवान्। ननु यदयस्कान्तादीनां शक्तिः सापि विद्युन्मूला एव। तस्यास्तु शक्तेर्द्वैविध्यं परिलक्ष्यते प्रवर्त्तिका विनिवर्त्तिका च (Positive and negative forces)। तत्र प्रवर्त्तकः रयि विनिवर्त्तकश्च आदित्यनामा प्राणः। स्त्रीपुंसोरपि एषा शक्तिद्वयी यथाक्रममवस्थिता, अपि चाभ्यामेव जगद्व्याप्तं सर्व्वथा

उत्पत्तिप्रभृतीनाञ्च एते एव कारणं विशेषतः प्रवर्त्तिका रयिशक्तिः तस्याः मूर्त्तत्वात्। अत एव रव्यादित्ययोरुत्पादनद्वारेण "एतौ मे बहुधा प्रजाः करिष्यते" इतीयमाशा सर्व्वथा युक्तैव। "संवत्सरो वै प्रजापतिः तस्यायने दक्षिणञ्चोत्तरञ्च" इत्यादिषु संवत्सरः कालरूपः, अथवा सम्यक्प्रकारेण वत्सान् राति ददाति प्रजा उत्पादयति इति संवत्सरः प्रजापतेः विशेषणम्, तस्य द्वे अयने गती इत्यर्थः। एका तत्र उत्तरदेशसंयोगानुकूला, अपरा च दक्षिणदेशसंयोगानुकूला (forward and backward motions) तेन ये योगेन उत्तरगतिं प्रपद्यन्ते, ते देवयानमेव प्राप्नुवन्ति, न पुनः संसारेऽस्मिन्निवर्त्तन्ते, अथ ये दक्षिणामुपासते ते प्रजादिकमुत्पाद्य संसारे एव पुनर्निवर्त्तन्ते तेषामेव पितृयाणो भवतीत्यर्थः। अत एव दक्षिणगतिमुपासीनानां "त एव पुनरावर्त्तन्ते" उत्तरगतिमुपासीनानान्तु "एतस्मान्न पुनरावर्त्तन्ते इत्येष निरोधः" इति श्रुतिद्वयी सङ्गच्छते। "पञ्चपादं पितरं द्वादशाकृतिं, दिव आहुः परे अर्द्धे पुरीषिणम्। अथेमे अन्य उ परे विचक्षणं, सप्तचक्रे षडर आहुरर्पितमिति॥" अस्यार्थः, यथा—ये सूक्ष्मदृष्टयः ते प्राणमिमं पञ्चपादपितृरूपेण जानन्ति। मासर्त्तुप्रभृतीनां पितृत्वमर्थात् जगज्जनयितृत्वं न सङ्गच्छते। तत् किमिदं पञ्चपादमित्यादि, सत्यं—"पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्। अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्॥" एते सप्तदश एवं पञ्चपादमित्यादीनामर्थः पञ्चभिः द्वादशानां योगे सप्तदशसंख्या एव जायते। अपि चैषां सप्तदशानां जगज्जनयितृत्वं सर्व्वैरेव स्वीक्रियते। ननु कथं विद्युदात्मा प्राणः इन्द्रियादिकमपि भवितुमर्हति। भवत्येव श्रुतिसमर्थनात्, तथाच श्रुतिः—"स प्राणन्नेव प्राणो नाम भवति, वदन् वाक्, पश्यन् चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मनः" इति एक एव प्राणः सर्व्वेषामिन्द्रियादीनां परिचालकरूपेण विभिन्नोपाधिभाग्भवति "सोऽभिमानादूर्द्ध्वमुत्क्रामत इव, तस्मिन्नुत्क्रामत्यथेतरे सर्व्व एवोत्

क्रामन्ते" इत्यादि श्रुत्वा प्राणस्य सर्व्वपरिचालकत्वं स्वीकृतम् । तथाच दृश्यते विद्युदभिहतः अचिरादेव यथा म्रियते, न तथा अन्येन केनापि क्रमेण अपिचाधुनिकैः चिकित्साशास्त्रविशारदैः दैहिकविद्युतः रचणसमतासंस्थापनद्वारेण व्याधयः दूरीक्रियन्ते, सर्व्वेन्द्रियविकाराश्च । एतत्सर्व्वं प्रत्यक्षसिद्धम्, अत एवान्यविधकल्पनस्यात्रावसरो नास्त्येव । ततश्च "दिव आहुः परे अर्द्धे पुरीषिणम्" अर्थात् सूक्ष्मदृष्टयः ऋषयः तं प्राणं दिवः अन्तरीक्षस्य परे ऊर्द्धे अर्द्धे अंशे पुरीषिणम् उदकादिवन्तं मेघरूपिणमाहुः । मेघेन विद्युतः सम्बन्धः प्राक्प्रतिपादित एव, अथ इमे अन्ये इत्यादिकथनात् तृतीयपादे स्थूलदृष्टयः कालविदः कथिताः । ते कालविदः प्राणमिमं सप्तचक्रे सप्तरश्मिघटिते चक्रे षड़रे ग्रीष्मादिषड्ऋतुनिर्म्मिते चक्रे अर्पितमाहुरिति शङ्कराविरोधेन सर्व्वं यथावदिति ज्ञेयम् ।" अहोरात्रो वै प्रजापतिः तस्याहरेव प्राणो रात्रिरेव रयिः" इत्यादिश्रुतौ अहनि द्योतमाने विद्युत्केन्द्रे सूर्य्ये विनिवर्त्तिकाया एव विद्युतः प्रभावः सर्व्वमतिवर्त्तते, रात्रौ तु तद्विपरीतं सर्व्वमर्थात् प्रवर्त्तिकाया एव विद्युतः प्रभावः सर्व्वमन्यदतिशेते इत्युक्तम् । "देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा । ऋषीणां चरितं सत्यमथर्व्वाङ्गिरसामपि ॥" अत्र भगवता शङ्करेण त्वं देवानामिन्द्रादीनां वह्नितमः (जातवेदाः देवेभ्यः हव्यं वहतु) हविषां प्रापयितृ तमः भवसि इत्यादिकं व्याख्यातम् । परं केनोपायेन प्राणः देवेभ्यः हविषः सारं पितृभ्यश्च स्वधया दत्तमन्नं वहति तन्नोक्तम् । अधुना सर्व्व एव विद्युदात्मनः प्राणस्य विश्वव्यापित्वं जानन्ति । अपिच यथा स तन्त्री द्वारेण विनापि तन्त्रीं वार्त्तादिकं सर्व्वत्र जगतः वहति, तदपि सर्व्वेषां ज्ञातमेव । इमे देवाः पितरश्च विद्युद्व्याप्तस्य विश्वस्य कस्मिन्नपि देश एव तिष्ठन्ति, तत्र विद्युत्साहचर्य्यव्यतिरेकेण मानवाः न किम किञ्चिदपि तेभ्यः प्रापयितुमीश्वराः, अपितु विद्युदात्मा प्राण

एव सर्व्वं तेभ्यः वहति इत्येवास्यार्थः एवं मन्यामहे वयम्। अथ कुतोऽयं प्राणः आगच्छति? उपनिषद्भुते "आत्मन एष प्राण जायते यथैषा पुरुषेच्छाया एतस्मिन्नेतदाततं मनोधिकृतेनाय-त्यस्मिञ्छरीरे॥" विनात्मानं न कश्चिदस्य उत्पादको वर्त्तते, तस्मिन् तु अयं पुरुषेषु छाया इव। अनेन प्राणस्यानित्यत्वं कथितं स्यात्। विश्वव्यापिनि आलोके यथा छायागन्धोऽपि नास्ति, तद्वत् परमात्मनि ब्रह्मणि अपि प्राणस्य विद्युदात्मनः सम्पर्कलवोऽपि नास्ति। केवलं व्यष्टिस्वरूपे जीवात्मनि एवास्य सम्बन्धः प्रदीपेषु छायावदिति। अपिच तेजोरूपोऽपि अयं आत्मनश्छाया इव, तेन तु परमात्मनः परमज्योतिःस्वरूपत्वमभ्युपगम्यते, "तस्य भासा सर्व्व-मिदं विभाति" इत्यादिवाक्यस्य स्पष्टं स्यात्। एवं सर्व्वत्रैव वेदे-ष्पनिषत्स्वपि बोद्धव्यम्। अस्माकं वक्तव्यं शेषतामागतम्। अस्मदादिकृतौ सर्व्वथा प्रमादस्य सम्भवः, अत एव सुधिय एव सत्यतामस्य निर्द्धारयन्तु। अधुनाथर्व्ववेदस्य विज्ञानगर्भत्वं प्रायः सर्व्वैरेवाङ्गीक्रियते। अथर्व्ववेदपाठात् उपनिषदां दर्शनाच्च यदस्माकं मनसि प्रतिभातं, तदेवात्र निबन्धे निबद्धम्। परं ये तावत् शङ्कर-मतप्रतिवादासहिष्णवः तेभ्यः एतन्मे निवेदनं, यन्मया शङ्करमतं न दूषितम्। तन्नाम्नेऽपि प्राण जड़ एव, मन्मतेऽपि तु स तथैव। केवलं शङ्करः प्राणः विद्युदिति न कथितवान्, मया तु तदेव कथितम्। अपिच तथाविधानां महात्मनां प्रमादाविष्कारे अस्माकं का शक्तिः? चेदधुना प्रबन्धोऽयं शिक्षितानां सामाजिकानां मनोयोगं समाकर्षति, तदैव सफलप्रयत्ना वयमिति मन्यामहे। अधुना प्राणस्तुतिपूर्व्वक-मेव प्रबन्धः समाप्तिं नीयते। तथाच महाभारते—

"भूतं भव्यं भविष्यच्च सर्व्वं प्राणे प्रतिष्ठितम्।
श्रेष्ठं तदेव भूतानां ब्रह्मयोनिमुपास्महे॥"

( महाभारत वनपर्व्व २१२।४ )

अपिचोपनिषदि—

"या ते तनुर्वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि ।
या च मनसि संतता शिवां तां कुरुमोत्क्रमीः ॥"

( प्रश्न २।१२ )

अथर्ववेदे च—

"प्राणाय नमो यस्य सर्व्वमिदं वशे ।
यो भूतः सर्व्वेश्वरो यस्मिन् सर्व्वं प्रतिष्ठितम् ॥"

( एकादशकाण्ड २य अनुवाकः )

ॐ शान्तिः शान्तिः शान्तिः ।

## चन्द्रालोके

### प्रथमोऽङ्कः ।

( लेखकः—श्री धूर्जटिप्रसादकाव्यतीर्थः । )

परमार्थतस्तु एवं मन्ये यत् किल—

वीर्य्यं यस्य वशंगता वसुमती संवक्ति तस्य स्तुतिं
कीर्त्तिश्चापि पदानताधिपशिरस्तीर्थाश्रिता राजते ।
साधुः सच्चरितो जितेन्द्रियचयः सज्ज्ञानवार्यांनिधि-
रादर्शः कृतिमान् सुरप्रतिनिधिर्मान्यः स धन्यः सुधीः ॥

विदू । वअस्स ! प्पणओ सन्देहं करेदित्ति मन्तावित्र कहं मिच्छाविवच्छादो सहदि भअं; अधवा किं दे सङ्काकारणं; एदं दण्डकट्ठं उत्तोलिअ विदूं पविट्ठं, वा अथं वाम्मि दण्डादण्डि काटुम मारिस्सं अथं ज्जेव मरिस्सं वा ( उत्तिष्ठति । )

राजा। एतादृशी धीरता शोभते भवादृशस्य महाजनस्य; तदिदमासनमास्यताम्। अथ यत् पृच्छामि तस्मिन्नवहितो भव।

विदू। अवहिदोह्मि। ( स्वगतम् ) महाराओ मं धीरं मन्तेदि विस्सं अ।

राजा। अपिनाम सा मनोरथप्रिया किं नु मे भविता।

विदू। ( स्वगतम् ) एसा उव्वसी; णावरा इत्थिआ (प्रकाशम्) सच्चं।

राजा। कथमनुमितं भवता।

विदू। जदो भवं राआ तरुणो अ।

राजा। वयस्य!

मत्सौधमध्यसरसीतलमण्डनं यत्
किं वीक्षते वद सरोजमनन्तशोभम्।
नो संस्तवं न च धनं न वयो न रूपम्
अन्योऽन्यमाकलयति प्रियसङ्गमेषु॥

तन्निपुणमवगच्छ, सा मदनुरक्ता न वेति।

विदू। महाराओ जं कामेदि सा दाणीं वि जइ देव भूमिं कामेदित्ति हदा देअभूमी; ता महाराअ! अज्ज ज्जेव सा मए परीक्खिदव्वा।

राजा। अथवा कथमाशङ्कामहे; किन्नाम सुन्दराकृतिः कलुषतां व्रजति, यतः सुष्ठु खल्विदमुक्तं कस्यापि "आकृतिर्गुण-प्रकाशिनीति। तथाहि यस्याः—

जातं विष्णुपदाम्बुजे, सुरगृहे वासः, सुधा भोजने,
क्रीड़ा नन्दन-मञ्जरी-परिमलस्निग्धे लतामण्डपे।
स्नानं स्वर्गनदीजले, विचरणं कल्पद्रुमानातपे,
सङ्गः पुण्यमहाव्रतामरवधूलीला-विहारे सदा॥

विदू। ण क्खु, ण क्खु, महाराअ! मच्छरपराअणा अहिमाण-

प्पउरा ण त्ति सव्वं देअभूमो, जदो तहिं उण ताअब्ब, देइणो अमरावदीए विहरन्ति, सुहं खळन्ति, मलअजगन्धं सेअन्ति, उव्वसी रम्भा तिलोत्तमात्ति भविअ सव्वं जीअलोअं मोहअन्ति अहिमाणं अ पोसेन्ति हिअये ; ता महाराअ ! कामुओ विअ सच्चं ज्जेव प्पाणं विभाविअ किं दे फलं हुविस्सदि, ता एदं दुक्खअरं परिहरिअ मज्झावसं गच्छेहि ।

राजा । वयस्य ! नान्यथा मन्तव्यं, यतः—

> सा लज्जा मम दर्शनेन सुरतात् कम्पः स मत्स्पर्शनात्,
> आनन्दाश्रु तदेव मादकतया हर्षेण रोमोद्गमः ।
> श्वासो भावतरङ्गविभ्रमरसाद्दीर्घः, सरागोज्ज्वलं
> जाड्यं सत्त्वगुणेन तन्मयि तथाप्याशङ्कनीया कथम् ॥

विदू । वअस्स ! जइ एव्वं ता जेदु भवं ; रक्खां देवदाणं अ असुराअं बहुं आणादु दरिद्दो ब्बह्मणो, अदो ण मे सङ्का किअब्ब, उण वि एव्वं चिन्तेमि भवं माणवो सा क्खु देवदा, अदो कहं णाम देअमाणवाणं प्पणआ चिट्ठिस्सदि ।

राजा । वयस्य ! पुरा किल चन्द्रवंशोद्भवः पुरूरवा उर्व्वशीं कामयमानो देवताप्रसादादाजन्म तया सह भोगं भुक्त्वा सुरलोकमारूढः, महाराजशान्तनुरपि जाह्नव्या सह सुचिरं भोगं यथाकाममभुङ्क्त, एवमन्येऽपि राजर्षयः स्वर्गनारीभिः सह कामानुपभुज्य स्वर्गं गताः ।

। ( विस्मृत्य सशिरःकम्पम् ) हुं हुं । मा ; वअस्स ! ता अहं दसकट्ठसरिसेण हत्थेण आसिसं देमि क्खेमं दे होदु त्ति ।

राजा । सर्व्वथानुगृहीतोऽस्मि ।

विदू । अध पुच्छम्हि सा क्खु कहं तव हत्थगदा आसी ।

राजा । वयस्य ! श्रुतपूर्व्वमपि कथं पुनरपि पृच्छसि माम् ।

विदू। वअस्स! पाअसं एक्कं चुलुअं चुसिअ किं तिप्पदि अप्पो।

राजा। (सस्मितम्) श्रूयताम्; पुरा किलाहं मृगयायै बहु-सैन्यपरिवारः सन् भीषणश्वापदकुलसङ्कुलं वनमगाहिषि, तत्र कुत्रचित् हरिणान्, वराहान्, सिंहव्याघ्रमातङ्गांश्च खरशरप्रतनिकर-निहत्य गगनतलमध्यवर्त्तिनि सति पद्मिनीप्राणनाथे दिनकरे तृषार्त्तो विश्रामार्थमेकस्मिन् वटवृक्षतले क्षणं न्यषीदम्। तदैव कोऽपि शबरः ससम्भ्रममागम्यावदत् कापि सर्व्वसुलक्षणा घोटकी समन्ता-द्रुच्चैःश्रवा इव वने वने पर्य्यटतीत्याकर्ण्य तल्लोभहृतमनास्तामन्व-सरम्।

विदू। तदो तदो।

राजा। ततश्च सा मामवलोक्य जवाद्धावितुमारब्धा वनान्तरम्; क्रमेण च—

लोकालोकमहीध्रशृङ्गशरणे सूर्य्ये दिवानायके
दुःखेनेव निमीलिताक्षिपटलास्वम्भोजिनीष्वञ्जसा।
भृङ्गेष्वीश्वरगीतिकां प्रतिवनं गायत्सु फुल्ले द्रुमे
प्रत्यायात्सु खगेषु नीड़तरुषु स्वैरं प्रवात्याशुगे॥

समन्ताच्चान्धकारराशिर्गगनतलादिवावतीर्णो धराधरविवरा-दिवाविर्भूतः काननादिव बहिर्गतः बन्धुरामपि वसुधामिमामाच्छाद्य समतलीकृतवान्। अथ निपुणमन्विष्यतोऽपि सा कुतोऽपि विलीना साश्चर्य्यं ससम्भ्रमञ्च निरूपयन् कामपि चन्द्रमण्डलादिव प्रच्युतां चन्द्रश्रियं सुन्दरीं दृष्टवान्। तथाहि—

या यामिनी-मणिशिखा कुसुमाकरश्रीः
कान्ता वसन्तसुषमा त्रिदिवेशशोभा।
नीलाम्बरोदितनिशाकरचारुकान्ति-
र्मेघाङ्कशोभिचपलाद्युतिरप्रमेया॥

विदू। लोभणिज्जं क्खु एदं मारिसाणं किं उण रम्मां।

राजा। ततः सा मदवलोकनादेव लज्जावनतपूर्व्वकाया सलज्जेव ससम्भ्रमेव भीतभीतेव पुरोवर्त्तिनि पादपस्कन्धे स्वशरीर-मुपाधाय चरणाङ्गुष्ठभागेन भूमिमालिखन्ती स्थिता।

विदू। अह्मो! जिदं महाराएण।

राजा। (साग्रहं) कथं पुनर्वयस्य।

विदू। जदो सा अणङ्गभावं आवस्सा।

राजा। (विहस्य) निपुणमभिहितम्।

विदू। तदो तदो।

राजा। ततस्तामहमपि तां तथाविधाकारामवलोक्य विस्मय-विस्फारितनयनो मन्मथशरशतताड़ितो भावतरङ्गोच्छलितहृदयः कथं कथमपि आत्मनैवात्मानं निगृह्य गद्गदवचनपरम्परयावदम्—"कासि देवि! किमर्थमत्रारण्ये निर्विशङ्कं पर्य्यटसि, पर्य्यटन्त्यास्तव कियन्ति दिनानि वा व्यतीतानि" इत्याकर्ण्य सा स्ववृत्तान्तं वक्तुमुपचक्रमे।

विदू। किं किं।

राजा। अवधत्ताम् तावत् अहमस्मि नारायणोरुतलसम्भवो-र्व्वशीतिनामाप्सराः।

विदू। वयस्स! धूमन्धकारिदमहाणसादो प्पसुदा सपावस्स मिच्छावड्ढिमा विअ कद्दमादो कमलं विअ किट्ट घेनुत्थनादो सुधाधवलं दुद्धं विअ सा ह्रुविस्सदि।

राजा। वयस्य! यथा मन्यसे तत्तथैव, वयमिव बहवो अनारूढामभिलषन्तस्तपस्यन्ति।

विदू। हुं तदो तदो।

राजा। अथ कदापि ब्रह्मध्यानासिकामनया सहस्रवार्षिक-तपश्चरणखिन्नेन्द्रियग्रामो भगवान् महामुनिर्दुर्व्वासाः स्वर्गभोग-मुपभोक्तुममरावतीमागत्य देवराजाय प्रार्थयामास।

विदू। वअस्स ! वुड्ढो दुव्वासा वि एरिसो जादो त्ति अच्चरिमं क्खु एदं। तदो तदो।

राजा। अथ तदनुमत्या देवराजेनामन्त्रिता त्रिदशतापसमण्डल-मण्डितं सुधर्म्मसभामण्डपे नर्त्तितुमागता सती, सभामध्यवर्त्तिनं जटावल्कलधारिणं महर्षिमवलोक्य दिष्टदोषात् गर्व्वेण स्मित-वदनासम्। स महर्षिः प्रणिधानावगतवृत्तान्तः क्रोधाध्मातनयनः सन् मामिदमभिशेपे। यत् किल—

> सौन्दर्य्यगर्व्वेण यथा द्विजं माम्
> उन्मार्गवृत्त्या प्रविलोक्य मूढ़े।
> क्रूराननना, तेन नरोपभोग्या
> वने वने सञ्चर घोटकी त्वम्॥

ततो दुःखिता सती सखीसमेता तच्चरणतले तत्रैव पतिताभवम्। अथ देवराजेनानुनीतो महर्षिः कृपया 'नारी निशायां वड़वाऽहनि स्याः' इत्युक्त्वाऽष्टवज्रमिलनमेव मच्छापावसानमित्यवधिं कृत्वा प्रस्थितः। अथाहमपि घोटकी भूत्वा वने वने निःसहाया भ्रमामि।

विदू। आं; अद्भुदो साववुत्तन्तो ; तदो तदो।

राजा। ततः कदापि देवताप्रणोदितः स महर्षिर्हतभागधेयां मामवलोक्य भवदाश्रयसौभाग्यलाभायादिदेश। तद्दिनावधि प्रति-क्षणमहं भवदागमनं प्रतीक्षे। अद्य तु श्रीमद्देवपादसरोजदर्शनेन धन्यास्मि, किन्तु मदाश्रयदातुर्विपदवश्यम्भाविनी।

विदू। वअस्स ! किसु क्खु इमादो समभादो घोड़परोओ संवुत्तो।

राजा। (सस्मितम्) इत्याकर्ण्य तामवदम् 'सुन्दरि ! यदि दृष्टिप्रसादः क्रियते, तदायं दासजनः कृतार्थम्मन्यः सुखीभवतीत्याकर्ण्य सा कटाक्षविक्षेपेण मामवलोक्य मूर्च्छितेवाभवत्। अहमपि

विवशेन्द्रियस्तामङ्के कृत्वा शीतलोपचारैर्मूर्च्छामपनीय निजराज्यमानीतवान् ।

विदू । वअस्स ! अणुराओ दाणीं सिहरं आरूढ़ो, जदो पढ़मं एफंसो तदो अङ्के ट्ठावणं संवाहणं निसाजावणं अ । अदो का दे भावणा अज्ज ज्जेव मणोरहो फलिस्सदि ।

( नेपथ्ये ) हला इदो इदो ।

विदू । ( साकूतम् ) वअस्स ! का उण इदो इदोत्ति आलवंती इध आअच्छदि ।

राजा । वयस्य ! इयमेव सा ।

कुमुदकुसुमहासा पूर्णचन्द्रप्रकाशा
मदनतरलदृष्टिर्भावशुद्धातिमुग्धा ।
इयमतिसुकुमारी विष्णुपादप्रसूता
चलकनकलतेव स्वैरमायाति बाला ॥

प्रतिहारी । ( प्रविश्य ) देअ ! ससहीअणा कावि इत्थिआ इध भअन्दं उवगच्छदि, इच्छदि अ देवं दंसिदुम् ।

विदू । ( सभयम् ) अवि णाम देअं दंसिदुं कावि लच्छसी आअच्छदि ।

राजा । वयस्य ! मा ते भयमस्तु । इयं हि सा मे मनोरथप्रिया, द्रष्टुमागच्छति न पुनर्द्रष्टुमिति । ( प्रतिहारीमवलोक्य ) गच्छ, प्रवेशयेनाम् । अथ त्वमपि स्वकार्य्यमनुतिष्ठ ।

प्रति । जं आणवेदि भट्टा ( प्रणमय प्रस्थिता ) ।

विदू । हन्त जीविदोम्हि ।

( नेपथ्ये । ) हला आआसदलरङ्गसोहाअरो णड़ो विअ ससहरो सोहदि इदो, तदो अ मन्दमलअपवणान्दोलिदलदाकुसुमगन्धो सञ्चरदि, सुमरेसि किं तं ज्जेव सम्मसोहग्गं ।

( नेपथ्ये । ) सहि ! सव्वं सुमरेमि, तदोवि रमणिज्जं इदो

महाराअस्स चन्दणवणसरिसं एदं उज्जाणं विसेसदो रमणिज्जदमो एसो महाराओ ता एहि ; इध पमदवणेक्कदेसे अप्पाणं विणोदेम्ह।
( नेपथ्ये । ) जं दे रोअदि।

राजा। वयस्य ! हत: खलु महर्षिर्दुर्व्वासा य एवंविधामप्याकृतिं दुस्तरे दु:खार्णवे निक्षेपितवान्।

विदू। वअस्स ! सो णाम महेसो ण हदो जिदो अ, जदो दुल्लहप्पणेण सव्वं अअन्दं सङ्कमेदि।

राजा। वयस्य ! सुष्ठुक्तं भवता ; सास्मदृर्लभेति ( दृष्ट्वा ) तथाहि पश्य पश्य—

किं नेत्रे न हि खञ्जनौ किमु कुचौ द्वीपौ समप्रोन्नतौ
किं बाहू न धृताम्बुजाम्बुजलते किं गोर्न चाले: कलम्।
किं नाभिर्न गभीरता हि पयसो नृत्यं किमूर्म्मिर्न हि
सा मे भाति पिपासितस्य तटिनीलावण्यधारामयी॥

विदू। वअस्स ! पणओ किं ण मन्तेदि।

राजा। वयस्य ! गुणपक्षपातिता मामेवं प्रणोदयति, न पुन: प्रणयान्धता, तदिच्छामि लतागुल्मान्तरितश्चिरवाञ्छितामेनामवलोकयितुमिति। ( तथा स्थित: )।

विदू। का गइ। ( तथा स्थित: )।

( तत: प्रविशति सह सहचर्य्या उर्व्वशी। )

उर्व्वशी। ( इतस्ततो दृष्ट्वा दीर्घं नि:श्वस्य च ) हला कहिं तं लदामण्डवं सिलापट्टिअं वा।

सखी। एदु एदु भोदि ! ( उभे नाट्येन प्रवेशं रूपयत:। ) इध ज्जेव सिलावट्टिआए उवविसदु भोदि। ( स्वगतम् ) जधा क्खु एसा महाराए अणुरत्ता ण होदि त्ति महादेइए अहं णिउत्ता, किन्तु किं करेमि इअं वि तं वइ वज्झभावा सो वि णं वइ विपुणं वज्झभावो त्ति पेक्खह्मि ता होदु जधासत्ति जदेमि।

उर्व्वशी। हला कहिं एत्थ महाराओ। ( दीर्घं निःश्वसिति। )

सखी। सहि! तुवत्तो विणा इध महाराअस्स च्छाअं वि ण पेक्खम्हि; किं ण आणासि राआणुरागो सरदब्भचञ्चलत्तणाहओ विअ खणेण पञ्चासेदि विलोअदि अ।

उर्व्वशी। ( विचिन्त्य निःश्वस्य च ) हा हदविधे! एव्वं मत्थए तुलिअ कहं खणे खणे पादाले णिक्खिवेसि।

सखी। हला! पुहिवीए एव्वं दे भावंतरं कहं जादं, जदो देअभोअसुहिदावि तुमं कहं माणवं पेक्खिअ पणअकादरासि? हद्धी हद्धी एव्वं सुणिअ किं कधइस्सदि देअगणो अक्कुराओ अ?

उर्व्वशी। माहविए! किं कधेमि कहं एअ होमित्ति, णिउणं चिंतअंती वि ण अप्पाणं धारेदुं सक्कणोमि।

सखी। हला लज्जिदाम्हि एदेहिं अक्खरेहिं, देअभोग्गा माणवमित्तदुल्लहा क्खु तुमं माणवं कामेसित्ति।

उर्व्वशी। माहविए! जह दुव्वाससा माविणा मे तिदिअदुआरं अवरुज्भं, तहज्जेव मे देअसमागमासा मूलोक्खिण्णा, जइ वि अट्टवज्जमिलणं मे सावावसाणकारणं, तहवि दुक्करं णाम, तं ज्जेव महाप्पलए होदित्ति सुणिदं; ता किं दाणीं चिन्तिदेण, सो ज्जेव मे अस्सअदाता प्पिओ।

विदू। सुणु वअस्स! सुणु।

राजा। मधुनिष्यन्दिनी मनोहरा च वचनपरम्परा।

माधविका। (स्वगतम्) अम्मो दिढ़णिवज्झं किल पणअबन्धणं। ता किं करेमि, होदु; उण वि पुच्छम्हि, जइ कहं वि णिवुत्ता होदि। ( प्रकाशं ) हला! एदं सव्वं तुह भइं अ कधेमि, जं णाम विदिदवुत्तन्ता महादेइ पादालकारागारे वन्धिस्सदि, ता ओसल ओसल दाणीं।

उर्व्वशी। सहि! णत्थु को मे दोसो।

माधविआ। हला! जदो तुए से पेङ्कमअआगदं धणं चोरिदं; अदो जइ अत्तणो मङ्गलं इच्छेसि, तहिं तुरिअं मोसल।

उर्व्वशी। ( स्वगतम् ) को णु उवाओ, हद्धी हद्धी किं करेमि हाअत्थ मन्दभाआ अहं भुअङ्गफणाच्छाअं णिदाहे उवट्ठिदा ( रोदिति )।

राजा। किं वा कथयति प्रिया ?

विदू। वअस्स! किं पेक्खिदेण; अच्छिअलं ज्जेव से उत्तरं देदि।

राजा। वयस्य! पश्य पश्य। तथाहि—

आरक्तं मुखविम्बमक्षिपटलं वाष्पायितं व्याकुलं
गण्डौ स्वेदकणाङ्कितौ स्तनयुगं प्रोत्कम्पमानं मुहुः।
दीर्घश्वासविकारमस्ततलघू नासा वपुर्विह्वलं
मद्दत्तप्रणया हि दीव्यति पुरो भीतापि सा केवलम् ॥

विदू। वअस्स! उण वि एव्वं विभावेमि, एसा क्खु माहविआ उव्वसीप्पणअभङ्गत्थं महादेइए णिउत्ता।

राजा। सत्यमिदं; तद्वयस्य! वधानेनाम्।

विदू। अणुगहीदोह्मि वयस्य। भवं वि उव्वसीं आसासेदु।

( ततो राजा विदूषकश्च परिक्रामतः। )

विदू। मोत्थि भोदीए; अअं क्खु महाराओ सअं ज्जेव तुह अवाहिदं पेक्खिअ उवट्ठिदो पेक्ख पेक्ख णं।

राजा। ( उपसृत्य ) आः कासौ हतभागधेया येनां व्यथयन्ती मृत्युं कामयते।

विदू। ( धृत्वा ) माहविए! महादेइं का उण दानीं संवादइस्सदि।

राजा। (उपगम्य चिबुकं धृत्वा सादरम्) प्रियतमे! कमलायत-लोचने!

यस्या भिया त्वमधुना विमनोऽभवता, सा
जाता स्वयं दिनकरस्य तमोव दोषैः ।
उत्तिष्ठ पश्य चरणानतकिङ्करं माम्
आज्ञापय प्रियमहं करवाणि किन्ते ॥

उर्व्वशी । अज्ज ! जं णाम अब्भाहिदकारणं आसी, भअदागमणेण सव्वं तिरोहिदं ।

विदू । सोत्थि भोदोए ( विकृताकार आशिषं यच्छति ) ।

उर्व्वशी । अज्ज ! प्पणमामि ( प्रणमति ) ।

विदू । इदो सिलादलं उवविसिअ परिस्समं अवणेदु महाराओ ।

राजा । प्रिये ! इदमासनमलङ्क्रियताम् ।

उर्व्वशी । ( सलज्जमुपविशति ) ।

राजा । कः कोऽत्र भोः ।

प्रतिहारी । ( प्रविश्य ) किं आणवेदि भट्टा ।

राजा । एनामादाय मस्तकं मुण्डयित्वावरोधप्राङ्गनेषु त्यज ।

प्रतिहारी । जं आणवेदि भट्टा ( प्रणम्य माधविकामादाय प्रस्थिता ) ।

उर्व्वशी । मरिसेहि अज्ज ! माहविआए अवराहं ।

राजा । कथमिव ।

उर्व्वशी । अणेण क्खु महादेइ अवमाणिदा हुविस्सदि ।

राजा । ततः किम् ।

उर्व्वशी । तदो तेण परप्परं इच्छाविरोहो ; ता णिवुत्तेहि अज्ज ।

राजा । वयस्य ! सत्वरमुपगम्य प्रियावचना-न्निवारय प्रतिहारीम् ।

विदू । जं भवं आणवेदि ( अपवार्य्य ) चदुराए एदाए एदाणं दुवाणं ज्जेव सम्माणो रक्खिदो ( प्रस्थितः ) ।

राजा। ( स्पर्शसुखमभिनीय ) प्रिये ! किमेतत् !!!

तृष्णार्त्तस्य तुषारशीतलजलं मन्दानिलो धर्म्मिणाम्
उद्विग्नस्य सुहृत्समागमसुखं मुग्धस्य सत्यश्रुतिः।
हृप्तिर्भोगिजनस्य गाढ़तमसो ज्योत्स्ना क्षमा क्रोधिनां
शान्तिः शोकवतां यमस्खलधियामेकासि मे सुन्दरि॥

उर्व्वशी। पिअंवदो हि सव्वं पिअं मन्तेदि, सदो क्खो गुणो पवरस्स।

राजा। प्रिये ! मिथ्याजल्पितमेतत् यन्नाम।

ग्राहं ग्राहं सरति पवनः पुष्पगन्धं सुरम्यं
पुष्पे पुष्पे मधु च मधुपाः सञ्चरन्तः पिबन्ति।
सर्व्वत्रेमं गुणमिह विदुः कौसुमं हि प्रसिद्धं
सर्व्वे मुग्धाः पवनमधुपान् किन्तु मिथ्या स्तुवन्ति॥

विदू। ( सन्त्रस्तः प्रविश्य) अच्चाहिदं, अच्चाहिदं !! अच्चरिअं, अच्चरिअं !! दानीं पदोससमए पुव्वदिग्विभाए उण वि दिणअरो उदेदिध, गगनतलादो विअ अग्गिखण्डो णिवड़दि, सुमेरुसिहरं विअ झत्तिमत्थए पड़दि ता महाराअ। इगे पलाएमि, तुमं वि मे पच्चाणुवट्टिआए अणुसरेहि ( भयाद्वेपते )।

राजा। ( उत्थाय ) हं हो ! किमेतत् ?

जातोन्नोज्ज्वलपद्मरागखचिता किं विच्युतेन्द्रो पुरी ?
वज्रं गारिगिरिः किमेष गगने प्रोज्झितपक्षः पुनः।
विश्वध्वंसिहुताशनस्य सहसा किं भो अकालोदयो ?
अर्थप्रार्थनकृष्णशौर्य्यमधुना कीर्णं नु किं सर्व्वतः॥

( सर्व्वे सविस्मयं पश्यन्ति )।

उर्व्वशी। अज्ज ! एव्वं सम्भावेमि दिट्ठाहो हुविस्सदि।

प्रतिहारी। ( ईषत् प्रविश्य ) जअदु जअदु भट्टा; एसो कोवि त्थविरो तोरणदुवारे चिट्ठदि।

राजा। भद्रे ! परिजनकारितातिथ्यमेनं ससम्मानमिहानय।

प्रतिहारी। जं भव आणवेदि ( प्रणम्य प्रस्थिता )।

राजा। प्रिये ! किमस्यागमनकारणं ( वामाक्षिस्पन्दनं सूचयित्वा ) मां ज्ञातम् ।

उर्व्वशी। किं विअ।

राजा। प्रिये ! काप्यचिन्तितपूर्व्वा विपत्तिरुपस्थिता, यतः किल—

दिग्दाह एकतो व्योम्नि दृष्टोऽन्यत उपस्थितः।
तदा वामो विधिर्वामनेत्राकम्पेन सूचितः॥

उर्व्वशी। सर्व्वधा देवाणो सोत्थि करिस्सन्दि।

राजा। प्रिये ! एवं किल विदितमस्ति सर्व्वेषां—

शष्पाणि खादति विलेषु निशासु शेते
नाक्रामति प्रतिबलं न हिनस्ति कश्चित्।
सोऽन्यैस्तथापि हरिणः किल हन्यतेऽतो
भीतिः सदा बलवतः खलु दुर्व्वलस्य॥

उर्व्वशी। अज्ज ! कहं दे दाणीं पडिवक्खो भवे ?

राजा। यथा किल पीयूषपिपासया चन्द्रमसमेव ग्रसते राहुः।

( नेपथ्ये )। भगवन् ! हत हतः।

( नेपथ्ये )। वनवासिनो वयं राजकुलागमनं नाभिनन्दामः। यतस्तत्र—

न्यायात् कोऽपि यदि प्रमाद्यति तदा शास्तिं न नामाश्नुते
राज्ञः किङ्करतोऽपि भोः प्रतिपदं नास्तेऽत्र तुष्टिः कदा।
उत्कोचाः प्रतिवाचमत्र मुखतः सर्व्वे सदा वञ्चिताः
कारागारमतो वदन्ति सुधियो हर्म्यं त्र महद्भूभृताम्॥

( नेपथ्ये ) अथकिम्; लोकोत्तरज्ञानिनां भवादृशानां वचनमेतत्।

( ततः प्रविशति पुरोधसानुगम्यमानो वृद्धः )।

पुरोधाः। भगवन्। भवन्तमवलोक्यैव सह देव्या महाराज आसनादुत्थाय प्रतीच्छते, तदुपसर्पतु भवान् ( प्रस्थितः )।

उभौ। प्रणमतः।

वृद्धः। राजन्। सदृशमेवैतत् कुलाचारविद्याविनयशीलस्य भवतः। तथाहि यस्य—

शक्तिः शात्रवगर्व्वनाशनविधौ कीर्त्तिः प्रजारञ्जने
विद्या ब्रह्मपथे प्रजा स्थितिकृतौ चेतो दयाप्रोज्झितम्।
धीर्न्याय्येऽध्वनि नित्यशान्तिरनघा सर्व्वत्र वर्व्वर्त्ति च
दण्ड्यानां दमने भवान् सुविदितो दण्डीति राजोत्तमः॥

राजा। भगवन्! कथमत्र भवन्तमवगच्छामि।

वृद्धः। यादववृत्तिभोगी कश्चिदुद्धवनामाहमस्मि संवादवाहकः।

राजा। ( आत्मगतम् ) अहो, प्रमादः प्रणिधीनाम्; हा धिक् कष्टं किमिदमापतितं मन्दभाग्यस्य, भवत्वात्मानं गोपयामि (प्रकाशं) अहो भाग्यम्—

धन्यं मनुष्यजननं सफला तपस्या
धन्या पुरी चरणरेणुकृतार्थरथ्या।
पूर्व्वेऽपिवास पुरुषा मम नाम धन्याः
क्व द्वारकेति नगरी क्व च मामुपेतः॥

उद्धवः। राजन्! परितुष्टोऽस्मि भवतां सदाचारपरम्परया।

राजा। अथ कथमत्रागमनकारणमवैमि।

उद्धवः। राजन्! यदुकुलधुरन्धरो भगवान् वासुदेवस्त्रिभुवनरत्नं यादवाधिकृतकाननपरिसराधिगतां घोटकी-मात्मीयां कर्त्तुमिच्छति नरपतेरुग्रसेनस्य योग्यामिति तदिमामर्पय नोचेत् प्रबलचतुरङ्गबलसमन्वितस्तव समरकण्डूतिमपनेष्यति तरसा।

राजा। ( स्वगतं सामर्षं ) अहो प्रागल्भ्यमेवंवादिनः सचिवाप-

सदस्य ( विचिन्त्य ) किमस्माकं मानुषमात्रदुर्लभवीर्य्यातिरेकवशीकृतत्रिजगन्मण्डलेन वासुदेवेन सार्द्धं विरोधदुर्व्यवसितेन, हा धिक् कष्टं—

किं युद्धं करवाणि तच्च विफलं, वीरः स एको भुवां
किं तत्पादतले पतानि भयतः च्चापकोऽस्मिंश्च सा ।
अन्यं भूभृतमाश्रयाणि किमहं राजाधिराजश्च स
हा हा हन्त विचारयाणि किमहं सर्व्वत्र शून्या दिशः ॥

उद्धवः । राजन् ! कथं जोषमास्यते ; श्रूयताम्—

समरं वडवां वापि किमिच्छसि वद द्रुतम् ।
एतस्योत्तरमादाय गच्छामि द्वारकां पुरीम् ॥

राजा । ( स्वगतम् ) अपि नाम सत्यमपजानीमहे, तथा कृते विरोधोऽपि न स्यात् स्वकार्य्यसिद्धिरपि परन्तु स्यात् ।

उद्धवः । राजन् ! मिथ्यामौनभावेन सत्यमपकृत्य कथं नाम क्षत्रियकुलमाविलयसि—

यदि नृपात्मज ! युद्धमिहेच्छसि
व्रज कृपाणकरः समराङ्गनम् ।
अथ तु सन्धिमुपायनकैः समं
प्रणम यादवपादसरोरुहम् ॥

राजा । महाभाग ! जनवादेषु प्रतीतो यद्येवं कथयति भवान् समरश्च कर्त्तव्यतया मन्यते, तदा तदस्तु का गतिः

उद्धव । एवमस्तु । ( प्रस्थितः ) ।

उर्व्वशी । ( स्वगतम् ) भअवं विस्सवट्टे, इध क्खेव मं द्दावेदु ; तहिं मे आसालदा फलिस्सदि ।

राजा । प्रिये ! किं विधेयमत्र ; एकतो धनमपरतश्च मान इति ।

उर्व्वशी । सोम्म ! माणधणाः क्खु माणं क्खेव धणं मन्तावेन्ति।

राजा। साधु सुचरिते साधु ; तदेतत् प्रतिजानीमहे—

यावत् कार्म्मुकभल्लपाशविशिखप्रासोद्यताः सैनिकाः,
यावन्मुष्टिनिबद्ध खड्गलतिका द्योतिष्यते सङ्गरे।
यावद्वा धमनौ च रक्तकणिका यावद्रवीन्दू दिवि,
मानः स्थाणुरिवाचलो यदि भवेत् कोऽन्यो विजेता मम॥

( नेपथ्ये विमानचारिणः ) महाराज!

यथोचितं कृतं कार्य्यं भूयात् कीर्त्तिरविप्लुता।
शिवाय सन्तु सर्व्वाणि वर्द्धतामनया रतिः॥

उर्व्वशी। सुनाहि महाराअ! विमानचारिणो वि णाअन्हि भअदो मङ्गलगोदिअं।

राजा। हंहो देवा अपि प्रशंसन्ते संग्रामावतरणं नाम।

( आकाशमवलोक्य )

भो भो विमानचारिणः! अभीष्टफलशंसो प्रणमामि भवतः।

विदूषकः। हा अभाअ! जुजम्भं त्ति एव्वं सुणिअ कट्ठपुत्तलिआ विअ अग्गिदंसनभीदो भल्लुओ विअ जादो।

राजा। प्रिये! एहि; सचिवसेनापतिवर्गेण सह समरसज्जायै मन्त्रयामहे ( गगनमवलोक्य ) अहो मध्याकाशमारूढ़ो भगवान् निशाकरः।

अयि देव!

तप्तानां शान्तिदाता त्वमसि नियमतिर्देवभोग्यामृतस्य
ब्रह्माण्डस्याधिदेव्या मुकुटमणिरसि प्राणदाता धरायाः
शम्भोर्भालावचूड़ः सलिलनिधितलादुत्थितः सत्त्वरूप-
स्तारानाथः सुधांशुः स जयति भगवानत्रिनेत्रप्रसूतः॥

( निष्क्रान्ताः सर्व्वे )

इति प्रथमोऽङ्कः।

# दुर्गेशनन्दिनी ।

( पूर्व्वतोऽनुवृत्ता । )

## कुसुममन्तरा पाषाणः ।

तद्दिने अधिकां रजनीं यावत् आयेषा ओसमानश्च जगत्सिंह-समीपे उपविश्यन्तावास्ताम् । जगत्सिंहस्य क्वचित् चेतना क्वचिन्मूर्च्छा च समुपजायते । वैद्यो बहुक्षणः समागत्य पर्य्यवेक्ष्य प्रातिष्ठत । अविश्रमा आयेषा कुमारं शुश्रूषितुं प्रवृत्ता । यदा द्वितीयः प्रहरः, तदा काचित् परिचारिका समेत्य आयेषामकथयत्—नवाब-पत्नी त्वां स्मृतवती । "गच्छामि" ( इति ) अभिधाय आयेषा (शरीरेण) समुदस्थात् । ओसमानश्च उदतिष्ठत्, आयेषा पृच्छति स्म, "त्वमपि उत्तिष्ठसि ?" ओसमानः प्रोवाच रजनी सञ्जाता, एहि त्वां प्रापयामि । आयेषा दासगणान् अवधानेन अवस्थानाय आदिश्य मातृगृहाभिमुखं प्रातिष्ठत । पथि ओसमानः अपृच्छत्, "किमद्य त्वया नवाबपत्नीसमीपे वर्त्तिष्यते । आयेषा कथयति स्म "न हि, भूयोऽहं राजपुत्रसमीपे प्रत्यावर्त्तिष्ये । ओसमानः कथयति स्म —आयेषे ! तव गुणानां सीमान विधातुं नार्हामि । त्वमिमं परमशत्रुं यादृशं यत्नमाश्रित्य शुश्रूषसे, भगिनी भ्रातुः कृते ( अपि ) इत्थं न विदधाति । त्वमस्य प्राणदानं विधत्से ।" आयेषा भुवन-मोहनमुखेन स्मयमाना अकथयत्—"ओसमान, अहन्तु प्रकृत्या रमणी ; पीड़ितानां सेवा अस्माकं परमो धर्म्मः ; अकरणे दोषः, करणे तु प्रशंसा नास्ति ; किन्तु तव किं ? ( वक्तव्यं ) यस्तव परम-शत्रुः,—रणक्षेत्रे तव दर्पहारी प्रतिद्वन्द्वी,—स्वहस्तेन यस्य इमां दशामकार्षीः, त्वं यदनुदिनं त्वरितः सन् तस्य सेवां कारयसि, तस्य आरोग्यं संसाधयसि एतेन वस्तुतः त्वमेव प्रशंसापात्रम् ।" ओसमानः किञ्चिदप्रतिभ इवाकथयत्—"त्वमायेषे ! आत्मानमिव सर्व्वं सुन्दर-स्वभावमवलोकयसि । न हि ममाभिप्रायस्तथा साधुः, त्वं ( किं ) न

पश्यसि, जगत्सिंहे प्राणान् लब्धवति अस्माकं कियान् लाभः। राजपुत्रस्य मरणे अस्माकं किं भविष्यति।"

रणक्षेत्रे मानसिंहो जगत्सिंहात् न हि हीयते, एकस्य योद्धुः विनिमयेन अन्यः कश्चित् योद्धा समागमिष्यति। किन्तु यदि जगत्सिंहो जीवन् अस्मत्करायत्तः कारावद्धो वर्त्तेत। तर्हि मानसिंहं करे लभेमहि। स प्रियपुत्रस्य मुक्तये नियतमस्माकं मङ्गलजनकं सन्धिं विधास्यति, आकब्बरश्च एतादृगदक्षं सेनापतिं पुनर्लब्धुं सन्धिपक्षे मनोयोगी भवितुमर्हेत्। अथ यदि जगत्सिंहं अस्माकं सहायव्यवहारेण वशीकर्त्तुमर्हेम। तदा सोऽपि अस्मन्मनोमते सन्धिबन्धनपक्षे अनुरोधं यत्नं वा कर्त्तुमर्हेत्। तस्य यत्नो निनरां निष्फलो न भविष्यति। यद्येकान्ततः किञ्चित् न फलति, तर्हि जगत्सिंहस्य स्वातन्त्र्यशुल्कमिव प्रभूतं धनमपि लभेय। सम्मुखसमरे सकृद्विजयादपि अस्माकं परं प्रयोजनम् जगत्सिंहजीवितेन नूनमित्थं समालोच्य श्रोसमानेन राजपुत्रपुनर्जीवने प्रयत्नो विहितः। किन्तु अन्यत् किञ्च नापि प्रवर्त्तत। अस्त्येषा केषाञ्चित् प्रकृतिः, यदनन्तरं जनाः सानुकम्पहृदयमभिदधुरिति लज्जाभयेन कठोरतामवलम्बन्ते दानशौण्डीर्य्यं स्वीस्वभावसिद्धमिति उपहसन्तः परमुपकुर्व्वन्ति च। जिज्ञासिताय जनैरस्त्यत्र मे महत् प्रयोजनमित्यभिदधति। श्रोस्मानस्तेषामेवैक इति सुतरामेवासीदिज्ञातमायेषायाः। हसन्ती प्राह—"श्रोस्मान! सर्व्वः त्वमिव स्वार्थपरतायां दूरदर्शी भूयात्। एवमलं धर्म्मेण।"

श्रोस्मानः कञ्चित् कालं इतस्ततो विविच्य (संशय्य) अतिमृदुस्वरेण प्राह—"ममात्यन्तस्वार्थपरताया अपरमेकं प्रमाणमुपपादयामि।" सतडिद्घननिभे चक्षुषी श्रोस्मानवदने निबद्धे व्यधात्। श्रोस्मानः प्राह—"अहमाशालतामवलम्ब्य वर्त्ते, अथ कियत्कालं तन्मूले जलं सिञ्चेयम्। आयेषायाः मुखकान्तिर्गभीरा

समवर्त्तत। अस्मिन् भावान्तरेऽपि श्रोसमानस्य नूतनं सौन्दर्य्यमवालोक्य आयेषा प्राह—"श्रोसमान, भ्रातेति कृत्वा त्वया सह समुपविशामि तिष्ठामि च। अधिकारमतिवर्त्तसे चेत् तवाभिमुखं बहिर्नागमिष्यामि।" श्रोसमानस्य हर्षोत्फुल्लं वदनं मालिन्यमभजत। स प्राह—"चिरमियमेकैव कथा? विधातः! कुसुमस्यास्य हृदयमन्तरा किं त्वया पाषाणहृदयं निरमायि" श्रोसमानः आयेषां मातृगृहं यावत् अनुसृत्य विषण्णेन चेतसा निजमावासमन्दिरं प्रत्यावर्त्तत। अथ जगत्सिंहः, विषमेण ज्वरविकारेण अचेतनः शय्यामध्यशेत।

पण्डितप्रवरश्रीयुक्तदुर्गाचरण-सांख्यवेदान्ततीर्थमहोदयस्य

महामहोपाध्यायोपाधिप्राप्तिमधिकृत्य

## शुभाभिनन्दनपत्रम्।

( लेखकाः—वङ्गीयशङ्करसभास्थश्रीयुक्तचण्डीश्वरपातर्कतीर्थप्रभृतिसदस्यवर्गाः। )

वेदान्तोदितशुद्धसिद्धनिखिलश्रौतार्थसारग्रहे
सांख्ये योगनिदर्शनेऽप्यविचला पातञ्जले त्वन्मतिः।
काव्ये कोमलवस्तुनि प्रियसुहृत्प्रेमप्रवाहोदयो-
वादे वेदमभञ्जसे तव यशः सश्लोकमाश्रायते॥

श्रीमच्छङ्करपादवादनिवहं युक्त्या दृढं मन्दरं
सन्धायात्र धरासुरो गुणधरः प्रोन्मथ्य मिथ्यातुरान्।
वेदव्यासवचोऽम्बुधेरुपचितैः सिद्धान्तमुक्ताफलै-
स्तत्त्वालोकविलोकनेन सकलान् पूर्णार्थतां नीतवान्॥

धन्या भारतवर्षभु ! प्रतिगृह्णं विद्वद्वरेण्यप्रसु !
त्वत्सिद्धाङ्कसुसङ्गतं गतपरा विद्याब्धिपारं परम्।
वाणीश्रीकरलालितं सुरतरुं प्राप्यैनमाकाङ्क्षितं
धन्याः स्मो वयमत्र, नेत्रयुगलं पुण्यं विजानीमहे॥

प्रीताः साम्प्रतमार्य्य ! सज्जनगुरो राज्ञा सुयोग्याय ते
पूज्यायोपहृतेन निर्म्मलधिये पुंसामभीष्टेन वै।
विद्वद्वर्य्य समाजराजनिकरैः संसेवितोपाधिना
भक्त्या त्वामभिनन्दयाम इति तत् सानुग्रहं गृह्यताम्॥

## संस्कृतशिक्षाक्रमः।

( पूर्व्वतोऽनुवृत्तः। )

## उत्तमशिक्षा

### प्रथमो भागः।

( वर्षत्रयम् )

तत्र नियतविषयाः—(१) काव्यसंग्रहग्रन्थाः ( किरातमाघनैषधप्रभृतिभ्यः पद्यसंग्रहः, कादम्बरीवासवदत्तानलचम्पूप्रभृतिभ्यो गद्यसंग्रहः। तुलनात्मकालोचनाविज्ञानसिद्ध्यर्थं प्रधानकवीनां शैलर्त्तुवनसागरचन्द्रसूर्यादिवर्णनसंग्रहः। ) रघुवंशविमर्शमेघसंदेशविमर्शादि च समालोचनोपयुक्तम्। मुद्राराक्षसमालतीमाधवोत्तररामचरितानर्घराघवादिनाटकेष्वन्यतमम् एकं द्वयं वा।

(२) प्राकृतव्याकरणम्। संक्षिप्तः संस्कृतसाहित्येतिहासश्च। ( तत्तद्विभागप्रविष्टैः स्वविभागसंबन्धिग्रन्थेतिहासः सम्यक्परिशीलनीयः )।

( ३ ) अलङ्कारशास्त्रस्य प्रौढं ज्ञानम् । ( साहित्यदर्पणसदृशो ग्रन्थोऽत्रोपादेयः )

( ४ ) प्रस्तावानुवादप्रौढिः ।

( ५ ) धर्मशास्त्रे मनुयाज्ञवल्क्यपराशरस्मृतिष्वन्यतमा ।

निम्ननिर्दिष्टेषु विभागेष्वन्यतमविभागनियतग्रन्थाः ।

## ( २ ) वेदविभागः

( क—द्वयोरन्यतरत् )

( क ) वैदिकविज्ञानप्रधाना शिक्षा ।

१—ऋग्वेदसंहितायाः संगृहीतो भागः । (सूक्तशतद्वयादर्धः) ।

२—ऐतरेयब्राह्मणम् ।

३—दशोपनिषदः ।

४—निघण्टु, सङ्कलितं निरुक्तम्, बृहद्देवता च ।

५—मीमांसादर्शनस्य त्रयोऽध्यायाः ।

६—प्रातिशाख्यमन्यतमम् ।

( एतद्विभागप्रविष्टेरुपदेशपद्धतिः शिक्षणीया, पुरातत्त्वान्वेषणे वा प्रवर्तनीयम् )

### ( ख ) कर्मकाण्डप्रधाना शिक्षा ।

( १ ) शुक्लयजुःसंहितायाः पूर्वार्द्धम् । ( सस्वरं पाठाभ्यासः कर्मोपयोग्यर्थज्ञानं च ) ।

अथवा

( १ ) ऋग्वेदमन्त्रसंहिता ( तथैव ) ।

अथवा

( १ ) कृष्णयजुःसंहिताया भागः ( तथैव ) ।

## अथवा

(१) सामसंहिता। गानाभ्यासस्तहजता ( तथैव )।

(२) तत्तद्वेदसंहितीप्रयोगिशिक्षासर्वानुक्रमण्यादि। प्रातिशाख्यं च।

(३) तत्तच्छाखोपयुक्तमाह्निकं देवपूजादिकं च।

(४) अन्यतमं गृह्यसूत्रम्। ( सभाष्यम् )

(५) संस्कारकौस्तुभः, संस्कारभास्करो वा।

(६) श्राद्धग्रन्थः ( श्राद्धविवेकश्राद्धमयूखाद्यन्यतमः। )

(७) मुहूर्त्तग्रन्थः। ( मुहूर्तचिन्तामण्यादिः बृहज्ज्योतिषसारो वा )।

( एतद्विभागप्रविष्टैः कर्मकाण्डे हस्तकौशलमपि शिक्षणीयम् )

## ( २ ) साधारणविभागः।

१—सिद्धान्तकौमुदी पूर्णा

२—सिद्धान्तमुक्तावली पूर्णा

३—मीमांसान्यायप्रकाशः

४—सांख्यतत्त्वकौमुदी

५—वेदान्तपरिभाषावेदान्तसारौ

६—बृहज्ज्योतिषसारः

७—निरुक्तम्

( एतद्विभागप्रविष्टैराङ्गलभाषा यथामं [illegible] ग्राह्या। ) अध्यापनकला च शिक्षणीया।

## ( ३ ) व्याकरणविभागः।

१—सिद्धान्तकौमुदी पूर्णा काशिका वा

२—महाभाष्यं नवाह्निकं सकैयटम्।

{ ३—वैयाकरणभूषणम्।
अथवा
२—परमलघुमञ्जूषा ( तत्समकक्षः कश्चनान्यो ग्रन्थो वा ) }

४—सिद्धान्तमुक्तावली पूर्णा।

५—अर्थसंग्रहः, मीमांसापरिभाषा वा।

एतद्विभागप्रविष्टैर्यथासंभवमैच्छिकरूपेण भाषाविज्ञानमभ्यसनीयम् ) ( अध्यापनकला च शिक्षणीया )

## साहित्यविभागः।

१—पञ्चमहाकाव्यानां ते ते भागाः

२—कादम्बरीपूर्वभागः

३—नलचम्पूः

४—काव्यप्रकाशः

५—कुवलयानन्दः

६—रसमञ्जरीरसतरङ्गिण्यौ।

७—दशरूपकम्।

८—सिद्धान्तमुक्तावली।

९—अर्थसंग्रहः।

१०—पिङ्गलसूत्रम्।

एतद्विभागप्रविष्टैः प्राचीनसंस्कृतकाव्यानां भाषान्तरकाव्यानां च तुलनात्मकालोचनाभ्यासे यतनीयम्।

## ( ५ ) दर्शनविभागः।

१—न्यायसिद्धान्तमुक्तावली।

२—मीमांसान्यायप्रकाशः।

३—शास्त्रदीपिकायास्तर्कपादः।

४—सांख्यतत्त्वकौमुदी।

२ साधारणविभागे सर्वशास्त्राणां सामान्या योग्यता लक्ष्यीक्रियते।

५—वेदान्तपरिभाषावेदान्तसारौ।

६—प्रमेयरत्नमाला ( जैनानाम् )

७—न्यायदर्शनं सभाष्यम्।

८—पञ्चदशी।

एतद्विभागप्रविष्टैराधुनिकतर्कशैल्या ( लजिक ) आधुनिकदर्शन-शास्त्रस्य (फिलसफी) आधुनिकविज्ञानस्य च परिचयः संपाद्यः।

## ( ६ ) न्यायविभागः।

( अन्यतरत् )

( अ )

( १ ) सिद्धान्तमुक्तावली, पूर्णा। प्रत्यक्षखण्डान्ता दिनकरी च।

( २ ) गौतमसूत्रं सभाष्यम्।

( ३ ) वैशेषिकसूत्रं सोपस्कारम्।

( ४ ) मीमांसान्यायप्रकाशः।

( ५ ) शक्तिवादः

( क )

( १ ) सिद्धान्तमुक्तावली, पूर्णा। प्रत्यक्षखण्डान्ता दिनकरी च।

( २ ) माथुरी पञ्चलक्षणी सिंहव्याघ्रसहिता।

( ३ ) जागदीशी व्यधिकरणसिद्धान्तलक्षणावच्छेदकत्वनिरुक्तयः।

( ४ ) शक्तिवादः।

( ५ ) मीमांसान्यायप्रकाशः।

एतद्विभागप्रविष्टैरपि आधुनिकतर्कशैल्या आधुनिकविज्ञानस्य च परिचयो यथासंभवं संपाद्यः। )

## ( ७ ) सांख्ययोगविभागः।

( १ ) सांख्यतत्त्वकौमुदी श्रीबालरामोदासीनटीका युता।

५ विभागेऽस्मिन् सर्वदर्शनानां साधारणी योग्यता लक्षीकृता।

(२) सांख्यकारिका गौड़पादभाष्यसहिता।
(३) योगसूत्रं भोजवृत्तियुतम्।
(४) सांख्यसारः योगसारसंग्रहश्च।
(५) न्यायसिद्धान्तमुक्तावली।
(६) वेदान्तपरिभाषा।
(७) मीमांसान्यायप्रकाशः।
(८) विष्णुपुराणस्य सृष्टिखण्डम्।

## (८) वेदान्तविभागः।

### (क) अद्वैते

(१) वेदान्तपरिभाषावेदान्तसारौ।
(२) पञ्चदशी।
(३) भगवद्गीता शाङ्करभाष्यमाधुसूदनीभ्यामुपेता।
(४) ब्रह्मसूत्रं शाङ्करभाष्योपेतम् (१॥० अध्यायः)
(५) मीमांसासूत्रस्य सभाष्यस्य तर्कपादार्थवादप्रकरणे।
(६) न्यायसिद्धान्तमुक्तावली।
(७) सांख्यतत्त्वकौमुदी।

---

## परिषत्सन्देशः।

वर्त्तमानेऽस्मिन् वर्षे अनन्यसाधारणानां तत्रभवतां परिषत्सदस्यानां केषां केषामपि गुणज्ञानानुरूपं गरीयः पदगौरवं सञ्जातम्। तच्च तदाश्रितायाः संस्कृतसाहित्यपरिषदः अत्यन्तगौरवकरम् अप्रमेयाभ्युदयस्थानमिति सहर्षं भवद्भ्यो विनिवेद्यते। तथाच—स्वनामधन्याः दर्शनादिनानाशास्त्रचतुराः परिषत्पत्रिकायाः सम्पादकाः विद्यार्थिवृन्दसंसेवितपादाः श्रीयुक्तदुर्गाचरणसांख्यवेदान्ततीर्थमहोदया "महामहोपाध्याय" पदमधिगताः। सततसंसक्तश्रियो

दानशौण्डा: सदाचारचारित्र्यादिसुशोभिता अपारगाम्भीर्य्यविमण्डिता दीनवत्सला: श्रीमन्त: श्रोङ्कारमलजेठियापादा: "स्यार" इत्युपाधिं, वङ्गवाणीचरणसेवननिपुणा: पुण्यमतय: भारतवर्षाख्यपृथिवी-प्रख्यातपत्रिकाया: योग्यसंम्पादका: श्रीयुक्तजलधरसेन वि ए, महाशया: "रायबाहादुर" इत्युपाधिं, स्वदेशानुरागाबद्धहृदया: धनकुबेर-पदभाजो महाजनवृन्दसम्मानिता: श्रीयुक्तनरेन्द्रनाथलाहा एम, ए, वि, एल, महोदया: "पि, एइच, डि" इत्युपाधिं प्राप्तवन्त:। देशवासिनां तेषां तेषां यथायथसम्मानलाभे सम्मानिता: परं गौरव-मात्ता वयं सुविचारचतुरेषु गुणपक्षपातिषु राजकीयकार्य्येष्वपि प्रीतिमन्त: प्राप्तोपाधिकानां तथा सम्राट्प्रतिनिधीनां धन्यवाद-प्रदानेनात्मानं पुनीमहे। इति शम्।

---

## "अभ्यर्थना"

तिलकस्थापिका कापि पिकालापा सुपत्रिका।
कल्लिड कुर्चि-नगराद्देशाऽऽषाढे ह्यवातरत्॥ १॥
याऽपूर्यते "संस्कृतकामधेनु"र्याऽन्विष्यते देशविदेशविज्ञै:।
याऽऽपूर्यते सूक्तिसुधाप्रबन्धै: सा दिव्यवाणी हृदयं धिनोतु॥२
वेदशास्त्रपुराणादिकाव्यपीयूषवर्षिणी।
गैर्वाणी सेव्यतां वाणी सर्वभाषाधिकारिणी॥ ३॥
अस्यास्तु रूप्यद्वितयं हि मूल्यं तच्चाग्रिमं वार्षिकमेव देयम्।
पत्राधिपायेति निवेद्यतेऽद्य गीर्वाणवाणीरसकोविदेभ्य:॥ ४
मान्यै: संस्कृत-साहित्यपारिषद्यै र्महात्मभि:।
धन्यैरन्यैश्च मान्येयं संस्कृता कामधेनुका॥ ५॥

के, ए, रामलिङ्गशास्त्री, सम्पादक संस्कृतकामधेनु।
कल्लिडेकुरुचि, मान्द्राज।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—भाद्रे, ५म वर्षस्य ५म संख्या ।

( हरिद्वारस्थगुरुकुलाध्यापकस्य ब्रह्मचारिण ईश्वरचन्द्रस्य । )

## आस्तिक्यम् ।

सर्व्वेषामपि चेतनावतां निरतिशयानन्दाभिलाषेण मतिवैचित्र्याद्विविधसाधनेषु भूयान् प्रयत्नः प्रतीयते, तत्र केचिदेवमाशेरते—शरीरमेवेदं चेतनम्, न सुलभं च कदापि कयापि विधया विलयमुपगतम् भूतसंसर्गविशेषजन्यचैतन्यमिति, सुखलिप्सुना सम्यगुपभोक्तव्या विषयाः । सर्व्वप्रत्यक्षस्य स्रग्धारण-मलयजालेपन-कामिनीसमालिङ्गनादिजन्यो मन्देतर आनन्दः । आनुषङ्गिकलघुतरक्लेशभिया भूयिष्ठवैषयिकसुखहानन्तु नौचित्यमनुसरतीति यावज्जीवं विषयलाभार्थमुद्योक्तव्यम् । अस्ति सर्व्वव्यापी सर्व्वज्ञोऽनन्तशक्तिरीश्वरः, स च शरीरातिरिक्तात्मभ्यः कर्म्मानुसारमिह परत्र च सुखं दुःखं वा प्रयच्छति । तस्मात् सुखमधिजिगमिषता विषयेभ्यो विरज्याम्नायबोधितं ब्रह्मचर्य्याद्यनुष्ठानपूर्व्वकं भगवद्ध्यानं करणीयम् । निदिध्यासनसाक्षात्कृतपरमतत्त्वश्चात्मा विगलितनिखिलबन्धहेतुकर्म्मजालः क्लेशविहीनमाविर्भूतपरमानन्दं मोक्षं प्राप्नुत इति तु न युक्तम् । तथाहि शरीरातिरिक्तात्मनः सर्व्वव्यापित्वादिविशिष्टेश्वरस्य चास्तितैवात्मानं न लभते । न तरां च तन्निष्प्रसिद्धिरात्मनामीश्वरो-

पासना। न तावच्छरीरातिरिक्तात्मानं बाह्येन्द्रियजा वृत्तिर्गोचरयितुं समर्था तथा प्रतीत्यभावात्। भूतसंयोगोत्पन्नं चैतन्यमिति चित्यादिषु प्रत्येकं ज्ञानानुपलब्धिरपि चैतन्यस्य देहभिन्नमाश्रयं साधयितुं न क्षमते। ईश्वरोऽपि चक्षुरादिभिर्बहिर्न्नीयते। तरुलता-प्रभृतयः कर्त्तारमन्तरा जायन्त इति तन्न्यायेन प्राणभृदश्मक-निर्म्माणस्य निश्चितकर्त्तृकघटशकटमुकुटविलक्षणस्य संसारस्यापि उत्पत्तिरकर्त्तृकेति कार्य्यत्वहेतुकेश्वरानुमितिर्नोदेतुमर्हति। तस्माद् विषयोपभोग एव सुखसाधनं नेतरदिति निश्चिनुमः। अत्रेदम-भिधीयते, तदेव सुखं प्रेक्षावदपेक्षितं यद्दुःखकणिकयाप्यसं-पृक्तं यच्च न क्षणभङ्गुरं स्यात्। परिणामे क्लेशप्रदाः सौदामिनी-प्रभासदृशास्थायिनो विषयभोगजन्मान आनन्दाः। अपिच भुञ्जा-नोऽपि भोगान् जनिधर्म्मा तृष्णया बाध्यमानोऽवाप्तं सुखमल्पीय इति मत्वा विषीदति। तृष्णा चोपभोगसहस्रैरपि न शक्या क्षपयितुम्। प्रत्युत पूर्व्वापेक्षयापि सर्पिःसंपातप्रवर्धमानो हुतभुगिवाधिकं वर्धते। तथाच न दुःखहानमपि, दूरे सुखलाभ इति कथमीदृशं सुखं प्रेक्षावदुपादित्सागोचरः स्यात्।

यदप्यभिहितं नित्यात्मादौ प्रमाणं नास्तीति तत्रेदमभिधीयते। यथा मदशक्तिमद्भिरिव मदिरारम्भकैर्मदशक्तिमती मदिराऽरभ्यते, एवं देहावयवैरपि चैतन्यवद्भिरेव स्वचैतन्यवच्छरीरमारम्भणीय-मन्यथा तदारब्धकार्ये चैतन्योपलब्धौ नोपपद्येत। अवयवानाञ्च चैतन्याभ्युपगमे एकस्मिन् देहे विरुद्धाभिप्रायाणां बहूनां चेतनानां सत्त्वाद्गुणाबरन्यायेन कदाचित् कस्यचित् कार्य्यस्य उपपत्तावपि नियमेन कार्य्याणि न सिध्येयुः। तस्माद्देहभिन्न एवात्माभ्युपेतव्यः। द्रुमादयोऽपि संदिग्धकर्त्तृकाः नतु तेषामुत्पत्तिरकर्त्तृकतया निश्चितेति तत्रभूधरादीनां सावयवत्वेन कार्य्यत्वसिद्धेर्यत्किञ्चिद्वैलक्षण्यमात्रं कार्य्यत्वहेतुकेश्वरानुमितिप्रतिबन्धे न समर्थतरम्। अन्यथा दृष्टकर्त्तृक-

परातिरिक्तस्य विपणिवर्त्तिनः पटस्यापि कार्य्यं न सिद्ध्येदिति सुबन्धुचात्र पराक्रान्तं विद्वद्भिरिति न प्रतीयते। अपि चानेकविधशरीरपरित्यागोपादानाभ्यां फलभोक्तुर्जीवस्य फलप्रदपरमात्मनश्चाप्रतिपत्त्या निर्भीकाः सन्तः स्तेयेनान्यथा वान्याय्यविधया परकीयद्रविणहरणे समुद्युञ्जानाः जगति विप्लवमेवादधीरन्नास्तिकाः। एवंस्ते चात्मत्राणोपायान्तरमलभमानाः दुर्बलाः, मृत्युभये मार्जारेऽपि मृगेन्द्रायत इति न्यायेनापकर्त्तृवधाय संनह्येयुरिति कथं क्लेशपरंपरावर्जमभ्युदयकणमपि प्रसोतुमीशीत नास्तिक्यम्। नान्यथा सुप्रापाणि शरीरसुखानीति युक्त एवायं पन्था इत्याशयइति ननु सर्वजनीनायामितरजातीयेभ्यो मनुष्याणामुत्तमतायाम् सुकुलितलोचनमालोच्यताम् निमित्तम्। निरूपणे चेष्टलिप्सया निसर्गतः परक्लेशावहा प्रवृत्तिः सिंहप्रभृतिपशूनां प्रतीयत इति प्राणिमात्रबाधामुच्छिन्दानैव प्रवृत्तिर्मानवसमाजार्हनोयतायां निमित्तभूताभ्युपेया। अन्यथा निरपराधं परैः क्लेशितो नास्तिकोऽपि किमुत्तरं प्रतिपद्यते। तस्माद्दुःखं जिहासद्भिर्नास्तिक्यमपहायास्तिक्यमासेवनीयम्। अयमाशयः—आम्नायोपदिष्टसरणिं परिशीलयतो जीवलोकस्याभ्युदयश्रेयःसमवाप्तिर्न दुरापेति। तथाहि ये तावदभ्युदयकामनया प्रवर्त्तन्ते ते निष्कृत्यापि कृतसम्प्रदायं कर्मकलापमन्तर्यामी भगवान् वेत्ति तदनुरूपाणि च फलानि प्रयच्छतीति जानानाः मा स्मभिमहि तिर्य्यगादियोनिषु जन्मेति धिया कीटपतङ्गेयाः आचमनुष्येभ्यः क्लेशलेशमप्यादधतीश्चेष्टाः प्रयत्नेन परिहरमाणाः न्याय्यानेवोपायानाश्रयन्ते। प्रयतमानाश्च यावदवाप्नुवते तावतैव संतुष्यन्तो सुख्यानां मनसोऽप्यगोचरमानन्दमनुभवन्ति। एवं हि ते विविञ्चते समुद्युञ्जन्तोऽपि चेन्नाप्नुमः फलं तन्नूनमस्मदीयानि प्राग्भवीयकर्माणि प्रतिबन्धकान्यासते। न च कर्मफलं वयमन्यथयितुमीश्महे। स्वाभाविकं ध्यायतां तु न जातुनिर्वृतिः संभविनीति कुतो सुधैव खिद्ये-

महीति। यद्यपि तृष्णा: निरवधानः प्रयत्नं भूमानं प्रसूते तथापि वाङ्मानसाभ्यां कायेन वा परान् समुन्मज्जयन्त्यायोपिततितिक्षिविं-धेयेति धियोपादते निमित्तमिति प्रयत्न एवं फलति। तथाहि— तनुमावरितुं वसनखण्डमपि बहवो न लभन्ते। अपरेषां च क्षुध-मपनेतुमप्यशक्तानामार्तनादाः दिगन्तान् व्याप्नुवते। भवति च निरपराधरतानां दीनानाथानां शोणितैः पूरिता धरणी। न चेतद् युक्तं, तस्मात् समूलम् उच्छेत्तव्या तृष्णा। इतश्चास्तिक्यमभ्यर्हितम् यतश्चास्तिको मृत्योरपि न बिभेति। अयमभिसंधिः—यथा प्राणिनः प्राग्भवीयकर्मानुसारं भगवद्दत्तायुषि शरीरद्वारा सुखदुःखान्युप-भुञ्जाना आयुषः प्रक्षये शरीरान्तरमुपाददते, तथाहमपि निर्मोकमिव भुजगो विमुच्येदं कलेवरं शरीरान्तरमुपादास्ये, नगरविदादयोऽपि च विलक्षमुपययुस्तन्न युज्यते, विगराकणि शरीरेऽस्मिन् प्रेसमात्रापि, शुभानि च कर्माण्यनुतिष्ठतो नास्ति मे निरयपातनिमित्तं किं-चनेति मन्यमानो निराबाधमुत्सृजति तनुम्। शरीरमेवेदं सर्वस्व-मिति मन्वानो नास्तिकस्तु व्याधानुस्रियमाणकुरङ्ग इवेतस्ततः कातर-तरदृशं विक्षिपन् मृत्युना बलादपरत नीयते।

मुमुक्षवस्तु आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्य इत्याद्यौपनिषदमध्वानमनुसरन्तो विन्दन्ते परमपुरुषार्थमपवर्गम्। अयमभिप्रायः— आगमादुपश्रुत्योपपत्तिभिश्चावधार्य साक्षात्कार-मभिलषतादरनैरन्तर्यपुरःसरं चिन्तासन्तानात्मकध्यानमा-सेवनीयम्। विशेषतस्तदवगमार्थञ्च योगोपदिष्टोपायाः प्रति पत्तव्याः। यथाहुरत्रभवन्तोऽक्षपादाः "तदर्थं यमनियमाभ्यामात्म"-संस्कारो योगाच्चाध्यात्मविध्युपायै"रिति। अयमाशयः—उपपत्तिभिः शरीरस्यानित्याशुचिदुःखरूपताया अवबोधेऽपि चपलतरमनो न स्थिरपदं भवति ब्रह्मणि, प्रत्युत रागादिप्रसूतवासनानामनुवर्त्तमान-तया धावति पराञ्चु विषयेषु। न चासति मनसः स्थेमनि साक्षात्-

कारः सुलभः। नहि मारुतवेल्लिते सरसि प्रतिफलितमिन्दुमण्डल-मनवच्छिन्नमालोचयितुं शक्यम्। तस्माच्चेतसो निश्चलतां संपिपादयिषता योगाङ्गानि यमनियमादीन्यनुष्ठातव्यानि। तथा चाहिंसा-सत्यास्तेयब्रह्मचर्य्यापरिग्रहा इति यमपञ्चकं, शौचसन्तोषतपः-स्वाध्यायेश्वरप्रणिधानानीति नियमपञ्चकं चासेवमानो मुमुक्षुर्मालिन्य तनूकरोति, समासादयति च समाधियोग्यताम्। ईश्वरप्रणि-धानेनापगतानामपि रागादीनां संस्कारास्तद्बोधकसन्निधाने प्रबुद्धाः विषयेषु प्रवर्त्त्य क्लेशयन्तो ध्यानसंस्कारैः क्षीयन्त इति। अथ ध्यानाभ्यासोद्गयमानसंस्कारमाला सध्रीचा मनसा साक्षात्-कृत्य परं ब्रह्म प्रारब्धकर्म्मानुवृत्तौ जीवन्मुक्तो भवति। प्रारब्धकर्म्म विलये तु परमपुमर्थं कैवल्यमश्नुत इति। एवमिदमास्तिक्यमप-वर्गोपायभूतमिति प्रयत्नतो मुमुक्षुणोपासनीयं ज्ञातव्या च नैराश्य दृष्टिः। ये तु सौत्रान्तिका वैभाषिका श्च सौगताः प्राहुः सर्व्वे पदार्थाः क्षणिकाः कार्य्यकारणभावेनावस्थिताः उत्पादविनाशयोर्न हेतुमपेक्षन्ते भावानां तत्स्वभावत्वात्। तथाच कायाद्युत्पत्ति-रचेतनानधिष्ठितेभ्यः पृथिव्यादिभ्यो भवति। या चेयं काये नित्य-सुखमात्ववुद्धित्वादिसंज्ञा सैवाविद्या संसारकारणम्। अविद्या-मूलाश्च रागद्वेषमोहा विषयेषु सरन्ति। यस्तु वस्तुविषयो बोधः स विज्ञानमित्युच्यते। तथा चाहंकारास्पदमालयविज्ञानमिन्द्रिय-द्वारा सुखाद्यनुभूय भूयस्तदीप्सया चेष्टमानं धर्म्माधर्म्मौ संचिनुते। ततस्तद्धेतुको जनिः, सति जन्मनि च जरामरणे भवतः। एवं जन्मादि-निमित्ता अविद्यादयोऽविद्यानिमित्ताश्च जन्मादयोऽहोरात्रवदावर्त्तन्ते, एतस्य जन्ममरणदुःखस्य हानाय सर्व्वप्राणिभ्योऽनभिद्रुह्यता. बौद्धा-गमप्रतिपादितं क्षणिकत्वादिकं सम्यग्भावनीयम्। सति च भावना-प्रकर्षे विशुद्धविज्ञानसन्तानोत्पादलक्षणं निर्वाणं समुदेतीति। तेषामियमभ्युपगमं न युक्तयोनुरुन्धते। तथाहि भावानां क्षणिकत्वे

कार्य्यकारणभावो नोपपद्यते। प्रागुत्पत्तेर्विद्यमानं कारणं कार्य्य- जन्मनि समर्थमिति न पूर्व्वक्षणविनष्टो भाव उत्तरक्षणवर्त्तिकार्य्योत्पत्तौ हेतुः। कार्य्योत्पादकालावस्थायित्वे तु क्षणिकत्वहानिः। तस्मात् स्थिरा भावाश्चेतनाधिष्ठानसन्निधापितकारणान्तरान्विताः कार्य्यमुत्पादयन्तीत्येव युक्तम्। अपिच—क्षणभङ्गवादे क्षणिकस्यानुभवितुराफलनिष्पत्तेरविद्यमानतया भोगापवर्गार्थी प्रवृत्तिर्न स्यात्। प्रवृत्त्यभावे च धर्म्माधर्म्मयोरनुत्पादात्तन्निमित्तकं जन्म न सिद्ध्येत्। सत्यामपि प्रवृत्तौ यः कुरुते स निलीन इति न फलं भुङ्क्ते, यस्तु फलमनुभवति स न प्रावर्त्तिष्टेति कृतहानाकृताभ्यागमप्रसङ्गः। स्थिरः सुखदुःखेच्छाद्वेषज्ञानप्रयत्नानामाधार आत्मा कर्त्ता भोक्ता चेत्यास्तिकाभ्युपगमे तु न किञ्चन हीयते। यमहमद्राक्षम् तमिदानीं पश्यामीति प्रत्यभिज्ञा चात्मनः स्थिरतामवगमयति। पूर्व्वापरक्षणस्थायिनमात्मवस्तुरूपस्य पूर्व्वापरक्षणवर्त्तिनो बाधेऽप्रसक्ततया वस्तुद्वयाधीनोदयमादृश्यं प्रत्यभिज्ञाहेतुतां न भजति। अपिचा विद्याक्षयः सम्यग्बोधमपेक्षते न वा। पूर्व्वस्मिन् कल्पे तु ब्रह्मचर्य्यादिपुरःसरः क्षणिकनैरात्म्यादिभावनोपदेशो विफलः। प्रसज्येत। तस्मादयुक्तोऽयं सौत्रान्तिकवैभाषिकयोः सिद्धान्तः। येऽपि विज्ञानवादिनो बौद्धाः मेनिरे विषयाणां ज्ञानैः सह नियमेनोपलम्भ इति नामीषां तात्त्विकी सत्ता। यथा च स्वप्नधियो मरीचुदकधियो वा बाह्यविषयं विना समुदयन्ते व्ययन्ते च, तथा जाग्रदवस्थायामपि धियो नार्थानवलम्बन्ते धीत्वाविशेषात्। अनादिवासनावैचित्र्याच्च संभवति धियां विलक्षणं जन्मेति। तेषामपीदं मतं न समञ्जसम्। तथाहि ज्ञानार्थयोर्नियमेनोपालम्भ आलोकसंवृततया घटाद्युपलम्भ इवो पायोपेयभावनिबन्धनो नाभेदमवगमयति। अपिच घटदर्शनघटस्मरणयोर्घटस्यैक्येऽपि ज्ञानभेदोऽनुभूयत इति न ज्ञानात्मका अर्थाः। स्वप्नजागरितप्रतीतीनामविशेषश्च न युज्यते, स्वप्नानुभूतपदार्थाना

जाग्रतोऽनुपलभ्य मृषात्वस्य जाग्रदवस्थायामनुभूयमानार्थानां बाध-मविज्ञाय सत्यत्वस्य च प्रतीतेः। वासना चार्थानुभवमन्तरा नोदेतु-मर्हतीति नार्थनिरपेक्षवासनामात्रधियां वैचित्र्यमुपपद्यते। येनाभिप्रायेणोक्ताश्च दोषा अस्मिन् विज्ञानवादेऽपि द्रष्टव्याः। तस्माद्विषयाणां पारमार्थिक्येव सत्ताभ्युपेतव्या। अत आस्तिक्यमाश्रयणीयम्। संप्रार्थ्य च भगवन्तं देवदेवं विष्णुमुपसंहरामो लेखम्।

दयालोको येषामुपरि जगतीनाथ भवतो
विधत्तान्तर्ध्वान्तामलतममतीनां सुमनसाम्।
समासन्ना तेषां निखिलसुखसीमा श्रुतिमतां
विदूरे दुर्वारस्मरजनितबाधा बहुविधा॥
निरस्तातङ्कं ये द्रविणकणलाभेन भगवन्-
बलीयानस्मत्तः क इह भुवने स्यादिति धिया।
मदान्धा हा मूढा निदधति पदं गर्हितसरणौ
लभन्ते क्लेशं ते भवजलधिमग्नाश्चिरतरम्॥
पिकारावे रम्ये लवणिमणि नीलोत्पलतते:
मिलद्भृङ्गश्रेणौ सरसिजवनानां परिमले।
मृदौ मोचास्पर्शे कुसुममकरन्देऽतिमधुरे
प्रभोऽनुस्यूता ते मम हृदि विभूतिर्विलसतात्॥ २॥

# भासस्तत्काव्यानि च।

( लेखकः—श्रीजानकीनाथशाहित्र्यशास्त्री। )

अचिरमादिष्टोऽस्मि परिषद्धुरन्धरवरैः पूर्वं श्रुताभिधानमात्रं साम्प्रतमुपलब्धकृतिनिकायं भासकविं तत्काव्यनिचयञ्चाधिकृत्य

परिषदो मासिकाधिवेशने पठितोऽयं प्रबन्धः।

कस्यचित् प्रबन्धस्य बन्धाय। अयोग्यतमेनापि तदादेशस्य दुर्लङ्घतया भास-नाटक-चक्रं तदालोचनरत्नञ्च सुविज्ञ-श्रीगणपतिशास्त्रिकृतम् अतित्वरमालोक्य नवीनकाव्यानुशीलनकौतुकेन च मया भारती-भृत्यपाशेन सद्योऽयं सन्दर्भो यथामति समाकलितः। दुरदृष्ट-परिपाकात् पाण्डववर्जिते जनपदे प्रोषितस्य स्वयञ्च अविज्ञस्य मे अन्तरान्तरा सामयिक-पत्रेषु विशेषज्ञैः सुविचारं निबद्धानपि प्रबन्धान् विलोकयितुं नावसरो मिलितः। अतः प्रबन्धात् अस्मात् नवीनं किञ्चित् शुश्रूषवः साहित्यकौतुकिनो नैराश्यमन्ते यास्यन्तीति स्पष्टमपि हृदयं दूयते।

अथ कोऽयं भासनामा कविः, का वा तस्य कृतिर्येः कवि-प्रकाण्डैः कालिदासो मालविकाप्रस्तावनायाम्—

"प्रथितयशसां 'भास'-सौमिल्ल-कविपुत्रादीना" मिति प्रथमो-ल्लेखेन,

भट्टवाणो हर्षचरितोपोद्घाते,

"सूत्रधारकृतारम्भैर्नाटकैर्बहुभूमिकैः।
सपताकैर्यशो लेभे भासो देव-कुलैरिव।"

इति पूजार्हदेवकुलोपमया,

अज्ञातनामा च कश्चित् कविः सुभाषितसंग्रहे "भासो हासः" इति वाग्देवतायाः स्मितस्वरूपकीर्त्तनेन सम्मानितवन्तः? सूक्ति-मुक्तावल्यां राजशेखरकवेः,

"भासनाटकचक्रेऽपि च्छेकैः क्षिप्ते परीक्षितुम्।
'स्वप्नवासवदत्त'स्य दाहकोऽभून्न पावकः।" इति

सूक्तिदर्शनात् अनेकेषां नाटकानां स कर्त्ता, तेषाञ्चैकतरत् 'स्वप्नवासवदत्त'मिति स्फुटं जानीमः।

नाट्यशास्त्रव्याख्याने आचार्य्यश्रीमदभिनवगुप्तपादैः,

"क्वचित् क्रीड़ा, यथा 'स्वप्नवासवदत्ते'ति; सर्व्वानन्देन अमर-कोषटीकायां,

"पद्मावती पारणयोऽर्थशृङ्गार: 'स्वप्नवासवदत्ते'" इति बहुत्र 'स्वप्नवासवदत्तमुल्लिखितमास्ते। परं तस्य अन्येषाञ्च भासप्रबन्धाना-मनुपलब्धतया, एतावत्कालं संस्कृतसाहित्यसेविन: पुराविदो 'भास' नाटकचक्रं प्रनष्टमेवेति सदु:खं मन्यमाना: तद्दर्शनसुखे निराशा: सञ्जाता:।

एवमनेकेषामपि असंख्यातानां संस्कृतग्रन्थानां विलोपं आशङ्क-मानेन महानुभावेन दक्षिणपथान्त:पातित्रिवाङ्कुरमण्डलाधिपतिना अपूर्व्वमुद्रितं दुर्लभसंस्कृतग्रन्थजातं प्रचारयितुं समकल्पत। तन्नियोजितेन प्रकाशनाध्यक्षेण सम्पादिता अमूल्यग्रन्थनिचयपरि-चायिका "अनन्तशयनग्रन्थावली" नामधेया प्रकाशिता प्रकाश्य-माना च। अनेन सत्कर्म्मानुष्ठानेन संस्कृतसाहित्यिकचक्रं सहृदयाय महाराजाय चिरमपरिशोध्यम् उपकारणं धारयिष्यन्ति।

पञ्चषाणि वर्षाणि व्यतीतानि इदानीन्तनसत्प्रकाशाध्यक्ष: श्रीमद्‌गणपतिशास्त्रिमहाशय: ग्रन्थ-संग्रहाय परिभ्रमन् पुरातन-तालपत्रसम्पुटकेषु 'स्वप्नवासवदत्ता'दीनि प्रतिमान्तानि त्रयोदशरूप-काणि समधिजगाम। तेषु सर्व्वेषु प्रारम्भे "नान्द्यन्ते प्रविशति सूत्र-धार" इति अभिनवां रीतिं, सर्व्वत्र प्रयुक्ताया: भाषाया: वाक्पद्धतेश्च अनन्यविधत्वम्, एकस्यैव एकविधस्यैव वा वाक्यस्य अनेकत्र प्रयोगं विलोकयन् तत्रभवान् सर्व्वाण्येतानि, अद्वितीयस्यैव कवे: कृतिरिति निश्चिकाय। दिङ्‌मात्रमुदाह्रियते,

"एवमार्य्यमिश्रान् विज्ञापयामि, अये किन्नु खलु मयि विज्ञापन-व्यग्रे शब्द इव श्रूयते अङ्ग! पश्यामि।" (स्वप्न, प्रस्तावना)।

इमानीव वाक्यानि पञ्चरात्र'बालचरितो''रुभङ्गा'दिषु अविकलं स्थितानि। एवम्,

"इमां सागरपर्य्यन्तां हिमवद्विन्ध्यकुण्डलाम्।
महीमेकातपत्राङ्कां राजसिंहः प्रशास्तु नः॥"

इति स्वप्न-नाटकीयभरतवाक्यमेव 'बालचरिते'ऽपि,

यथा—"भवन्त्वरजसो गावः परचक्रं प्रशाम्यतु।
इमामपि महीं कृत्स्नां राजसिंहः प्रशास्तु नः॥"

इति 'प्रतिज्ञा''विमारकयोः' समं भरतवाक्यम्। अपरम् सर्व्वेषु भरतवाक्येषु, "अस्माकं राजा", इत्यर्थः प्रकाशते।

किञ्च, उल्लेखापरनाममुद्रालङ्कार-भङ्ग्या नाटकीयपात्राणामुल्लेखः कवेरेतेषां प्रिया शैली प्रतिभाति। तद् यथा, स्वप्ने,—

"'उदयन'वेन्दुसवर्णौ 'वासवदत्ता'बलौ बलस्य त्वाम्।
'पद्मावती'र्णपूर्णौ 'वसन्त'कम्रौ भुजौ पाताम्॥"

अत्र नाटकीयप्रधानभूमिकपात्राणाम् 'उदयन' 'वासवदत्ता' 'पद्मावती' 'वसन्त'कानाम् उल्लेखः कृतः।

प्रतिमायाम्,—

'सीताभवः पातु, 'सुमन्त्र'तुष्ट
'सुग्रीव' 'रामः' सह'लक्ष्मण'श्च।
यो 'रावणा'र्य्यप्रतिमश्च देव्या
'विभीषणा'त्मा 'भरतो'ऽनुसर्गम्॥"

'प्रतिज्ञोरुभङ्गयो'श्च ईदृगेव। अपिच, एषु सर्व्वत्र प्रस्तावना-शब्दस्थाने स्थापनाशब्दो दृश्यते। अलमुद्धृतिबाहुल्येन। उदाहृतै रेभिरेव अमीषां नाटकानां कर्त्ता एक एव, इति निश्चेतुं पार्य्यते।

"सूत्रधारकृतारम्भै" रिति वाणोक्तेः, सम्यक् प्रयोगः एतेषु प्रागेव दृष्टः। 'स्वप्नवासवदत्त'स्य 'भास'कृतम् इति राजशेखरोक्तिः प्रमाणम् आस्ते। एतेन सर्व्वेषाम् उपलब्धरूपकाणां कविर्भास एवेति सिद्धान्तो जातः। अपरञ्च असाधारणं लिङ्गम् अमीषां 'भास'

कर्णांकले--आचार्य्यदण्डिभामहाभिनवगुप्तपादैः 'भास'-कृतत्वेन उदाहृताः।

"लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥"

( चारुदत्ते )

शरच्छशाङ्कगौरेण वाताविद्धेन भामिनि।
काशपुष्पलवेनेदं साश्रुपातं मुखं मम॥"

( बालचरिते )

इत्यादयः श्लोकाः एषां कतिपयेषु चकासति। नच 'भासे'तरः कश्चित् कवि 'भास'कृतानेव तान् श्लोकान् 'शूद्रक' इव स्वप्रबन्धेषु निवेशयामास इति वक्तुं न्याय्यम्। तथात्वे बलवद्युक्तिविरहात् भासकृतग्रन्थान्तराप्राप्तेः अस्मत्पक्षे प्रमाणाविरोधाच्च।

अथ 'भास'कवेर्नाटकचक्रम् एतावद्भिरेव रूपकैः? समाप्तम् उत वा अवशिष्टमपि वर्त्तते? श्रुतमस्माभिर्दाक्षिणात्यपण्डित-कृष्णाचार्य्य-सकाशात्—"जनविंशानि किल 'भास'स्य रूपकाणि अभूवन्; तेषु च 'किरणावली' नाटिका गुणोत्कर्षेण वर्ष्यतिस्मेति। सम्भावयामो दृढ़व्यवसायैः शास्त्रिमहोदयैरनेरश्च तादृशैः कृतिभिः, अचिरेण तानि विस्मृतिसागरादुद्धृत्य पिपासून् सारस्वतान् कृतार्थान् विधास्यन्तीति।

किंनामा जनपदः कविसिंहमेतम् वक्षसा दधार, कुलं वा कत-मत् जन्मनास्य पूतम् अभवत्, कावस्य भवतः पितरौ आस्ताम्, किं-जातिरयं वासीदित्यादि-प्रश्नेषु कृतेषु प्रत्नतत्त्वपरिभाविते रहस्ये सम्यगनिष्णाता वयं सर्व्वथा निरुत्तरास्तिष्ठेम।

कियत् प्राचीनोऽयं कविरित्यनुसन्धाने इदमुच्यते—'दण्डि' 'भामह' कालिदासा'दिभ्यः प्रागभवाऽयमिति प्रागुक्तात् सन्दर्भाग्रादेव स्पष्टं प्रतिभातम्। 'वात्स्यायना' परनामा 'चाणक्यः' 'चन्द्रगुप्त'-

समकालीनतया खृष्टपूर्व्वचतुर्थशताब्द्यां प्रादुरासीदिति सर्व्ववादि-सम्मतम्। तत्कर्त्तृकार्थशास्त्रे,—"नवं शरावं सलिलस्य पूर्णम्" इत्यादि श्लोकः प्रतिज्ञारूपकीयः उदाहृतः। अनेनास्य चाणक्यात् प्राचीनत्वे प्रमाणमधिगतम्।

'अविमारके' 'चारुदत्ते'च श्रमणशब्ददर्शनात् शाक्यसिंहाद-र्व्वाचीनं मन्यमानान् प्रति शास्त्रिमहाशयेन यदुक्तं—"नायं श्रमण-शब्दः क्षपणक-पर्य्यायः, किन्तु चतुर्थाश्रमिमात्रपरः, शाक्यसिंहात् प्राक्तनेषु 'वैखानसधर्म्मप्रश्नादिषु तथा दर्शनादिति, तत्रास्माकम् केवलम् इदं वक्तव्यमास्ते। अविमारके द्वितीयाङ्के—

"चेटी। अय्य कञ्चि वह्मणं अस्सेसामि,

विदू। वह्मणेण किं कय्यं।

चेटी। किमस्सं, भोअणत्थं निमन्तेदुं।

विदू। भोदि, अहं किं समणओ?"

("अहं किं श्रमणकः" इति छाया) इति।

तत्रैव पञ्चमाङ्के-

बिदू। आम भोदि! जन्नोपवीदेन वह्मणो, चीवरेण रत्तपडो। जदि वत्थं अवणेमि, समणओ होमि। (आम भवति! यज्ञोपवी-तेन ब्राह्मणः, चीवरेण रक्तपटः। यदि वस्त्रमपनयामि, श्रमणको भवामीति च्छाया।) इति च अंशौ सूक्ष्मम् आलोचयताम् एतत् प्रतिभास्यन्ति, यदेते श्रमणाः ब्राह्मणविरोधिनः केचित् भिक्षव इति। के ते, दिगम्बरा वा, बौद्धा वा अन्ये वा तत् विशेषविदो विचारयन्तु।

यथा तथा वा भवेत्, 'भास' कविस्थितेः सार्द्धद्विसहस्र-कल्पानि वर्षाणि समतीतानीति कथञ्चित् निःसन्देहं वक्तुं शक्यते।

प्रायेण मङ्गलश्लोकेषु विष्णुस्मरणात् कविरसौ 'वैष्णव' आसी

दिति कल्पते। भरतवाक्येषु 'अस्माकं राजा' इत्यर्थदर्शनात् कस्यचित् राज्ञः स आश्रितः अभवदिति अनुमीयते।

ग्रन्थान्तर्वर्त्तिदेशविशेषस्य वर्णनातिशयदर्शनेन कवेरपि तद्देशजत्वं कल्पयितुं नोत्सहे। यथा अधुनातनेऽपि काले, चट्टलजकवेः नवीनचन्द्रस्य कृतौ अतुग्रत्तमरैवतकादिवर्णनं सम्भावितम् जातं, तथा देशान्तरजातस्यापि कवेः श्रवणपठनादिभ्यः सकृद्दर्शनाद्वा, तथा वर्णयितुं शक्यत्वात्।

सत्यमेतत् प्रत्यक्षरं यद्भगवता कृष्ण-द्वैपायनेन,

"सर्व्वेषां कविमुख्यानाम् उपजीव्यो भविष्यति।
पर्ज्जन्य इव भूतानामक्षयो भारतद्रुमः॥" इति।

आदिकविना च महर्षिणा रामायणमधिकृत्य,—

"परं कवीनामाधारम्" इति च सगर्व्वमुदितम् आसीत्। कति कति काव्यनाटक-कथाः रत्नाकरस्येव भारतगर्व्वयो रामायण महाभारतयोराश्रयेण प्रणीताः प्रणेष्यमाणाश्च के तत् संख्यान्ति?

अस्मदालोचनीयेषु—'भास'रूपकेषु, 'पञ्चरात्र' 'मध्यमव्यायोग' 'दूतवाक्य' 'दूतघटोत्कच' 'कर्णभारो' 'रुभङ्गान्ता' मुपजीव्य' महाभारतम्।

'प्रतिमा' 'भिषेकं' द्वे रामायणाश्रिते। 'बालचरितम्' श्रीकृष्णस्य बालचरितानि हरिवंश 'विष्णुपुराणभागवतम'वादीनि समाश्रित्य प्रवृत्तम्। अवशिष्टानाम् चतुर्णां 'स्वप्न' 'प्रतिज्ञा' 'विमारक' 'चारुदत्ताना' माख्यानवस्तूनि केषुचित् प्राचीनग्रन्थेषु नाधिगम्यन्ते। लभ्यन्ते च कथञ्चित् येषु कथासरित्सागरादिषु, ते भासादर्व्वाचीनाः इति पुराविद्भिः प्रमाणितम्। अत एतद्रूपक-चतुष्टयस्य कविकल्पनैव मूलम्। अथवा आकरः कालवशात् प्रणाशं गतो भवेत्।

मध्यमव्यायोगादीनि 'उरुभङ्ग'न्तानि पञ्च एकाङ्कानि अपि वर्णन-माधुर्य्येण अपूर्व्वचरित्रसर्गेण च सहृदयानां मनोहराणि। मृच्छ-कटिकप्रकृतिभूतम् चतुरङ्कात्मकं चारुदत्तम् आकाङ्क्षाशेषात् भरत-वाक्यादर्शनाच्च अपरिसमाप्तमिव भासते। एतदेव चारुदत्तमाश्रित्य शूद्रककविः स्वकीयकल्पनया परिपुष्टं च मृच्छकटिकं प्रणिनाय, इति निःसंशयम्। नासौ कविः सर्व्वत्र कथावस्तुषु रामायणं महाभारतं वा अनुससार। रामायणे लक्ष्मणो भरतात् कनीयानिति स्पष्टमास्ते। परं प्रतिमायां कविना स ज्यायान् इति निर्दिष्टः। एवं 'मध्यम व्यायोगे' भीमघटोत्कचयोर्युद्धं 'पञ्चरात्रे' कौरव-वैराटानां युद्धे अभिमन्योः कौरवपक्षे योगदानं, 'अभिषेके' सीता-हरणात् पूर्व्वं श्रीरामचन्द्रयोः संलापः, 'प्रतिमायां' प्रतिमागृहादि-कम् इत्यादीनि तदुपजीव्यग्रन्थेषु अनुक्तानि दृश्यन्ते। प्रायेण समग्रं पञ्चरात्रमेव प्रधानपात्राणां नामानि विहाय कविकल्पनासञ्चितम्।

क्षुद्रावकाशतया रूपकाणां प्रत्येकं समालोचनं न सम्भवतीति साकल्येन किञ्चिदुच्यते।

'भास'प्रबन्धानां सर्व्वेषाम् ग्रन्थनरीतिर्वैदर्भी। क्वचित् क्वचित् युद्धादिवर्णने ओजस्विनी गौड़ी अपि शोभते। उपमा-रूपक-हेत्वर्था-न्तरन्यासनिदर्शनादयः अलङ्कारा अकष्टकल्पिता मधुरं राजन्ते। कालिदासभवभूतिप्रभृतिभिर्व्यवहृतानि तावन्ति छन्दांसि प्रयुक्तानि दृश्यन्ते, किन्तु नाटकेषु अस्मद्दृष्टेषु अपूर्व्वलब्धो दण्डकोऽपि अत्र अनेकत्र लभ्यते। "कवीनां निकषं गद्यमिति सत्यञ्चेत् तदा 'भास-भारती एषु मधुर-चूर्णकेषु परीक्षायाम् अमलसुवर्णेति समुत्तीर्णा।

'प्रतिमायां' स्वर्गतानां कोशलभूपालानां पाषाणप्रतिमासज्जितं प्रतिमागृहं पश्यन्तस्तादृक् पुरातने 'भास'कालेऽपि भास्कर्य्यम् अप्र-चरितम् नासीद् इति जानीमहे। माहम्मदाधिकारे भारतवर्षे नारीणाम् अवरोधावगुण्ठनप्रथा प्रवृत्तेति मतिमताम्—

(वनगमनपथे रथेन गच्छन्) रामः। मैथिलि!
अपनीयताम् अवगुण्ठनम्।
भो भोः पौराः! स्वैरं हि पश्यन्तु कलत्रमेतत्
बाष्पाकुलाक्षैर्वदनैर्भवन्तः।
निर्दोषदृश्या हि भवन्ति नार्य्यो
यज्ञे विवाहे व्यसने वने च॥ इति॥

सन्दर्भदर्शनात् विपरीता भविष्यति इत्याशंसे। हन्त! साम्प्रतमिव तदापि 'अविमारक' प्रिया कुरङ्गी उत्तरीयवाससा उद्बन्धनमरणम् अचेष्टत। एतेषु साङ्गोपाङ्गा वेदाः मानवीयं धर्म्मशास्त्रं माहेश्वरं योगशास्त्रं, वार्हस्पत्यमर्थशास्त्रं, मेधातिथेर्न्यायशास्त्रं, प्राचेतसं श्राद्धकल्पं, रामायणं, नाट्यशास्त्रञ्च क्वचिदुल्लिखितम्।

प्रबन्धेषु बहुत्र पाणिनेरनुशासनविरोधिनीं च्युत-संस्कृतिम् आलोचयन् शास्त्रिमहाशयः कविमेतं पाणिनेरपि प्राचीनं मन्यते। तत्रास्माकं नैकमत्यं। बहुपुरातनत्वात् कालवशात् लिपिकरप्रमादात् बहव स्तादृशो दोषा जनितुम् अर्हन्ति। तेष्वनेकत्र यदि साहसिक्यं न स्यात् संशोधनमपि सुकरम्। अशोधनयोग्येषु त्रिशङ्कुं संयमिनं ददर्श इत्यादिष्विव निरङ्कुशाः कवयो यथेच्छं प्रवर्त्तन्ते, इति जनोक्तिम् अनुसरामः। पाणिनेः ऋषित्वं पण्डितसम्मतम् अतिप्राचीनत्वं सूचयति।

वक्तव्यं बहु वर्त्तते। नह्येकत्र प्रबन्धे सर्व्वमालोचयितुं शक्यं प्रतिभाति। यदि पारिषदानां अनुमतिप्रसादो भवेत्, तदा प्रबन्धान्तरे यथाशक्ति तत्सर्व्वम् उपस्थापयितुम् यतिष्ये। कालावकाशयोर्मम योग्यतायाश्च अत्यल्पत्वात् अद्य अत्रैव शिवमस्तु। इति।

---

## अश्वत्थश्च स्वास्थ्यं च ।

( लेखकः—के, ए, श्रीरामलिङ्गशास्त्री ) ।

पावनेन तपोवनपवनेन, श्रौताहैन्तीभासुरेण भूसुरनिकरेण, पवित्रतमेन महानदीनदेन, नदता तरङ्ग-पतङ्ग-कुरङ्ग-भृङ्गादिना, प्रेक्षणीयेन नग-गिरिनिर्झर-प्रस्रवणगिरिणोर्वशप्रायभूमिभागेन, स्वास्थ्या-धानचणाऽश्वत्थादिदिव्यद्रुमवृन्देन च विद्रुममञ्जुनेनेव मण्डिते-ऽस्मिन् भारतवर्षे, अद्यापि स्वदेशनरेशाधीने अनन्तशयनादि-( Travancore ) राष्ट्रभागे क्वचित् क्वचित् प्रतिमासं वर्षत्रयं वर्षति मघवेति सन्दृश्यते, यतस्तत्रत्या हि द्विजातयः प्रायेण कायेन वाचा-मनसाऽपि महत्तपः संविभ्रति । नन्वतन्त्रत्वेदं केरलं मणिमन्त्रौ-षधविज्ञाने, देवताप्रसादपुरस्कारे चासदृशं राजते ; सर्वस्याप्येतस्य निदानं तत्र अनिदम्प्रथमप्रवृत्तं धर्म्माचरणमेव ; तदनुगुणमेव ततो मरिच-शृङ्गवेर-नालिकेर-पनस-सप्तपर्ण-कन्द-कन्दलादिकं वैदेशिकैः परिमितेन मूल्येन क्रीत्वा, नौकादिद्वारा विदेशमानाय्य, तत्र यन्त्र-साहाय्येन रसायनानि, भक्ष्याणि, दीपकल्पवर्तिकाः ( candles ) रञ्जनद्रव्याणि, स्नानीयवस्तूनि चान्यानि च विरचय्य, चतुर्गुणमूल्येन तदुत्पत्तिभूमावेव पुनरपि विक्रीयन्त इति न खलुनविदितं प्रेक्षा-वताम् ।

भारती वसुमती किल कामदुघा धेनुरिव प्रदोग्धि, भास्वन्ति रत्नानि महौषधीश्च ; परीक्षकाः केवलमधुना महनीयवस्तुजातानां बहुलं नोपलभ्यन्ते भारतवर्षे, अतएवैतदनुभवति शोच्यां दशाम्, 'परीक्षका यत्र न सन्ति देशे नार्घन्ति रत्नानि समुद्रजानि । आभीर-देशे किल चन्द्रकान्तं त्रिभिर्वराटैर्विपणन्ति गोपाः ॥' इत्यभियुक्तो-

क्ते:। भारतधात्र्या दुर्दशात: समुद्धारणे को नाम भो: समुचितोऽभ्यु-पाय इति चेत्—प्राचीनाचाराणां पुनरप्यु रीकरणमेवेत्यवधत्त ; पाश्चात्यकलावाराङ्गनावासनामङ्गणीकृतान्त:करणा: किल बहवो मानवका: स्वदेशाचारं परिजहति च परिहसन्ति च समं वैदेशिकै:। महत्येव प्रत्यूषे शय्योत्थायम् अप्रक्षालिताननयना एव वीज-पत्रकषाये ( coffee or tea ) प्रणयं कुर्वन्ति। अविमुक्तोपानत्कञ्चुककवचा एव स्वच्छन्दमन्नं व्याप्रियन्ते ; तपस्विनी चूड़ा केवलं बहुधा लूयमानाऽपि पुन: पुन: प्ररोहन्ती नवनवां संस्थितिं लभते दशाननस्येव, गोब्राह्मणाननाऽश्वत्थालयादिप्रदक्षिणप्रक्रमणेन प्रतिभा प्रणश्यतीत्येतेऽभिप्रयन्ति भारतवर्षीया: खलु अर्चयन्ति पर्वतान्, पादपान्, फणाधरान्, वल्मीकानि च देवतावदिति निन्दन्त्यमी ; अश्वत्थादिवनस्पतिमाहात्म्यम् अवजानन्ति त एते।

निन्दन्तु कामं मन्दास्ते, नह्येष स्थाणोरपराध:—यदेनमन्धो न पश्यति इति। बहवो हि महाभागा: आत्मजा पुत्रारोग्याद्यभिवृद्धिं कामयमाना: प्रतिशनैश्चरवासरं प्रदक्षिणीकुर्वन्त: इवेत्थं सपर्यापूर्वकम् निष्कामा अपि 'शरीरमाद्यं खलु धर्मसाधनम्' 'लोकसंग्रहमेवापि संपश्यन् कर्त्तुमर्हसि' इत्युक्तविधया कायस्वास्थ्यहेतो: प्रदक्षिणं प्रक्रमन्ते स्वास्थ्याधाने अश्वत्थ: अश्वत्थस्य कीदृङ्महिमानुश्रूयते। उच्यते—"अश्वत्थ: सर्ववृक्षाणाम्" इति भगवान् आत्मनो विभूतिं गायति, अश्वत्थं समस्ततरुतल्लजम्, ब्रह्म नारदसंवादरूपेऽश्वत्थस्तोत्रे परिशीलितविशदमेतत् परिस्फुरेत्—सर्वदेवतात्मकस्य कस्य तरोरतिक्रमणेन नर: सकलमीप्सितं विनाऽऽयासं समश्नुते ? इति नारदेनाऽनुयुक्त: पितामह: प्राह स्म—"अश्वत्थसदृशो वृक्ष: सर्वाभीप्सितदायक:। सर्वदेवमयो नैव दृश्यते श्रूयतेऽपि वा॥" १ ॥

यत: अश्वत्थाद्दक्षिणे रुद्र:, पश्चिमे विष्णु:, उत्तरे ब्रह्मा, पूर्वो देशे इन्द्रादिदेवता:. स्कन्धोपस्कन्धपत्रेषु गोविप्रमनयश्च सर्वदा

वसन्ति, मूलोद्देशे चतुर्वेदाः, यज्ञाश्च पयसि स्थिताः, नदीनदसरोवाश्च चतुर्दिक्षु प्रतिष्ठिताः प्राच्यादिषु, जातं सकलदेवमयं दिव्यममुं तरुम्—

"मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे।
अन्ततः शिवरूपाय वृक्षराजाय ते नमः॥ १॥
यं दृष्ट्वा मुच्यते रोगैः स्पृष्ट्वा पापैः प्रमुच्यते।
यदाश्रयाच्चिरञ्जीवी तमश्वत्थं नमाम्यहम्॥ २॥
आयुर्बलं यशोवर्चः प्रजाः पशुवसूनि च।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते!॥" ३॥

इत्यादिस्तुत्या, पुरुषसूक्तेन, विष्णोर्नामसहस्रेण वा अश्वत्थं श्रीमन्नारायणं ध्यायन् मौनी यः प्रदक्षिणीकरोति, स सकलं भद्रमश्नुते। यः खलु पिप्पलं विमले भूतले प्रतिष्ठाप्य, तत्र विष्टरश्रवसं संचिन्त्य पूजोपहारादिकं समर्प्य, उपनीय, निम्बतरुणा सह संयोज्य दम्पती इव पूजयति, तेन कुलं प्रतिष्ठितं भवति, सुवासिन्यश्च प्रीणिता भवन्ति; अश्वत्थमूलमाश्रित्य शाकान्नोदकदानेन एकस्मिन् विप्रे भोजितेऽपि कोटिब्राह्मणभोजनजन्यं फलं प्राप्नोति; एतन्मूले उपहोमदेवताचनस्नानसङ्कल्पनादीनां अक्षय्यं फलं लभते; अत एव शिष्टाः—'अश्वत्थनारायणसन्निधौ' इति संकल्पयन्ति। यश्चाय छेदिते अश्वत्थे नाकलोकमवाप्नुयात्, वृथाच्छिन्नो यदाऽश्वत्थस्तदाऽसौ तत्कुलं समूलघातं हन्ति। एवं च, अश्वत्थः पूजितो येन पूज्यन्ते तेन सर्वा देवता इति सिध्यति। स्नातानुलिप्तेन पवित्रजापिना ध्यानाध्वन्येन अष्टोत्तरशतकृत्वः अश्वत्थमभितोभिक्रमणे कृते, उत्पद्यमानेन उष्मणो वर्ष्मणात् खेदो जायते; ततो रोगनिदानम् ततो विलीयते; आयुष्यश्चा ह्लादकस्य सन्निकर्षोत्पन्नः पावनः पवनः शरीरमुल्लासयति; समन्त्रोच्चारणमन्नो समर्पिताभिरश्वत्थसमिद्भिर्ब्रह्मचारिणां ब्रह्मवर्चसमुपजायते इति दृष्टचरम्। अश्वत्थस्य शीर्णत्वचश्चूर्णीकृता नारिकेलतैलमिश्रिता लेपिता विसर्पादीनि

इमानि निवर्त्तयन्तीति अनुभवसिद्धमिदमखिलानां मनुष्याणाम्, एतत्पल्लवानि फलानि च चतुष्पाज्जन्तवो बहवोऽप्यजाद्यास्तथा अतुलां पुष्टिं प्राप्नुवन्ति।

यत्र कुत्रापि प्रस्थितः सन् मार्गस्थान् गो-ब्राह्मण-घृत-चौद्र-वनस्पत्यादीन् श्रेयस्कामः प्रदक्षिणीकुर्यादिति महानुभावो मनुः संस्मरति—'मृदं गां दैवतं विप्रं घृतं मधु चतुष्पथम्। प्रदक्षिणानि कुर्वीत प्रज्ञातांश्च वनस्पतीन्॥ ३१ ॥ अ ४॥' इति। प्रज्ञातान् प्रमाणप्रतिपन्नान् इत्यर्थः। किं च, सीताङ्गुदजादिभूमिकाभूषिता प्रतिसीरापिहिता नर्तकी, यथा किल स्वीयहावभावसविलासवाङ्मयादिना सामाजिकानां मनांस्यावर्जयन्ती तन्मयतापादनेन धर्ममुपदिशति, नन्वेवमेव मातेव पितेव दयितेव सुहृदिव च हितैषिणी भगवती श्रुतिर्गीता महाभारतादिषु—'जायस्व म्रियस्व' इति घटीयन्त्रवत् सततं वंभ्रम्यमाणम्, कदलीगर्भवदसारम्, इदं संसारचक्रम् अश्वत्थवृक्षरूपकेण विलक्षणं वर्णयति। तथाहि—ऊर्द्धमूलोऽमवाक्शाख एषोऽश्वत्थः सनातनः। तदेव शुक्रं तद्ब्रह्म तदेवाऽमृतमुच्यते॥ १ ॥ ( कठ, उ, ६, वल्ली )

तस्मिंल्लोकाः श्रिताः सर्वे तदुनात्येति कश्चन॥ इति,

ऊर्द्धमूलमधःशाखम् अश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १ ॥
अधश्चोर्द्धं प्रसृतास्तस्य शाखा गुणप्रवृद्धा विषयप्रवालाः।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके॥ २ ॥
न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा।
अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण दृढ़ेन छित्वा॥ ३ ॥
ततः पदं तत् परिमार्गितव्यं यस्मिन् गता न निवर्त्तन्ति भूयः
तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी॥ ४ ॥
( भ, गी, १५ अ ) इति च।

भुवनेऽस्मिन् मूलानि तावत् पादपानां भूमेरधस्तात् प्रसरन्ति, संसाराश्वत्थस्य मूलं तु उपरि प्रसरति ; वस्तुतस्तच्च ब्रह्मैव । शाखिनां शाखाः खलु नानादिक्षु तिर्य्यगूर्द्ध्वं च लम्बन्ते, एतस्य तु शाखा अवाच्याः ; तत्त्वत एता देवतिर्यङ्मनुष्यपश्वादय एव । वृक्षाणां किल संरोपण-फलप्रदानवृश्चनादिना आदिमध्यान्ता दशा दृश्यन्ते, अस्य तु बीजाङ्कुरवदनादित्वात्, कदोदपद्यत ? कदा विनङ्क्ष्यति ? इति सर्वदा सुखमिति वा सर्वदा दुःखमिति वा विनिश्चेतुं न शक्यम् ; यदेतस्य मूलभूतं भास्वरं च सर्वव्यापि च अविनाशि कालत्रितयस्य अवस्थात्रयस्य च साक्षी, तस्मिन्नेतस्मिन्नेव समस्ता लोका आयतन्ते, एतत्तु न कुत्राप्यायतते । अन्यच्च, अस्य छदाश्छन्दांस्येव, वेदत्रयोक्त-काम्यकर्मबाहुल्येन पर्णवद्वृक्षसंरक्षकत्वात् । विसिन्वन्ति यथा शब्दस्पर्शादयस्तत्रालुयम्, एवमेवास्य पल्लवा अपि प्रेक्षकाणामन्त-रङ्गाण्यावर्जयन्ति । शाखाभेदात् कालभेदात् कामभेदात् कृतं कर्माऽन्यथाऽन्यथा' इतुत्रयवर्णितरीत्या काम्यकर्मवाक्येरितोऽपि नित्य-मप्रचलिष्णुरयं संसारभूरुहः । स्वरूपमेतदीयमनिवर्तते मनीषां विमर्शकानाम् । प्ररूढ़बहुदीर्घमूलमिममश्वत्थानोकहम्, विषयस्रोतः-खिलीकारात्मकेन अनासङ्गनाम्नाहर्त्तनासिना छित्वा. मोक्षपथे गन्तु-मनसाम् अनसां चोपरोधादिकं निवर्त्य, यदवगमनेन एतम् आवर्त्तं नावर्त्तन्ते, पुनः तत्स्वरूपान्वेषणाय यततेति सचमत्कृति बोधयति यतिमार्गम् ॥ अपि च, यः अस्वस्थ उपसद्याऽश्वत्थं शुचिस्तपोकेशं हृदये ध्यात्वा, सश्रद्धं प्रदक्षिणं प्रक्रमते, स सन्नाह्याभ्यन्तर एवाति-स्वस्थो भवेन्नूनम्—'श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः ।' इति गीतारहस्यात् ॥ श्रीमन्महाभारते—आश्वमेधिकपर्वणि ११ श तमाध्याये ( वैष्णवधर्मपर्वणि ) अश्वत्थमाहात्म्यं युधिष्ठिराय भगवता बहुधा वर्णितम्—प्रथमतस्तावत् द्वादशी-विषुव-चन्द्रसूर्य्यायनायण-

श्रवण-व्यतीपाताऽश्वत्थदर्शनभगवद्दर्शनादिषु विष्णुगायत्रीं जप्यां बोधयति। अनन्तरं च भगवान् उपदिशति—

"अहमश्वत्थरूपेण पालयामि जगत्त्रयम् ।
अश्वत्थो न स्थितो यत्र, नाहं तत्र प्रतिष्ठितः ॥ २१ ॥
यत्राऽहं संस्थितो राजन्! अश्वत्थस्तापि तिष्ठति ।
यस्त्वेनं प्रहरेत् कोपान्मामेव प्रहरेत् तु सः ।
तस्मात् प्रदक्षिणं कुर्यान्न छिन्द्यादेनमन्वहम् ॥" २२ ॥

इत्यादि, ११ श तमाध्यायेऽपि इत्थमुपदिष्टं भगवता—

'नन्वहं शङ्करश्चापि गावो विप्रास्तथैव च ।
अश्वत्थोऽमररूपं हि त्रयमेतद्युधिष्ठिर! ॥ ३ ॥
एतत्त्रयं हि मन्त्रो नावमन्येत कर्हिचित् ।
अवमानितमेतत्तु दहत्यासप्तमं कुलम् ॥ ४ ॥
अश्वत्था ब्राह्मणा गावो मन्मयास्तारयन्ति हि ।
तस्मादेतत् प्रयत्नेन त्रयं पूजय पाण्डव! ॥ ५ ॥ इति ॥

किं बहुना, जर्मणि-जनपदवैज्ञानिकैश्च आर्याचारतत्त्वावगन्तृभिः—'आपो वै सर्वा देवताः' इति श्रुत्वा पञ्चीकरणप्रक्रियया च चतुर्गुणशालिनीष्वप्सु बहुविधस्नानेन, अश्वत्थादिदिव्यतरुच्छाया-पवनादिनिषेवणेन, सात्त्विककन्दमूल-फल-क्षीराद्याहरणेन सर्वेषामपि सिध्यतः श्रेयःश्रेयसी ऐहिकामुष्मिके इति नियत्यु शाकसङ्घद्वारा ( Natnal Cute Society ) भारतवर्षे सर्वत्रापि प्रख्यापितमिति प्रवर्त्तन्ताम् आर्यावर्तवासिनः पिप्पलाद्याराधनजन्यस्वास्थ्यलाभायेति शम् ॥

---

## द्वितीयोऽङ्कः।

### राजमार्गः।

ततः प्रविशति माण्डव्यः सङ्कटश्च।

माण्डव्यः। वयस्य! अपि कुशलं भवतः?

सङ्कटः। किं वा मन्यते भवान्।

माण्डव्यः। शरीरदर्शनात् कुशलोभवानिति मन्ये।

सङ्कटः। न सम्यगभिहितं भवता।

माण्डव्यः। कथमिव?

सङ्कटः। यतो गुरुणा सममेव देशे देशे निराहारो भ्रमामि।

माण्डव्यः। तत्रभवत आश्रितजनशरण्यस्य महाराजदण्डिदेवस्याधिकारे महर्षेर्दुर्व्वाससः शिष्यवर्य्यस्य भवतोऽपि निराहारतेति कथं सम्भाव्यते (विहस्य) अथवैवंस्थूलमुदरं निराहारस्य किं कदाचित्सम्भवति पुरतः?

सङ्कटः। वयं सन्न्यासिनो हरीतकीफलमात्रभक्षणाद्गुरुदेवप्रसादकणिकाभक्षणाद्वा कथमेतादृशो न भविता स्म।

माण्डव्यः। वयस्य! कियन्मात्रा सा गुरुदेवप्रसादकणिका? (सङ्कटोदरं दर्शयित्वा) हं हो! आर्य्यमिश्राः! पश्यन्तु पश्यन्तु किल स्थूलोदरमवलोक्य के नाम गुरुदेवप्रसादकणिकामात्रभोजनानुमानं करिष्यन्ति; भवतु; एतेन कथं भवतः सुखाभावमवैमि?

सङ्कटः। शिष्यभावमुपागतस्य मे परगृहवासः परखाद्यहारे विदेशाटनञ्च सुखस्य कारणमिति मर्म्म सङ्कुचितं; यतस्तपोवन-

निवासिनां वन्यफलमूलाशिनां यत् सुखमुपजायते किमाम तद्देशान्तरभ्रमणशीलानां माहृशानां, विशेषतोऽस्य महर्षेरन्तेनिवासिनाम् ।

माण्डव्यः । ( सोद्वेगम् ) कथमेतावानाक्षेपो भवति भवादृशानां महाजनानामपि ।

सङ्कटः । वयस्य ! नवागतोऽसोति कथं निवेदयामि भवते, यतः स नाम कदापि तूलानल इव झटिति रौद्रमूर्त्तिधरः कमपुरुषाद्धस्तान्निपातयति कस्यापि श्रियमपहरति दम्पत्योश्च सम्भोगसुखादेकतरं वियुङ्क्ते । अधुना तु कुत्र यात इति कथयामि श्रूयताम् ।

माण्डव्यः । उच्यतामवहितोऽस्मि ।

सङ्कटः । वयस्य ! श्रुतपूर्व्वमिदं यत् मृगयां गतो महाराजदण्डिदेवो वने लेभे कामपि घोटकोमिति ।

माण्डव्यः । अथ किं ; तेनैव कारणेन तद्गतमना राजा राजकार्य्यमपहाय विदूषकेण सह प्रमदं सदैवोपास्त इति गुरुमुखादाकर्णितम् ।

सङ्कटः । तेन पुनर्महर्षिदण्डिदेवयोः कोऽपि निगूढ़ः सम्बन्धो घटितः ।

माण्डव्यः । कथमिव ; आदितः श्रोतुमिच्छामि ।

सङ्कटः । श्रूयताम् ; पुरा कदापि सकलदेवसमाजोपसेवितायां सिद्धविद्याधरादिभिर्मण्डितायाममरेश्वरसंसदि सहस्रवार्षिकतपःक्लिष्टेन्द्रियो देवभोगमुपभोक्तुं स महर्षिः प्रस्थितः । ततस्तत्र तत्तोषणाय देवराजेनाहूतोर्व्वशी सदाचारपूतमार्य्यवेशधरमपि महर्षिं हतवुद्धा यौवनसुलभचपलतयावजहास । तेनातिकोपनः स मनुष्यभोग्या घोटकी दिवसे नारी च निशायां भवेत्युक्ता । यावत् तस्मात् स्थानादपसर्त्तुमुद्यतः, तावदेव सा दुःखिता वाजिवं मरणमुपागता ।

माण्डव्यः । ततस्ततः ।

सङ्कटः। अथ तत्पक्षपातिना देवराजेनानुनीतो महर्षिरष्टवक्र-मिलनान्तस्य शाप इत्युक्त्वा प्रययौ।

माण्डव्यः। अहो! महाप्रभवो महर्षिर्यतो देवा अपि तत्-प्रभावहततेजसः, ततस्ततः।

सङ्कटः। ततश्च सुखभोगलालिता नन्दनवनविहरणपरायणा सा वने वने दिवा घोटकी, रात्रौ च नारी भूत्वा दुःखेन विचरति। इतः खलु त्रिदिवे काचित् सभा समाहूता, तत्र च देवाः कम्बसुन्दरी-प्रभृतीरप्सरसस्तद्विनोदनायान्यमपि देवदूतं प्रेषितवन्तः। सोऽपि "काचित् घोटकी भूमण्डलरत्नमितस्ततः पर्य्यटतीति मृगयागताय राज्ञे न्यवेदयत्। ततो राजा समन्ताद्भ्रमन् तामवलोक्य धृत्वा च राजधानीमानीतवान्।

माण्डव्यः। अहो भाग्यवान् खलु महाराजो दण्डिदेवः। यशो-पाध्यायस्य किं वृत्तम्।

सङ्कटः। स तावदन्तः कौतुकभारमुद्वहन् राजकुलं प्रस्थितः।

माण्डव्यः। सन्न्यासिनो ब्राह्मणस्य कथमेव व्यवसायः।

सङ्कटः। अयि भो अनीतिज्ञ! कामादिपरिचर्य्या कस्मा एव न रोचते!

माण्डव्यः। अन्येषां तावद्भवतु न पुनरस्य महर्षेः; भवतु किं वृत्तमधुना राजकुलस्य?

सङ्कटः। तदपि श्रूयताम्; महाबलो यदुकुलधुरन्धरो भगवान् वासुदेवो देवराजोपदिष्टनारदमुखादुर्व्वशीलाभवृत्तान्तमभिज्ञाय मात्सर्य्यपरायण इव प्रधानामात्यमुद्धवं दूतरूपेण तस्मै राज्ञे प्राचो-दयत्। अवन्तीराजस्तु तस्यार्थंभूतामनङ्गीकृत्य युद्धाय कृतमति-र्मन्त्रिभिः सेनापतिना च सार्द्धं किंकर्त्तव्यविमूढो मन्त्रागारे मन्त्रयत इति ध्यानावगतवृत्तान्तस्तमुत्साहयितुं प्रस्थितः स महर्षिः।

माण्डव्यः । अत्रमन्त्रणासु कथं पुनरस्य ब्राह्मणस्य वाचामवसरः ।

सङ्कटः । तत्र ब्राह्मणस्य स्वाभिलाषमिद्धिरप्यस्ति । यद्येष दण्डिराजो भीत्या श्रीकृष्णाय समर्पयेदुर्व्वशीं तदाष्टवज्रमिलनं कथं भवेदित्याशङ्कमानो वातावर्त्तपरिभ्रमशालतेव स हि चञ्चलते ।

माण्डव्यः । अहो सहर्षरात्मन्यविश्वासः । किं न जानाति भगवान् ; ब्राह्मणवाक्यं विधिरपि नान्यथा कर्त्तुं समोहत इति ।

सङ्कटः । कथं न जानाति, किन्त्वेवं मन्ये जातिमात्रसुलभलघुतया स एवमनुतिष्ठन्त्येव ।

माण्डव्यः । वाढ़मेतत्तथाप्यदपि मनं क्षत्रधर्म्मपरायणाः क्षत्रिया हि न सहन्ते परपदानतिम् ।

सङ्कटः । तथापि को नाम बलवता सह युध्यते ; अतः सुष्ठु खल्विदमुच्यते यत्—

समरः सुखकारणं मर्मेन विधेयो बलिना समं ततः ।
नटिनीतलवेलवीरुधा-मिव सङ्गस्य विनाशनं कुतः ॥

अतः सम्भावयामि देवमानुषाणां विरोधो मानुषाणामेव ध्वंसाय सम्पत्स्यते ।

माण्डव्यः । अथ पृच्छामि, कानि नामाष्टवज्राणि ?

सङ्कटः— चक्रं हरेः पुरहरस्य महात्रिशूलं
स्कन्दस्य शक्तिरुदकाधिपतेश्च पाशः ।
अस्त्रो विधेरमिलता ननु चण्डिकाया
दण्डो यमस्य कुलिशं त्रिदिवाधिपस्य ॥

माण्डव्यः । यया किलैकया शक्त्या त्रिभुवनं कम्पते महाप्रलयशङ्कया, ताः सर्व्वा इह मिलिता भविष्यन्तीति कम्पते मे हृदयं, न जाने किमतः परं भविष्यतीति ।

सङ्कटः । वयस्य ! ये नाम जगन्ति सृजन्ति, यदि तावन्ते हि

नाशयन्ति तदा का परिभावना तत्क्रीडनकवदस्माकं; तदेहि किमपि वृक्षतलमासाद्य विश्रामसुखमनुभवावः ।

( इति प्रस्थितौ । )

## मन्त्रणागारम् ।

( ततः प्रविशति मन्त्रिभ्यां सेनापतिना चानुगम्यमानो राजा । )

प्रथममन्त्री । महाराज ! न शोभते भवादृशस्य क्षत्रकुलोद्दीपनदिनमणेरधुना मृषा पराभवशङ्का ; क्षत्रियवदूर्ज्जस्वलमात्मानमव्याकुलः सन् संयम्य स्वबलवृद्धाय यततां, यतः खलु—

उपायादीन् भावानविचलितबुद्धा स्थिरयितुं
प्रयत्नः कर्त्तव्यः परगणविचारोऽपि सुनयैः।
स्वपक्षाणां वृद्धावथ परबलानामपचये-
ऽप्यलं देशः कालो विधिवदवलोक्यो नृपतिभिः ॥

न पुनः कदापि परावर्त्तनं व्यतिभाते क्षत्रियाणाम् ।

द्वि-मन्त्री । यदि तावत् स्वचित्तदौर्ब्बल्येण परान् विजेतुमाशयन्ति भवन्तस्तदा भवद्वृत्तिलाभकृतार्थानामस्माकं परिपालनेन मनीषया च किम् ?

प्र-मन्त्री । प्रबले रिपावपि पृष्ठप्रदर्शनमविधेयं क्षत्रियाणां ; किं न विदितमस्ति यथा पुरा किल ये नाम क्षत्रप्रधाना मानधना रघुरामचन्द्रकार्त्तवीर्य्यार्ज्जुनादयः सूर्य्येन्दुवंशावतंसा भूमिपालाः—

वीर्य्योत्कर्षातिदर्पोद्धतसकलमहोमानशौर्य्यातिरेक-
प्रोद्यद्दोर्दण्डबाहुप्रहतसटगणच्छिन्नमुण्डालिमालाः ।
प्रालम्बोद्दामसत्ता रणशिरसि सदा पूर्ब्बवंशोद्भवा ये
तद्वंशे लब्धजन्मा त्वमिह किमिति भो दीनचित्तोऽसि राजन् ॥

सेनापतिः । देव !

क्रोडावलुण्ठितबाहुदण्डनमितश्मश्रुच्छिरोभूषणो-
द्दीप्ताङ्गुलयुगो धनुःशरकरो वीरः पुरस्त्वं भवत् ।
शौर्य्योन्मत्तपदाग्रताण्डवमहालीलाविलासी रणे
वार्द्दद्रुह्यनृपातिभीतहरितस्त्रस्तोऽसि धिग्गौरवम् ॥

तदनुजानातु मां देवः सादिसैन्यपरिवारस्तस्यैव यदुकुल-कलङ्कस्य समरकण्डूयनमपनेष्यामि। मिथ्याधिष्ठापितदैवमहिमा स हि पाण्डवपक्षपातबलातिदृप्तः सर्व्वानवजानातीव तरसा। अन्यथा—

निष्कामो यदि केन दारहरणं कामार्त्तजीवोद्गमो
निःसङ्गो यदि केन पाण्डवगणे वा पक्षपातस्थिरात् ।
पूर्णब्रह्म यदि प्रमादशतकृत् केनात्र भूमण्डले
सिन्धावावसतोऽश्वरो यदि भिया केनास्य वार्द्दद्रुह्यात् ॥

राजा ( स्वगतम् ) सर्व्वं वेद्मि किन्तु—

सा मे भवेद्यदि किमन्यविभूतियोगैः
सालङ्करोति हृदयं यदि भूषया किम् ।
दत्ते च सा यदि सुखं त्रिदिवेण किं मे
वक्त्रामृतं यदि किमन्यसुधारसेन ।

( प्रकाशं ) हन्त भो मत्प्राणप्रतिमपारिषदाः ।

सत्वत्वं ननु वेद्मि कार्म्मुकभृतां जानामि कीर्त्तिं परां
कृष्णं पाण्डवपक्षपातिनमहं जानामि सर्व्वं किल ।
नो यानासनयोः किमप्यवगतः सन्दिग्धमार्गे स्थितो
हा धिक् किं करवाणि तद्वदत मां कार्य्यावबोधाक्षमम् ॥

प्र-मन्त्री । राजन् । युद्धे कतरः पक्षो जेता भविष्यतीति निश्चयो नास्ति । तद्भवान् कथमादावेव तदमङ्गलमाशङ्क्य दुर्म्मायमान एवं कापुरुषलक्षणमक्षत्रिय इव प्रकटयति ; किञ्च विदितमस्ति भवताम् ।

ज्वालोद्दीपितदिक्चयाकुलरुचिर्यद्वह्निराभाति वै
यद्वा कालभुजङ्गभीषणफणानिर्य्यातहालाहलः।
यद्वा शत्रुविघातनोद्यतमहाखड्गः सुधारोज्ज्वलः
सत्वानां प्रकृतिस्तदारिविजये व्यग्रा स्वतो ह्लादिनी॥

महापर्व्वतयोरिव भवादृशयोः प्रबलबले महासमरे पद्यद्वयम-वलोक्य को नाम पराजयं प्रागेवाशंसेत।

राजा। बहवः किल पाण्डवादयः प्रधानयोधाः कृष्णस्य सहाया, अतो न पर्व्वतयोर्जलपर्व्वतयोरिति मन्यामहे। यतो—

जलान्तर्गाहितं सम्यगूर्द्धतः पतिता शिला।
न जातु प्रस्तरस्यान्तस्तूर्द्धतः पतितं जलम्॥

प्र मन्त्री। किन्तु कालेन जलमपि कोमलं कठिनस्य प्रस्तर-स्याप्यन्तर्ज्जर्जरीकर्त्तुं शक्नुयात्, न पुनः कदापि जलस्यान्तर्निर्भेत्तुं शक्नुयात् प्रस्तरमपि।

राजा—तद्भवान् किमस्मदभियानमादौ मन्यते।

प्र-मन्त्री। देव! नव; स्वयमभियानाद्विनिवृत्तः सन् राज्या-ङ्गानि सुदृढीकृत्य योगक्षेमादीन् सुनिपुणमवेक्षताम्।

राजा। यद्भवद्भ्यो रोचते, परन्तु केवलवंशगौरवाभिमानिनो निर्व्विषकालसर्पस्येव निर्व्वलस्य मे ये ये मामकाः सन्ति, तेऽप्यस्मिन् महाव्यसने प्रतिद्वन्द्विनो वीटामीना वा भविष्यन्त्येव, अतस्तानुपाया-दीनवलम्ब्य किं फलं तदेवमन्यमानयिदं निवृत्तिमङ्गीकरोमि वीटकीमप्यर्घभूतां ददामि तस्मै प्रबलाय।

(सोद्वेगं तिष्ठति।)

प्र-मन्त्री। देव! तदधुना कर्त्तव्यविचारप्रस्ताविष्वेव दौर्म्म-नस्यं नै खलु न खलु शोभते भवादृशानाम्। कार्य्यमारभ्य कार्य्य-विरोधिनः प्रतिकूलभावानवश्यमेव धिया विचार्य्य नाशयामः।

शार्त्तः को न जहाति शीतलजलं यत् शापदं प्राणिनां
नानादोषसमन्वितं प्रियवपुस्त्यक्तुं न को वाञ्छति ।
येनाग्निर्ज्वलतीन्धनेन तमिदं निर्व्वापयत्येव
तदात्मीया अपि ये शठा न किमु ते हेयास्त्वया दूरतः ॥

सेनापतिः । क्षुद्राः खलु निजाधिपत्यनाशशङ्कया तिमिराच्छन्ननयनाः शुभाशुभमनवेक्ष्य निवृत्तिमङ्गीकुर्व्वन्ति ।

राजा । सेनापते ! सर्व्वं जानामि, किन्तु नीतिषु केवलवीरता न शोभते, तद्विरम ।

सेना । ( स्वगतं साक्षेपम् )

धिक् साम्राज्यमिदं प्रधानपुरुषान् धिङ् मादृशान् योधिनो
धिग् बुद्धिं कुफलप्रदां धिगपि तत् क्षत्रान्वये जन्म च ।
धिग् धिङ्नापतिवृत्तिभागिनमिमं मां धिक् कृपाणं धनुः
सम्भ्राभक्ततायतां नरपतेर्धिग् वीर्य्यमेतच्च धिक् ॥

प्र-मन्त्री । सेनापते ! केवलं बाहुवीर्य्यमेव क्षत्रत्वं मन्यमान एवं प्रलपति भवान्, न तावच्चिन्तयति किमुदर्कफलमिति । कच्चिन्न श्रूयते शास्त्रेषु खलु दण्डमधमं वर्णयन्ति नीतिवेदिन इति । तथाच—

कार्य्यं पुरा नृपतिभिः प्रशमय्य साम्ना
कृत्वा वशान् वितरणेन ततः परांश्च ।
अन्योऽन्यभेदपटुतां प्रविधाय सम्यक्
योज्यः क्रमेण नयविद्भिरयं हि दण्डः ॥

द्वि-मन्त्री । सत्यमेतत् ; सेनापते ! निवर्त्तस्व ।

सेना —किन्तु यदि नाम झटिति चतुरङ्गबलसमन्वितः प्रतिद्वन्द्वी निशीथे नगरीमिमामवरुन्ध्यात्तदा क उपायः प्रयोक्तव्यः ।

प्र-मन्त्री । तदा झटित्येव सर्व्वानुपायान् विचार्य्य कार्य्यक्षेत्रेऽवतरिष्यामः ।

द्वि-मन्त्री । सेनापते ! तूष्णीमास्व ।

प्र-मन्त्री। सेनापते! भवान् दण्डधरस्तत्कारणात्तो दण्डं बहु मन्यते। अहञ्च शमप्रियो वृद्धः शममेव नीतिं मन्ये। ततः खलु कर्त्तव्यं स्निग्धचेतसा स्मरणीयं यतो विचारव्यभिचारे न फलति कार्य्यम्—

अतिप्रबलमपि युद्धं मतं क्षत्रियाणाम्।
यदा प्रबलेन चक्र्यात्तदा विचार्य्य पूर्व्वतः॥

द्वि-मन्त्री। किमतोऽपि वक्तव्यमस्ति।

दैवे स्थिरे सति कुतः क्षमता रिपूणां
स्प्रष्टुं कचाग्रमपि सूर्य्यकुलावतंसे।
सिंहान्तरात् किमु बिभेति कदापि सिंहः
किं वा करोति पवनो धरणीधरस्य॥

प्र-मन्त्री। सेनापते! यावत्ते कृष्णपुरःसरा नाभिगच्छन्ति, तावदेव स्वबलरक्षार्थं यत्नः करणीयः। दुर्गद्वारञ्च सुसन्धातव्यं, तच्च पुनर्महावीरभटव्रातैर्मदमत्ततुरङ्गमातङ्गघटाभिर्नालीकनाराचप्रासपट्टिशतोमर भल्ल-व्याघ्रनखादिप्रहरणैश्च पूरयित्वा प्रतिक्षणं युद्धाय कृतनिश्चयैरिव स्थातव्यं सर्व्वैस्तद्बहिर्भूमिभागे लौहशलाकाः सुदृढं प्रोथयितव्याः सर्व्वतः। तत्र तत्र भवत्परिचालितसेनाकटकः स्थाने स्थाने सन्निधापयितव्यः कोशलकेकयमगधमैथिलनराधिपा आत्मकुटुम्बिनो दूतादिप्रेषणेनात्र प्रापयितव्याः; एवञ्च ततो राजनीतौ प्रयुक्तायां प्रबलोऽपि स सहसास्मानभियातुं न शक्नुयात्, क्रमेण काले व्यतीतेऽभियोक्तारोऽपि ते हतोद्यमा भविष्यन्त्येव। तदा शोणितपातं विना शान्तिरवश्यम्भाविनी।

राजा। युक्तमुक्तं मन्त्रिणा; तदधुना भवद्भिरपि स्त्रीबालवृद्धा अतः स्थानादन्यत्रापसारयितव्या भक्ष्यद्रव्याणि च निरोद्धव्यानि। (विमृश्य सखेदं) न जाने को नामास्य विरोधस्योदर्कः सम्भवितेति।

द्वि-मन्त्री। महाराज! वयमप्यन्यत् घोटकरत्नं प्र दा

तद्गीता इव प्रतारयिष्यामस्ते चानेन मुखिता नूनं स्वनगरं प्रति गमिष्यन्तीति मन्यामहे।

राजा। मन्त्रिन्! उद्दवश्चवसा सोऽपि मार्गो नष्टः।

द्वि-मन्त्री। बाढं स्मरामि।

राजा। सेनापते! तदिदानीमतन्त्रितो यथाकार्य्यमनुतिष्ठ।

मन्त्री। कः कोऽत्र भोः।

प्रतीहारः। (प्रविश्य) जअदु जअदु भट्टा।

मन्त्री। राजादेशात् सेनापतिमत्र जयत्सेनमाकारय।

प्रति। जं भट्ट आणवेदि (प्रस्थितः पुनः प्रविश्य) देओ! कोवि उग्गतेजा मुनी वाहिरदुवारे चिट्टदि, इच्छेदि अ महाराएण सह साच्छात् कादुं, जइ प्पमादो होदि तदा आणेमि।

राजा। गच्छ, पुरोहितकारितातिथ्यमेनमानय।

प्रति। जं आणवेदि भट्टा (प्रणम्य प्रस्थितः)।

राजा। (उत्थाय) मन्त्रिन्! तपस्विदर्शनयोग्यस्थानं मे दर्शय।

मन्त्री। महाराज! इत इतः।

(प्रस्थिताः सर्व्वे)।

(ततः पटोत्क्षेपेण प्रविशति मन्त्रिभ्यां सेनापतिना
च सह राजा।)

मन्त्री। महाराज! इदमेवाग्निशरणमलङ्क्रियतामासनमत्र।

राजा। (उपविश्य) मन्त्रिन्! अपिनामायमुद्दवोऽन्यो वा कोऽपि मुनिः।

(मुनिमवलोक्योत्तिष्ठन्ति सर्व्वे।)

पुरोहितः। (प्रविश्य) भगवन्! पश्यतु तावदयं महाराजो भवत्-सन्माननायासमादुत्थाय विनीतवेशेनापेक्षते।

मुनिः। (प्रविश्य) महागमिवैतत् जनकुलभूषणस्य राजेन्द्र-चूड़ामणेर्महाराजानन्दसिंहदेवस्य।

(क्रमशः)

## दुर्गेशनन्दिनी।

### तृतीयः परिच्छेदः।

### सा त्वमुत तिलोत्तमा?

परेद्युः प्रदोषकाले जगत्सिंहस्य आवासकक्षे आयेषा, ओसमानो वैद्यश्च पूर्व्ववत् निःशब्दमासत। पर्य्यङ्कासीना आयेषा स्वकरेण वीजयति। वैद्यश्च पुनः पुनर्जगत्सिंहस्य नाड़ीं परीक्षते स्म। अचेतनस्तावत् जगत्सिंहः। वैद्येनोक्तपूर्व्वम्—तस्यामेव रजन्यां ज्वरविरामसमये जगत्सिंहस्य मरणं सम्भवति। उत्तीर्णे तस्मिन् काले दुश्चिन्ता त्याज्या, स नूनं जीविष्यति! (अद्य) ज्वरविरति-काल आगतप्रायः। अतः सर्व्व एव विशेषेण सोत्कण्ठाः समवर्त्तन्त। वैद्यो मुहुर्मुहुः नाड़ीमनुभूय—क्षीणा, क्षीणतरा, ईषत् सबलेति भूयोभूयः अव्यक्तमुच्चारयति। सहसा तस्य मुखं विच्छायमभवत्. स उवाच—"कालः समागतः।"

आयेषा ओसमानश्च निस्पन्दम् अशृणोत्। वैद्यश्च नाड़ीं पर्य्य-वेक्षमाण एवावर्त्तत।

अथ क्षणान्तरे भिषजोक्तं—"शोच्याम् अवस्थां गतोऽसौ। आयेषाया मुखं म्लानतरं सञ्जातम्। सहसा जगत्सिंहस्य विषमा मुखभङ्गिः संजाता। मुखमण्डलं श्वेतं समभवत्। हस्तौ बद्धमुष्टिकौ जातौ। नयने अलौकिकं स्पन्दनं सम्प्रवृत्तम्। आयेषा

परिज्ञातवती—अचिरेणैव स सर्व्वथा कृतान्तग्रासं यास्यति। (न विद्यते विलम्बः कृतान्तग्रास-पूर्णतायाम्।) आसीत् समासीनो वैद्यराजो हस्ते औषधपात्रमादाय। स एवं लक्षणं दृष्ट्वैव अङ्गुलिभिस्तस्य मुखव्यादानं कृत्वा तदौषधं पाययामास। ओष्ठप्रान्तात् (सृक्कणोतः) औषधं विगलितम्। किञ्चिन्मात्रम् उदरगतमभवत्। उदरगत एव औषधे रोगिणः शारीरिकी अवस्था परिवर्त्तनं गन्तुमारब्धा। क्रमेण मुखस्य विकटभङ्गिः दूरं गता! तत्र स्थिरा कान्तिराजगाम च। अस्वाभाविकं श्वेतत्वं गतम्। रक्तसञ्चलनलक्षणं च प्रकाशितम्। शिथिला जाता हस्तमुष्टिः। स्थिरत्वं गत्वा नयनं पुनरपि निमीलितमभवत्। वैद्यराजः साभिनिवेशं नाड़ीम् अनुभूतवान्। सुचिरं परीक्ष्य सहर्षमुवाच—"नास्ति पुनश्चिन्ताकारणम् रक्षां गतोऽयम्।"

ओस्मानः अपृच्छत्—"किं ज्वरविरामो जातः?"

भिषक् प्रत्युवाच—"जात एव।"

प्रफुल्लतां गतम् आयेषायाः ओस्मानस्य च मुखमण्डलम्। भिषगवदत्—नास्ति पुनः कापि दुश्चिन्ता। न च प्रयोजनं ममोपवेशनेनात्र। निशायाः प्रहरद्वयं प्रतिदण्डम् एतदौषधं पाययितव्यम्। एवमुक्त्वा स प्रस्थितः। ओसमानश्च द्वित्रान् दण्डान् तत्र स्थित्वा आवासगृहं जगाम। आयेषा यथापूर्व्वं पर्य्यङ्कासीना औषधादिकं समपाययत्।

मध्यरात्रे नयनमुन्मील्य प्रथममेव आयेषायाः सुखप्रफुल्लमास्यमपश्यद्राजकुमारः। कटाक्षविक्षेपभावमवलोक्य प्रतिभातं तस्याः यत् तस्य बुद्धिभ्रंशः सञ्जातः, यत् स किमपि वक्तुं चेष्टमानोऽपि विफलप्रयत्नो भवतीति। अथ राजपुत्रः चिरात् आयेषां प्रति दृष्टिं दत्त्वा प्राह—"कुत्रास्मी"ति। दिवसद्वयानन्तरं तस्य एषा एव प्रथमा वाक् (स्फूर्त्तिः)।

आयेषा प्रोवाच—"कतलुखानस्य दुर्गमध्ये।"

राजपुत्रः पुनरपि पूर्व्वं यथा स्मरणाय वर्त्तमानोऽवर्त्तत। सुचिरं तथा स्थित्वोवाच—"कथमहमत्र" ?

आयेषा प्राक् निरुत्तरं तस्थौ। ततः प्रोवाच—'पीड़ितो भवान्।" राजपुत्रश्चिन्तयन् सशिरःकम्पमुवाच—"नहि, नहि अहं खलु वन्दि-भावं गतोऽस्मि।" ब्रुवत एतद्राजपुत्रस्य मुखं भावान्तरं गतम्।

आयेषा निरुत्तरा तस्थौ। ज्ञातं तया राजपुत्रस्य स्मृतिशक्तिः पुनरुद्दीप्ते ति।

क्षणान्तरे राजपुत्रः पुनरपृच्छत्—"कात्वम् शुभे ?"

"अहमायेषा।"

"का पुनरायेषा ?"

"कतलुखानस्य नन्दिनी।"

राजपुत्रः पुनरपि क्षणं निस्तब्धं तस्थौ। एकदा सुचिरं कथयितुम-शक्तः कियन्तं कालं नीरवं विश्रम्य प्रोवाच—"कति दिनानि अहमत्र स्थितः ?"

"दिवसचतुष्टयम्।"

"किमद्यापि मान्दारणदुर्गं भवतामधीनं वर्त्तते ?"

जगत्सिंहः पुनरपि कियन्तं कालं विश्रम्य अभाषत—"किं तावत् वीरेन्द्रसिंहस्य जातम् ?"

"वीरेन्द्रसिंहः खलु कारागृहे वर्त्तते। अद्यैव तस्य विचारो भविष्यति।"

जगत्सिंहस्य मलिनं मुखं मलिनतरं सञ्जातम्। पृष्टं तेन "कीदृशी अवस्था अन्येषां पौरजनानाम्।"

आयेषा सोद्वेगमुवाच—"नाहमवगता सर्व्वं विषयम्।" राजपुत्रः आत्मनैव किमभाषत। कस्याश्चिन्नाम निर्गतं तस्य कण्ठात्। आयेषया तत् श्रुतम् "तिलोत्तमेति।

आयेषा जोषमुत्थाय मन्दं मन्दं औषधभाजनात् औषधमानेतुं गता। राजकुमारस्तस्याः दोदुल्यमानकुण्डलयुगलेन अलौकिकं देहलावण्यं निरैक्षत। आयेषा औषधमानीतवती। राजपुत्रस्तत् पीत्वावदत्—"दृष्टा रोगमोहेन मया स्वप्ने काचित् दिव्या देवकन्या मम शिरसि आसीना शुश्रूषमाणा, सा त्वम् उत तिलोत्तमा?" आयेषा प्रत्यभाषत—"भवता तिलोत्तमा स्वप्ने दृष्टा भवेत्।"

---

## चतुर्थः परिच्छेदः।

### अवगुण्ठनवती।

दुर्गजयाद्दिवसद्वयं गतम्। दुर्गमध्ये आसीत् सभायां समासीनः कतलुखानः। पारिषद्याः दक्षिणतो वामतश्च श्रेणीबद्धास्तिष्ठन्ति। पुरतो भूमिभागे सहस्राणि जनानां निःशब्दं वर्त्तन्ते। अद्य वीरेन्द्रसिंहस्य विचारो भविष्यति।

कतिचन आत्तशस्त्राः प्रतीहाराः शृङ्खलितं वीरेन्द्रसिंहं सदसि समानीतवन्तः। तस्य आकृत्याम् नासीत् भीतिचिह्नलेशोऽपि। प्रदीप्ताभ्यां नयनाभ्याम् अग्निकणाः विस्फुरिताः। नासिकारन्ध्रं वर्द्धितायतनम् अकम्पत। स च दशनैरधरं दशति स्म। कतलुखानः समानीतं च तं पप्रच्छ—

"वीरेन्द्रसिंह, दण्डन्ते विधास्यामि। कथं त्वया मे विरुद्धम् आचरितम्?"

स्वकीयाकृत्याकुलितप्रकटितं क्रोधं संहृत्य वीरेन्द्रसिंहः प्रत्यभाषत—"किं च ते विरुद्धमाचरितम् तत् प्राक् कथनीयम्।"

कश्चित् पारिषदः प्रोवाच—सविनयं (उच्यताम्)

कतलुखानः प्रोवाच—"कथं मम आदेशात् अर्थं सेनां च प्रेषयितुं न सम्मतं त्वया?"

वीरेन्द्रसिंहोऽकुतोभयमुवाच—"त्वं राजद्रोही दस्युश्च कथं तुभ्यम् अर्थः सेना वा दातव्यौ ?"

प्रेक्षकाः समपश्यन्—वीरेन्द्रेण स्वशिरः स्वयमेव छेत्तुम् उपक्रान्तमिति।

क्रोधेन कतलुखानस्य कलेवरं प्रकम्पितम्। अभ्यस्तः आसीत् स सहसा क्रोधं संहर्त्तुम्। अतोऽवलम्ब्य किञ्चित् धैर्य्यम् अभाषत—"ममाधिकारे वसता कथं त्वया मोगलैः सह संहितम्।"

वीरेन्द्रः प्रत्यभाषत—"कुत्र ते अधिकारः ?"

कतलुखानः क्रुद्धतरोऽभाषत—"श्रूयतां दुरात्मन्। स्वकर्मफलं प्राप्स्यसि। आसीदधुनापि ते जीवनाशा। परं मूर्खस्त्वं स्वदर्पेण आत्मानं जिघांससि।"

वीरेन्द्रसिंहः सगर्व्वं विहस्योवाच—"कतलुखान, सम्बुद्धबन्धम् तव पुरतः आगतस्य मम नासीत् करुणाप्रत्याशा। तत्सदृशस्य शत्रोः कारणेन यस्य जीवनरक्षा भवति, अलं तस्य जीवनेन। आशीर्भिस्त्वामभ्यर्च्य म्रियेयम्। परं त्वया मे पवित्रं कुलं कलङ्कितम्। त्वया मे प्राणेभ्योऽपि प्रियतरं रत्नम्"—नासीत् वीरेन्द्रसिंहः वाक्यमिदं वक्तुं समर्थः। तस्य कण्ठस्वरः रुद्धः। नयने वाष्पाकुले सञ्जाते। निर्भीको गर्व्वितो वीरेन्द्रसिंहः अधोमुखम् अरोत्सीत्। कतलुखानः स्वभावेनैव निष्ठुरः। स तथासीत् निष्ठुरः, यथा परपीड़ने तस्य उल्लासः समजायत। दाम्भिकस्य वैरिणः ईदृशीमवस्थामालोक्य अस्य मुखं हर्षोत्फुल्लं जातम्। सोऽभाषत—"वीरेन्द्रसिंह, किं त्वयाहं न किमपि याचनीयः। विचिन्तय—समासन्नस्ते अन्तिमकालः।"

येन दुःसहेन सन्तापाग्निना वीरेन्द्रस्य हृदयं दग्धं, रोदनेन तस्य कथञ्चित् उपशमः सञ्जातः। स पूर्व्वतः स्थैर्य्यमवलम्ब्य प्रत्युवाच—"न याचे अन्यत् किमपि, केवलं वधं मे शीघ्रं समापय इतीयं मे प्रार्थना।"

क—तदेव भविष्यति—अन्यत् किञ्चित् ?

वी—नान्यत् किञ्चिदपि अस्मिन् जन्मनि ।

क—किं मरणसमये ते कन्या न दर्शनीया ।

प्रश्नमेतं श्रुत्वा प्रेक्षकाः निःशब्दाः अभवन् । वीरेन्द्रस्य नयनयोः पुनरपि उज्ज्वलाग्निः ज्वलितः ।

वी—यदि मम कन्यका तव गृहे जीविता वर्त्तते, तदा न द्रष्टव्या । यदि मृता, तदानय त्वामुत्सङ्गे कृत्वा मरिष्यामि ।"

प्रेक्षकाः नीरवं तस्थुः । अशेषा जनास्तथा निस्तब्धा आसन् यथा सूचीपतनशब्दोऽपि श्रोतुं शक्यते । यवनराजस्य संज्ञया रक्षिणो वीरेन्द्रसिंहं वध्यभूमिमनैषुः । तत्स्थानप्राप्तेः पूर्व्वं कश्चित् यवनस्तस्य कर्णे किमपि अकथयत् वीरेन्द्रस्तत् नाबुध्यत । यवनेन दत्ता काचित् पत्रिका तस्य हस्ते । वीरेन्द्रश्चिन्तयानवस्थित-चित्तः तत् पत्रं उन्मोच्य ददर्श—विमलाया हस्तलेखम् । मत्वा विरक्त्या लिपिं पुरतो निचिक्षेप । वाहकः लिपिम् उद्गृह्य गतः । कश्चित् सन्निहितो दर्शकः वीरेन्द्रस्य एतत् कार्य्यं दृष्ट्वा स्वैरमभाषत—"मन्ये दुहितुः पत्रिकैषा ।"

एतत्तु वाक्यं वीरेन्द्रेण आकर्णितम् । तत्र निक्षिप्य दृष्टिं सोऽवदत्—"कोऽयं वदति मम दुहितेति । नास्ति मे दुहिता ।"

पत्रवाहकः पत्रमादाय गतः । रक्षिणश्च अवदत्—"मम प्रत्या-गमनं यावदपेक्ष्यताम् ।"

रक्षिणश्चावदन्—"यथाज्ञापयति प्रभुः ।"

ओस्मान् स्वयमेव पत्रवाहकः । अत एव प्रभुरिति ।

ओस्मानः लिपिहस्तः प्राचीरमध्यं गतः । तत्र कस्यचित् वकुलवृक्षस्य अन्तराले आसीत् काचित् अवगुण्ठनवती रमणी । ओस्मान् तमुपसृत्य समन्तात् दृष्टिं दत्त्वा "यद्वृत्तं तद्विवृतवान् । अवगुण्ठनवती रमणी प्रत्यभाषत—"भवते महान् क्लेशो दत्तः ।

परं भवतः एव अहं ईदृशीम् अवस्थामधिगता। भवता एतत् मे कार्य्यं साधयितव्यमेव। ओसमानस्तु नीरवं तस्थौ।

अवगुण्ठनवती रमणी मनःपीड़ाविकम्पितस्वरेणावदत्—"यदि नेच्छति भवान् मा तावत् सम्पादयतु। वयमिदानीम् अनाथाः संवृत्ताः। परं परमेशोऽस्माकं शरणम्।"

ओसमानः प्रत्यभाषत—"मातर्न जानासि—कीदृशे दुष्करे कर्मणि मां नियोजयसि। जानता कतलुखानेन अहं हन्तव्य एव।"

रमणी प्रोवाच—"कतलुखानेनेति? कथं मां वञ्चयति भवान्। कास्ति तस्य शक्तिस्तव केशमपि स्प्रष्टुम्।"

ओसमानः—"न ज्ञायते त्वया कतलुखानः। परम् आगच्छ त्वां वध्यभूमिं प्रापयामि।"

सा ओसमानम् अनु वध्यभूमिं गत्वा नीरवं तस्थौ। वीरेन्द्रसिंहः तां न ददर्श। आसीत् स केनचित् भिक्षुकेण सह आलापरतः।

सा अवगुण्ठनमध्यात् ददर्श—अयं अभिरामस्वामीति।

वीरेन्द्रः अभिरामस्वामिनमवदत्—"देव, आपृच्छे तावत् भवन्तम्। किमन्यत् पुनरहं वक्ष्यामि। इह मम प्रार्थनीयं नास्ति किञ्चित्। कस्मै वा प्रार्थयितव्यम्?"

अभिरामस्वामी अङ्गुलिनिर्द्देशेन पश्चाद्वर्त्तिनीम् अवगुण्ठनवतीम् अदर्शयत्। वीरेन्द्रसिंहस्तत्र परावृत्य लोचनं व्यापारयामास।

अथ रमणी अवगुण्ठनं निक्षिप्य शृङ्खलाबद्धस्य वीरेन्द्रस्य पदतले अवलुण्ठिता। वीरेन्द्रो गद्गदस्वरेणाभाषत—"विमले" "स्वामिन्, प्रभो प्राणेशे"ति वदन्ती उन्मादिनीवत् उच्चैस्तराम् अवोचत्—"अद्याहं जगत्समीपे कथयन्ती न केनापि निवारयितव्या च। स्वामिन्, कण्ठरत्न, कुत्र गच्छसि? कुत्र वा वयं, स्थास्यामः।"

वीरेन्द्रसिंहस्य नयनाभ्याम् अश्रुधारा निर्गलिता। विमला

हस्ते गृहीत्वा उवाच—"प्रियतमे, विमले, इदानीं कथं मां क्रन्दयसि। यतवो मां मरणभीतं मंस्यन्ते।"

विमला निस्तब्धं तस्थौ। वीरेन्द्रः पुनरपि उवाच—"विमले, गच्छाम्यहम् यूयं मा अनुसरत।"

विमला प्रोवाच—"गमिष्यामि।"

अन्यैरश्राव्यस्वरेणावोचत्—"गमिष्यामि, परं प्राक् अस्याः यन्त्रणायाः प्रतिशोधं ग्रहीष्यामि।"

निर्व्वाणप्रायस्य प्रदीपस्य इव वीरेन्द्रस्य मुखं हर्षोत्फुल्लं जातम्। सोऽपृच्छत्—"शक्तासि।"

विमला अङ्गुलिनिर्देशेन दक्षिणहस्तं प्रदर्श्य उवाच—"अनेनैव हस्तेन। त्यक्तं मया हस्तस्य अलङ्करणम्। किमनेन?" एवमुक्त्वा कङ्कणादीन् उन्मुच्य दूरे निक्षिपन्ती उवाच—"निशितं लौहं विना हस्तेऽस्मिन् अन्यत् भूषणं न धारयिष्यामि।" वीरेन्द्रो हृष्टचित्त-मुवाच—"त्वं शक्तासि। जगदीशस्ते कामनां सफलयतु।"

घातक उवाच—न पुनर्मया चिरायितुं शक्यते।

वीरेन्द्रो विमलां प्राह—"किमन्यत्? अधुना गच्छ त्वम्।"

विमलाभाषत—"नहि। मम पुरतः एव भवतु मम वैधव्यम्। तव रुधिरेण मनसः सङ्कोचं विसर्ज्जयिष्यामि। स्थिरो भीषणश्च विमलायाः कण्ठस्वरः।"

"तदेव भवतु" इत्युक्त्वा वीरेन्द्रसिंहो दण्डपाशिकाय संज्ञां चकार। विमलया दृष्टं जाड्यं स्थिवः परशुः सूर्य्यतेजसा प्रदीप्तः। तस्य नयन-पङ्कजं मुहूर्त्ताय निमीलितम्। पुनरुन्मील्य दृष्टं—वीरेन्द्रसिंहस्य छिन्नम् शिरः रुधिरसिक्तम् धूल्याम् समलुण्ठितम्।

विमला प्रस्तरप्रतिमा इव स्थिता। मस्तकस्य एकोऽपि केशो

वायुना न प्रकम्पत। अश्रुविन्दुरपि न पपात, नयनं निमेषरहितम्। परन्तु: छिन्नं मस्तकं प्रति सा स्थिरदृष्ट्या भवेक्षत।

---

## अशुद्धिशोधनम्।

श्रावणमासीयसंस्कृतसाहित्यपरिषत्पत्रिकायां "मत्स्यभक्षण"-प्रबन्धे १२३ पृष्ठे १८श पङ्क्तौ "मत्स्यस्यभक्ष्यता विस्पष्टं व्यवस्थापिता" इत्यत्र "भक्ष्यतां विस्पष्टं व्यवस्थापितवान्" इति भवति।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४४ शकीय—आश्विने, ५म वर्षस्य ६४ संख्या।

## श्रीश्रीशङ्करीसङ्गीतम्।

आनन्दतुन्दिलपुरन्दरमन्दमुक्तमन्दार-दामविगलन्मकरन्दसिक्तम्।
वन्दे गिरीन्द्रतनयाचरणारविन्दं योगीन्द्रवृन्दहृदयभ्रमरावलीढम् ॥
क्व त्रिलोकजननीचरित्रकं क्वापि मन्दविषया मतिर्मम।
भूस्थितो ह्यवचिचीषुरस्म्यहं नाकशाखिकुसुमानि पाणिना ॥
अथवास्मिन् प्रयत्नो मे निष्फलत्वं न हि फलिष्यति।
जगदम्बाचरित्रं हि प्रत्यूहव्यूहनाशनम् ॥

चौतालभैरवरागेण गीयते।

कलिभयमपहर करुणां सुवितर सकलभुवनकृतसेव।
त्वयि मम नतिततिरविरतिरतिगतिहीनगतिद गुरुदेव ॥
दशशतदलजलजातनिकेतन जय जय परमब्रह्मद नाथ ॥ ध्रुवम् ॥
त्वममरतरुरिति गदित इह जगति फलयसि याचककामम्।
विपदमतिशमय मम परिपूरय हृदभिलषितमविरामम् ॥
तव करुणालवभवबोधनमववाधितविषयविकारम्।
भवनिगडदलनकारणमतुलनमागमकृतमिति सारम् ॥
जय नारायण इति भणति शमनदमनमखिलसुखनिलयम्।
गुरुपदकमलं रसमयममलं मधु पीयतु मम हृदयम् ॥

मूलतानभैरवरागेण गीयते।

लयसमये जलराशौ रक्षसि मग्नम्।
जगदुपक्कतये वेदमभग्नम् ॥
धूमावति मीनदेहे जय जगदम्ब शिवे ॥ ध्रुवम् ॥

तव पृष्ठे विपुले सचराचरकीर्णा।
सन्ततमस्ति धरणिरविशीर्णा ॥
बगलामुखि कमठरूपे जय जगदम्ब शिवे ॥ध्रुवम् ॥

खरनखरं तव करकमलं परमकृशम्।
हिरण्यकशिपुं दारयति भृशम् ॥
छिन्नमस्ते नृहरितनो जय जगदम्ब शिवे ॥

करुणारसमपहाय वलिं निजदासम्।
अमरकृते गमयसि फणिवासम् ॥
भुवनेश्वरि वामनतनो जय जगदम्ब शिवे ॥ ध्रुवम् ॥

नृपकुलरुधिरजलैर्जगदविदितसीमम्।
शमयसि कोपानलमतिभीमम् ॥
सुन्दरि धृतभार्गवतनो जय जगदम्ब शिवे ॥ ध्रुवम् ॥

हत्वा दशवदनं युधि तदनयदुःखम्।
निखिलं भुवनं जनयसि सुखम् ॥
तारे धृतरामरूपे जय जगदम्ब शिवे ॥ध्रुवम्॥

वहसि कराम्बुरुहेण हलं शितधारम्।
रिपुगणदेहक्षेत्रविदारम् ॥
भैरवि धृतहलिशरीरे जय जगदम्ब शिवे ॥ध्रुवम्॥

स्वकथितवेदमखो कथयसि विपरीतम्।
त्रिजगज्जनयसि मोहपरीतम्॥
महाकालि बुद्धरूपे जय जगदम्ब शिवे ॥ध्रुवम्॥

समरशिरसि सबलं विनिहंसि च कंसम् ।
परमं नन्दयसे यदुवंशम् ॥
श्यामे धृतकृष्णरूपे जय जगदम्ब शिवे ॥ ध्रुवम् ॥
हंसि म्लेच्छचयान् विनिधृत्य कृपाणम् ।
भूत्वा द्विजतनयो बहुमानम् ॥
दुर्गे धृतकल्किकाये जय जगदम्ब शिवे ॥
श्रीजयनारायणभणितम् रमणीयम् ।
शृणु सततं सुरनरकमनीयम् ॥
तारिणि धृतदशविधतनो जय जगदम्ब शिवे ॥ ध्रुवम् ॥

वेदोद्धारं धरित्रीधरणमसुरहृद्धारणं नागलोके
संप्रस्थानं बलेश्च क्षितिपतिविजयं निर्जयं रावणस्य ।
आदानं लाङ्गलस्य श्रुतिपथमनुपालम्भनं कंसनाशम्
म्लेच्छोल्लासं क्रमाद्या रहसि कृतवती तां नमाम्याद्यशक्तिम् ॥

मूलतानललितरागेण गीयते ।
भवभयभञ्जन जगदनुरञ्जन मङ्गलचरणसरोजे ।
नखरसुधाकरकरविनिवारितमायातिमिरसमाजे ॥
जय जय सुरार्च्चिते ॥ ध्रुवम् ॥
त्रिभुवनभवनविपालनविनशनलीलाकारणभूते ।
कृतनिजचारणदुःखनिवारणकरुणानिकरपरीते ॥
मृगपतिवाहिनि मुक्तिविधायिनि निर्गुणसगुणकशीले ।
असुरविदारणसुरकुलपालनविरचितबहुतरलीले ॥
कथयति सेवक-जयनारायण इह भवसागरभीतः ।
कृपया मामभितारय तारिणि भजनरहितमिति मातः ॥
प्रातः प्रेमभरालसा निजसखीमालासमेता किल ।
मेना भूधरराजधर्म्मगृहिणी निद्रावतीं पार्व्वतीम् ।
लीलादेहविधारिणीं भगवतीं ज्योतिर्म्मयीं चिन्मयीं
संप्राबोधयतामृतास्वरुतैर्वाक्यैर्जगन्मङ्गलैः ॥

मध्यमानतालविभासरागेण गीयते ।

तव पदपल्लवनखरतुलनमिव नैव समेत्य कलङ्की ।
जलधिपयसि परिमज्जति शीतकरः परिभवपरिशङ्की ॥
शशधरवदने खञ्जननयने परिहर शयनमिदानीम् ॥ ध्रुवम् ॥
किसलयलोहितविमलचरणतलतुलनामाप्त मिवैषः ।
दिवसमुखे तपनस्तव परमधिगच्छति विद्रुमभासः ॥
मृदुपवनावलिकम्पितचम्पकमालाहिमजलभारम् ।
तव चरणाङ्ग लोगमितनिरस्कृतिरिव सृजतीचरणीरम् ॥
विकुरति कोकिलकुलमतिमञ्जुलमधि विपिनं वनदेवैः ।
वच इव तव परिबोधजनकमभियुक्तं मधुरविरावैः ॥
भवनबहिः परितिष्ठति वत्से तुल्यवयाः पुरबाला ।
तव रुचिमिच्छति तव रचिताञ्जलिरुपहृतपुष्करमाला ॥
श्रीजयनारायणभणिताखिलमैनावचनमुदारम् ।
परिकलयत इह दुर्गाणि दिशतु दुर्गभवार्णवपारम् ॥
इत्यकर्ण्य गिरं प्रबोधजननीं मायाः जनन्याः शुभाम्
विश्लेषां जननीमुखाब्जरुचिभिर्विद्योतयन्ती दिशः ।
ईषद्धास्यवती सती त्रिजगतीचैतन्यरूपा मुहुः
कृत्वेशं शयनात् समुत्थितवती पायाज्जगत्पार्व्वती ॥

इति श्रीश्रीशङ्करीमङ्गले गात्रोत्थानं नाम प्रथमः स्वर्गः ॥

(क्रमशः)

---

# प्रपञ्चसारकृच्छङ्कराचार्य्यः। *

(लेखकः—श्रीसतीशचन्द्रसिद्धान्तभूषणः।)

तन्त्रनिबन्धमुख्यभूतं प्रपञ्चसारनामकं लोकप्रसिद्धं तन्त्रं तन्त्रशास्त्ररसिकैः साधकैः निबन्धकारैश्च सम्मानितमास्ते। तन्त्रसारादिषु बहुषु तान्त्रिकनिबन्धेषु अस्य प्रमाणावली उद्धृता। तेषु "तथाच प्रपञ्चसारे" इत्यादिरूप एव परिचयः, न तु ग्रन्थकर्त्तृनामनिर्द्देशादिकं दृश्यते। अधुना श्रीरङ्गम्नगरस्थवाणीविलासयन्त्रालये मुद्रिते कलिकातानगरे श्रीयुक्ताउड्फमहाशयेन मुद्रिते च प्रपञ्चसारे "इति श्रीपरमहंसपरिव्राजकाचार्य्यशङ्कराचार्य्यविरचिते श्रीप्रपञ्चसारे षट्त्रिंशः पटलः" † इत्याकारकं लेखं दृष्ट्वा वितर्कः समुपस्थितः "कोऽयं शङ्कर" इति। शारीरकभाष्यादिबहुवेदान्तनिबन्धकर्त्तुर्विशुद्धाद्वैतवादिनो विश्वविश्रुतस्य श्रीमच्छङ्करभगवत्पादस्य तन्त्रशास्त्रनिबन्धनानौचित्याशङ्किनो केचिद् वदन्ति "प्रपञ्चसारो" गौड़ीयशङ्करस्य कृति"रिति। गौड़ीयशङ्करस्य बहवो तान्त्रिकनिबन्धा आसन्, तेषु तारारहस्यवृत्तिकाख्यो निबन्धः अद्यापि तान्त्रिकैः पूजनीयतया विराजमाना आस्ते। तत्र—

"लम्बोदरस्य पौत्रेण कमलाकरसूनुना।
क्रियते शङ्करेणैषा तारारहस्यवृत्तिका॥

इति श्रीगौड़ीयशङ्कराचार्य्यकृतौ तारारहस्यवृत्तिकायां पञ्चदशः पटलः" इत्याकारकग्रन्थकर्त्तृपरिचयलेखो दृश्यते। तारोपनिषत्सम्मतं श्रीमच्छङ्करभगवत्पादकृतं तारादेव्याः स्तवरूपध्यानमेकं तान्त्रिकसमाजेषु प्रसिद्धमास्ते। तारारहस्यवृत्तिकायां प्रथमपटले

* परिषदो मासिकाधिवेशने पठितोऽयं प्रबन्धः।

† राजशाहिवरेन्द्रानुसन्धानसमितिसंगृहीतप्राचीनहस्तलिखितपुस्तकेषु "इति श्रीमच्छङ्करभगवत्पादकृतौ श्रीप्रपञ्चसारे षट्त्रिंशः पटलः" इत्याकारकलेखो दृश्यते।

"अथवा शङ्कराचार्य्यभगवत्पादैः स्तोत्ररूपेणोक्तम्ज्वलत्पावकेत्यादिना सर्व्वार्थसिद्धौ ध्यायेत्" इत्युक्ता तत्स्तोत्ररूपध्यानमुद्धृतवता गौड़ीय-शङ्कराचार्य्येणापि भगवत्पादस्य तन्त्रनिबन्धृत्वमङ्गीकृतम्। तत्रैव प्रथमपटले" अष्टाङ्गनतिर्यथा प्रपञ्चसारे—

"पद्भ्यां कराभ्यां जानुभ्यामुरसा शिरसा दृशा।
वचसा मनसा चेति प्रणामोऽष्टाङ्ग ईरितः॥"*
[ प्रपञ्चसारः ६।११२ ]

इति प्रपञ्चसारवचनोद्धारेण गौड़ीयशङ्कराचार्य्यस्य प्रपञ्चसार-कर्त्तृत्वं निराकृतम्। अपरे तु "प्रपञ्चसारमिमं शङ्कराचार्य्योपाधिकः कश्चित् श्रीमच्छङ्करभगवत्पादशिष्यः प्रणिनाय" इति वदन्ति। तदपि न। शङ्करभगवत्पादैः स्वयमेव नृसिंहपूर्व्वतापनीयोपनिषद्भाष्ये "अत एव हृदयाद्यङ्गमन्त्राणामर्थं व्याचक्षाणैरस्माभिरुक्तं प्रपञ्चागमशास्त्रे—

"हृदयं बुद्धिगम्यत्वात् प्रणामः स्यान्नमःपदम्।
क्रियते हृदये नमो बुद्धिगम्या नमस्क्रिया॥" इति
[ आनन्दाश्रमप्रकाशित नृ, पू, ता, उ, द्वितीयोपनिषद्भाष्ये । ]

इतिक्रमेण प्रपञ्चसारषष्ठपटलीयाङ्गमन्त्रव्याख्यावचनानुद्धृतानि। तत्रैव कवचमन्त्रव्याख्यायान्तु "अत एवोक्तमस्माभिः कवचाङ्गमन्त्रार्थं व्याचक्षाणैः प्रपञ्चसारे—

"कवचग्रह इत्यस्माद्धातोः कवचसम्भवः।
हुं तेजस्तेजसा तेन गृह्यते कवचं ततः॥" इति

एवमुक्तम्। एवं तत्रैव चतुर्थोपनिषद्भाष्ये "अत एवोक्तमस्माभिः समव्याहृतीर्व्याचक्षाणैः प्रपञ्चसारे" इत्युक्ता प्रपञ्चसारैकोनत्रिंशपट-लीयव्याहृतिमन्त्रव्याख्यावचनानुद्धृतानि। एतेन प्रपञ्चसारस्य शङ्करभगवत्पादकर्त्तृत्वमायाति। अत्रापि केचिद्विवदन्ते "नायं

---

* आर्थर एभेलनसम्पादितमुद्रितप्रपञ्चसारे "पद्भ्यां कराभ्याम्" इत्यत्र "दोर्भ्यां पादभ्यां" इति पाठो विद्यते।

नृसिंहतापनीयोपनिषद्भाष्यकारः श्रीमच्छङ्करभगवत्पादः किन्तु, तच्छिष्यः कश्चिच्छङ्कराचार्य्यनामधेयः" इति। एतन्मतस्यापि प्रमाणाभावः। अस्मन्मते तु लोकप्रसिद्धिरूपेतिह्यमेव प्रमाणम्। विशेष-परिचयसूचकलेखाभाववतां प्राचीनग्रन्थानां कर्त्तृत्वनिर्देशे लोक-प्रसिद्धिरेव प्रमाणतया ग्रहीतव्या, प्रत्यक्षानुमानयोरविषयत्वात्।

श्रीमच्छङ्कराचार्य्यभगवत्पादप्रतिष्ठापितशृङ्गेरीमठाधीशेनानुमोदिते भगवत्पादकृतग्रन्थानां स्मृतिसंस्करणे (Memorial Edition of the works of Srisankaracharyya) श्रीरङ्गम्नगरस्थ-वाणीविलासयन्त्रालयाध्यक्षैः भगवत्पादप्रणीततया नृसिंहतापनीयो-पनिषद्भाष्यं प्रपञ्चसारतन्त्रमपि प्राकाश्यत। भगवत्पादकृतत्वा-भावे ग्रन्थद्वयमिदं भगवत्पादस्मृतिसंस्करणेऽवस्थातुं नार्हति। अपिच—भगवत्पादशिष्यवर्य्यश्रीमत्पद्मपादाचार्य्येण प्रपञ्चसारस्य प्रपञ्चसारविवरणनाम्नी का टीका कृता। तस्याः पुस्तकमेकं पञ्चत्रिंश-पटलपर्य्यन्तं माद्राजराजकीयपुस्तकालये (Government Oriental Manuscripts Library, Madras.) विद्यते अस्य प्रति-लिपिरेका वरेन्द्रानुसन्धानसमितिना संगृहीता। तत्र शेषः षट्त्रिंशः पटलो नास्ति, ग्रन्थकर्त्तृपरिचयोऽपि न विद्यते। अपरमेकं शेषपटल-द्वयरूपं राजसाहीवरेन्द्रानुसन्धानसमितिपुस्तकालये अस्ति। एतत्-पुस्तकद्वयमेवास्माभिरालोचितम्। उभयत्र पञ्चत्रिंशपटलस्य विद्य-मानत्वे साम्ये च उभयमेवैकं पुस्तकमिति निश्चितम्। ग्रन्थशेषे "इति श्रीपद्मपादाचार्य्यकृते प्रपञ्चसारविवरणे षट्त्रिंशः पटलः" इति ग्रन्थकर्त्तृपरिचय उपलभ्यते। शारदातिलकस्य पदार्थादर्शाख्य-टीकायां राघवभट्टेन सौभाग्यभास्करे भास्कररायेण च स्वस्वग्रन्थे नामोल्लेखपूर्व्वकं पद्मपादाचार्य्यकृता प्रपञ्चसारव्याख्या उद्धृता। उद्धृतव्याख्यांशान्येन सह अस्मदुपलब्धव्याख्यायास्तत्तदंशस्य साम्यं दृश्यते। अतः प्रपञ्चसारविवरणस्य पद्मपादाचार्य्यकृतत्वं निःसन्दिग्धम्।

पद्मपादाचार्य्यैस्तु प्रपञ्चसारविवरणप्रारम्भे एवमुक्तम्- "इह खलु लोकानुग्रहैकरसतया कृतशरीरपरिग्रहो भगवान् शङ्कराचार्य्योऽपरोक्षीकृतपरदेवतात्मतत्त्वः परमां विभूतिकाष्ठां प्राप्तः स्वयमेकाकी सम्पदा लज्जमानो दुःखीकृतजनकारुण्याक्रान्तमानसश्च संसृतदनुग्रहाय समस्तागमसारसंग्रहप्रपञ्चागमसारसंग्रहरूपं ग्रन्थं चिकीर्षुरभिमतसकलप्रयोजनसिद्धये प्रथमतः परदेवतातत्त्वानुस्मरणमार्गोलक्षणश्च मङ्गलमाचरन् ग्रन्थादौ औपयिकं विषयादिकमप्यर्थात् सूचयति अ क च ट त पाद्यै रित्यादिना।" इति। नहि भगवत्पादादन्यः शङ्कराचार्य्योपाधिकस्तच्छिष्यो भगवच्छब्देन व्यपदिश्यते, नापि भगवत्पादशिष्यकृतग्रन्थस्य पद्मपादाचार्य्यकृतव्याख्यासम्भवः। अपिच—प्रपञ्चसारतन्त्रमवलम्ब्य गीर्व्वाणेन्द्रसरस्वतीप्रपञ्चसारसंग्रहनामकं निबन्धमेकं प्रणिनाय। तस्य कलिकाताराजकीयसंस्कृतविद्यालयग्रन्थागारे पुस्तकमेकं मान्द्राजराजकीयपुस्तकालये च पञ्चाणि पुस्तकानि विद्यन्ते। ग्रन्थकारेण तस्यारम्भे—

"नत्वा श्रीशङ्कराचार्य्यममरेन्द्रयतीश्वरम्।
कुर्व्वे प्रपञ्चसारस्य सारसंग्रहमुत्तमम्॥"

तत्र प्रपञ्चसारे यच्छङ्कराचार्य्यैरुक्तं मन्त्रयन्त्रप्रयोगादि तत्सर्व्वमपि सारभूतमेव, तथापीदानीं मन्दप्रज्ञानां विस्तरशो ज्ञातुमनुष्ठातुमशक्यत्वादत्यन्तापकारभूतत्वेन तत्सारतरं तदल्पग्रन्थेनैव यथा सर्व्वमन्त्रयन्त्रतन्त्रसारग्रहणं स्यात्, तथा सर्व्वतः सारं गृहीत्वा मया सत्सम्प्रदायसर्व्वस्वाभिधव्याख्यानोक्तमार्गेण वक्ष्यते।" ग्रन्थसमाप्तौ च "इति श्रीमदमरेन्द्रसरस्वतीशिष्यश्रीविश्वेश्वरसरस्वत्याः प्रियशिष्येण गीर्व्वाणेन्द्रसरस्वत्या संगृहीतः प्रपञ्चसारसंग्रहः समाप्तः।

शङ्करश्चामरेन्द्रश्च विश्वेश्वर इति त्रयम्।
पुष्णातु मामकीं बुद्धिमाचार्य्यकृपया मुदा॥

अमरेन्द्रजातः शिष्यो गीर्व्वाणेन्द्रस्य योगिनः (?)।
तस्य विश्वेश्वरः शिष्यो गीर्व्वाणेन्द्रोऽहमस्य तु ॥
शिष्यः प्रपञ्चसारस्य व्यदधां सारसंग्रहम्।
एनं दृष्ट्वाखिलाः सन्तः सन्तुष्टाः सन्तु सन्ततम् ॥"

इत्येवमुक्तम्। एतेन प्रपञ्चसारस्य सत्सम्प्रदायसर्व्वस्वनामकं व्याख्यान्तरमासीदिति ज्ञायते। मधुसूदनसरस्वत्या गुरुरपि विश्वेश्वरसरस्वती। अतोऽयं गीर्व्वाणेन्द्रसरस्वती मधुसूदनसरस्वतीसमकालीनः भगवत्पादशङ्कराचार्य्यमतावलम्बी चेति प्रतीयते। अपिच, पञ्चशतवर्षेभ्यः प्राचीनेन स्मार्त्तप्रवररघुनन्दनभट्टाचार्य्यतान्त्रिकप्रवरकृष्णानन्दप्रभृतिभिर्व्वहुभिर्निबन्धकारैः सम्मानितेन कान्यकुब्जदेशोद्भवेन प्रथितनाम्ना राघवभट्टेन शारदातिलकतन्त्रस्य स्वकृतपदार्थादर्शाख्यटीकायां प्रपञ्चसारवचनानुद्धृतानि, क्वचित् पद्मपादाचार्य्यकृततद्व्याख्यास। तन्त्रसारादिषु उद्धृतप्रपञ्चसारवचनानां पूर्व्वं "तथा च प्रपञ्चसारे" इत्येतावन्मात्रलेखनेन प्रपञ्चसारनिबन्धृपरिचयो न ज्ञायते। पदार्थादर्शे तु सर्व्वत्र आचार्य्यपदमुल्लिख्य प्रपञ्चसारवचनानुद्धृतानि, एतावान् विशेषः। तथाहि—तत्र शारदातिलकप्रथमपटलप्रथमश्लोकव्याख्याने, यथा—

"तस्यैवौकारयोगेन स्यादौकाराह्वयः स्वरः।"

इत्याचार्य्योक्तेः। इत्युक्त्वा प्रपञ्चसारतृतीयपटलत्रिषष्टितमश्लोकार्द्धमुद्धृतम्। प्रथमपटलसप्तमश्लोकव्याख्यायाम्—"आचार्य्यास्तु—

सा तत्त्वसंज्ञा चिन्मात्रज्योतिषः सन्निधेस्तदा।
विचिकीर्षुर्घनीभूता क्वचिदभ्येति विन्दुताम् ॥" इति

इत्युक्त्वा प्रपञ्चसारप्रथमपटले कचत्वारिंशश्लोक उद्धृतः। प्रथमपटलषोडशश्लोकव्याख्यायाम्—"तदुक्तमाचार्य्यैः—

"स्वामिन् प्रसीद विश्वेश के वयं केन भाविताः।
किंमूलाः किंक्रियाः सर्व्वं समाख्यं वक्त मर्हसि ॥

इति पृष्टः परं ज्योतिरुवाच प्रमिताक्षरम्।"

इत्यस्य पद्यस्य व्याख्याने पद्मपादाचार्य्यैर्व्याख्यातं—'सर्व्वेश्वर उपादानादिकं संग्रहेणोक्तवान्, इत्याह इति पृष्ट इति। प्रकर्षेण मीयते ज्ञायते इति प्रमिता प्रकृतिः, प्रमिनोति जानातीति प्रमितः पुरुषः, प्रमिनोति परिच्छिनत्तीति प्रमितः कालः, तेषां प्रमितानां वाचकमक्षरं प्रमिताक्षरं परा वाक् सतत्त्वं हकार इत्यर्थः। संग्रहेणोक्त्याप्रतिपत्तिमालक्ष्य तदेव विवृणोति—

"यूयमक्षरसम्भूताः सृष्टिस्थित्यन्तहेतवः।" इति।

न क्षरत्यश्नुते वेति व्युत्पत्त्या अक्षरात् सम्भवतीह विश्वम् इत्यादिना। * इत्युक्त्या प्रपञ्चसारप्रथमपटलस्य षोड़शसप्तदशश्लोकौ पद्मपादाचार्य्यकृततद्व्याख्या च उद्धृता। तथाच चतुर्थपटलत्र्यशीतितमश्लोकव्याख्यायां—"तथाचाचार्य्यवचनं टीकापटले

तद्वद्वाङ्मनसौ उदीर्य्य तदनु प्राणा इहायान्त्विति। इति।

तट्टीकाकाराः पद्मपादाचार्य्या व्याख्यातवन्तः—'वाङ्मनसग्रहणं चक्षुःश्रोत्रघ्राणप्राणानामुपलक्षणार्थम् इति। तथा प्राणप्रतिष्ठापटले चाचार्य्याः—

'तद्वद्वाङ्मनसौ दृशं श्रुतिमथो घ्राणञ्च सप्राणकम्।' इति।

अत्रापि टीकाकारैर्व्याख्यातं 'दृक्पदेन चक्षुःपदं गृह्यते' इति। इत्युक्त्या प्रपञ्चसारस्य पद्मपादाचार्य्यकृतव्याख्यासहितः षष्ठपटलीयाष्टत्रिंशत्तमश्लोकांशः दशत्रिंशपटलीयद्वितीयश्लोकांशश्च उद्धृतः।

* अस्मदुपलब्धपद्मपादाचार्य्यटीकायाम्—"* * * संग्रहेणोक्तवान्, इत्याह इति पृष्ट इति। प्रमिताक्षरं प्रकर्षेण मीयते मिनोति परिच्छिनत्तीति क्रमेण प्रकृतिपुरुषकालाः प्रमिताः। प्रमितानां * * * तदभिन्नं प्रमिताक्षरं परा वाक् सतत्त्वं हकार इत्यर्थः। तस्य बीजबिन्दुनादरूपेण प्रकृत्यादिवाचकत्वं द्रष्टव्यम्। अहं मेत्यक्षररूपेण वा तत्र प्रकृतिरुपादानमितरं निमित्तमिति सार्व्वज्ञोऽभिप्रायः। इतिसंग्रहेणोक्तं पुनरपि तेषामप्रतिपत्तिमालक्ष्य सार्व्वज्ञाभिप्रायं विवृणोति यूयमिति।" एवम्प्रकारः पाठो दृश्यते। वस्तुतः बहुप्राचीनस्यैकस्यैकपुस्तकस्य कालभेदाद्देशभेदाच्च पाठान्तरं सञ्जातमित्यनुमीयते।

एवं राघवभट्टः पदार्थादर्शे बहुषु स्थानेषु आचार्य्यपदमुल्लिख्य प्रपञ्चसार-वचनानि पद्मपादाचार्य्यकृततद्व्याख्याश्च उद्धृतवान् । अपिच—द्विशत-वर्षप्राचीनेन कर्णाटदेशोद्भवेन बहुनिबन्धकर्त्रा सुगृहीतनाम्ना भास्कर-रायेण ब्रह्माण्डपुराणोत्तरखण्डान्तर्गतललितासहस्रनामस्तोत्रस्य स्वकृतसौभाग्यभास्करनामकभाष्ये [निर्णयसागरयन्त्रमुद्रिते ८८ पृष्ठे ]

तदुक्तमाचार्य्यः :—

"मूलाधारात् प्रथममुदितो यश्च भावः पराख्यः
पश्चात् पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।
वक्त्रे वैखर्य्यथ रुरुदिषोरस्य जन्तोः सुषुम्ना-
बद्धस्तस्माद्भवति पवनप्रेरितो वर्णसङ्घः ॥" इति

इत्युक्त्वा प्रपञ्चसारस्य तृतीयपटलीयत्रिचत्वारिंशत्तमश्लोक उद्धृतः । तत्राप्यन्यत्र [ २७ पृष्ठे ] "तत्स्वरूपनिर्णयः प्रपञ्चसारे प्रणवपटले, व्याख्यातृभिः पद्मपादाचार्य्यैरपि प्रणवार्थदीपिकादि-ग्रन्थान्तरे च भूयानस्य विस्तारो द्रष्टव्यः । इत्युक्त्वा प्रपञ्चसारस्य पद्मपादाचार्य्यव्याख्याप्यङ्गीकृता । भगवत्पादस्य सर्व्वेषामाचार्य्य-स्वरूपत्वात् केवलाचार्य्यपदेन स एवाभिधीयते । एवं भास्कररायोऽपि बहुत्र आचार्य्यपदोल्लेखपुरःसरं प्रपञ्चसारवचनान्युद्धृतवान् ।

अपिच मान्द्राजप्रदेशस्य सह्याद्रिनिवासिना भास्कररायादर्व्वा-चीनेन विश्रुतनाम्ना शैवनीलकण्ठेन च स्वकृततिलकाख्यदेवीभाग-वतटीकायां तृतीयस्कन्धीयतृतीयाध्यायस्य चत्वारिंशश्लोकव्याख्यायाम् आयुधार्थस्तु प्रपञ्चसारे भुवनेश्वरीपटले श्रीमच्छङ्करभगवत्पादैर्वि-स्तरेणोपपादित इति तत एवावधार्य्यः" इत्युक्त्वा भगवत्पादस्य प्रपञ्चसारकर्त्तृत्वमङ्गीकृतम् । एतावद्भिर्निर्णीतं प्रपञ्चसारतन्त्रं शारी-रकभाष्यादिप्रणेतृभिः श्रीमच्छङ्करभगवत्पादैः प्रणीतमिति ।

एतावत्प्रमाणपरम्परया मन्यामहे वयं प्राचीनार्व्वाचीननिबन्ध-कर्त्तॄणां शैवशाक्तविशुद्धाद्वैतवादिनां केषाञ्चिदपि मनसि प्रपञ्चसारस्य भगवत्पादकर्त्तृत्वे सन्देहलेशोऽपि न सञ्जात इति । गुरूपदेश-

दरिद्राः साधनविमुखाः प्राचीनतत्त्वानुसन्धित्सापरायणाः सर्व्वज्ञम्मन्याः केचिदाधुनिकास्तु मन्यन्ते—विशुद्धाद्वैतवादप्रचारपरायणानां परिणामवादं खण्डयतां श्रीमच्छङ्करभगवत्पादाचार्य्याणां परिणामवादाश्रयोपासनाकाण्डीयतन्त्रग्रन्थप्रणयनमसम्भवमिति। मदीयाग्रजपूज्यपादश्रीयुक्तगिरीशचन्द्रवेदान्ततीर्थमहाशयेन "शङ्कराचार्य्येर धर्म्ममत" नामकवङ्गभाषानिबन्धपुस्तिकायां भगवत्पादस्य तन्त्रग्रन्थप्रणयने कारणं प्रदर्शितम्। तथाप्यत्र किञ्चिदुच्यते—भगवत्पादशिष्यत्वप्राप्तिनाम् अद्वैतज्ञानानधिकारिभ्यो विषयपरायणेभ्यः पञ्चदेवतोपासनं भगवानुपदिदेशेति शङ्करविजयादिग्रन्थेषूपलभ्यते। लोकानुजिघृक्षुर्भगवत्पादस्तथा एतोपासनायाः पद्धतिं ग्रथित्वा प्रपञ्चसारतन्त्रं प्रणिनाय। अद्वैतज्ञानानधिकारिणां सगुणोपासकानाम् उपासनार्थं परिणामवाद एवानुजज्ञौ। तथाहि शारीरकभाष्ये [२।२।१४] तदुक्तिः—"सूत्रकारोऽपि परमार्थाभिप्रायेण "तदनन्यत्वम्" इत्याह। व्यवहाराभिप्रायेण तु "स्याल्लोकवद्" इति महासमुद्रस्थानीयतां ब्रह्मणः कथयति। अप्रत्याख्यायैव कार्य्यप्रपञ्चं परिणामप्रक्रियाञ्चाश्रयति सगुणोपासनेषूपयुज्यते" इति।

तन्त्रानुयायिनः शैवाः शाक्ताश्च अद्वैतवादिनो मायावादिनश्च। स्वारसिकेन मायापि शक्ति-विद्या-माया प्रकृत्यादिशब्दैस्तत्तच्छास्त्रेषु व्यपदिश्यते। तान्त्रिकमायावादः शङ्करसम्मतविवर्त्तवादस्य मूलं, शङ्करसम्प्रदायः श्रीविद्योपासक इति किंवदन्त्यपि प्रचरति। शङ्कराचार्य्यपरमगुरुगौड़पादोऽपि श्रीविद्यारत्नसूत्रनामकं श्रीविद्योपासनापरं तान्त्रिकसूत्रग्रन्थं प्रणिनाय। असौ सूत्रग्रन्थः शङ्करारण्यकृतः, तस्य दीपिका च अद्यापि प्रचरति। अस्माभिरपि मान्द्राजट्रिप्लिकेनवास्तव्यश्रीनिवासाचार्य्यमहोदयसकाशात् सदीपिकस्य तस्यैका लिपिरुपलब्धा। भास्कररायोऽपि सौभाग्यभास्करे बहुत्र गौड़पादीयसूत्रोल्लेखपूर्व्वकं श्रीविद्यारत्नसूत्रानुराद्धृतवन्तः। शङ्करारण्यो-

ऽपि स्वकृतदीपिकायां" "तदीयशास्त्रप्रकरणार्थं तदुपासकानां ज्ञातानुष्ठानतया पुरुषार्थाय भगवता गौड़पादेन तद्रहस्यं सर्व्वमप्यस्तवकैः सूचितम्" इत्युक्तवान्। भगवत्पादोऽपि श्रीविद्याया बहूनि स्तोत्राणि प्रणीतवान्। तत्रानन्दलहर्य्यपरनामधेयं सौन्दर्य्यलहरी-स्तोत्रं प्रसिद्धतमम्। तस्यार्य्यावर्त्तदाक्षिणात्यवास्तव्या बहवो टीकाकारा बभूवुः। सर्व्वेऽपि तस्य भगवत्पादकर्त्तृत्वं स्वीचक्रुः। एतावता च एतत्सम्प्रदायस्य श्रीविद्योपासकत्वं प्रतीयते। अलमति विस्तरेणात्रैव विरमामि।

# समस्यापूर्त्तिकौतुकम्।

( लेखकः—श्रीहरिहरशास्त्री )

आसीदिह गीर्व्वाणवाणीलीलानिकेतनायमाने भारतवर्षे समस्यापूर्त्तिरूप-कविता-कौतुकमधिकृत्य कोऽपि विनोदातिशयः सहृदयानाम्। अनेन वाग्व्यापारेणैव परीक्ष्यते स्म कवीनां द्रुतनिर्म्माणनैपुण्यमनन्यसामान्यः प्रतिभाविशेषश्च। अन्यरचितेनैकपादेन समसमर्थसौष्ठवं सङ्गमय्य शिष्टं पादत्रयं रचनीयमिति न खलु सुकरनिर्म्माणं समस्यापूरणात्मकं कविकर्म्म। एवं पारतन्त्र्येण काव्यप्रणयनरीतिः संस्कृतसाहित्य एव विजयतेतरां नान्यत्र। अद्यापि केषाञ्चित् विद्यामोदिनां सामन्तनरपतीनां गोष्ठीषु विद्वद्गरिष्ठाः परीक्ष्यन्ते काव्यनिर्म्माणप्रतिभासु कठिनकठिनाभिः समस्याभिः। सत्क्रियन्ते च ते तैस्तै राजभिर्धनधारावर्षैः सहर्षम्।

ये तावदनुशीलनेन काव्यकरणपाटवमधिगन्तुमभिलषन्ति, तेषां नाम समस्यापूर्त्तिरेव व्यायामानुपाय इत्यामनन्ति काव्यकवित्व-

प्रशस्तिकाः प्रेक्षावन्तः। अमानुषमनीषः कविकुलशिरोऽलङ्कारश्रीराय-मानः प्रेमचन्द्रतर्कवागीशोऽपि 'कथमस्माकं काव्यनिर्म्माण-सामर्थ्यं भविष्यतीति एवं निर्व्वेदमापन्नो गुरोरुपदेशात्, प्रतिदिनं तन्निर्द्दिष्टा-मेकेकां समस्यां सम्पूरयामासीत्। अनयैव दिशा स्वस्याश्चेषाञ्च समस्यापूरणैर्या खलु पुस्तिका निर्व्वर्त्तिता 'समस्याकल्पलते'तिनाम-धेया, तत्रादावेव प्रकटितं प्रेमचन्द्रेण—

"कविता भविता कस्मादस्माकमिति भावितः।
गुरुः समस्यामेकैकामारेभे दातुमुत्सुकः॥
नित्यं तत्पूरणादेषा जायते लोकविस्तृतिः।
सा समस्याकल्पलतानाम्ना ख्याताऽस्तु भूतले॥"

'काव्यादर्श'-'नैषधचरित'-टीकाद्वयशोभाशालीन्यश्चैव प्रेमचन्द्रः कीदृक्काव्यनिर्म्माणकुशलः समजायतेति न खलु न ज्ञातं विद्वद्भिः।

युक्तमुक्तमाचार्य्येण दण्डिना—
"तदस्ततन्द्रैरनिशं सरस्वती श्रमादुपास्या खलु कीर्त्तिमीप्सुभिः।
कृशे कवित्वेऽपि जनाः कृतश्रमा विदग्धगोष्ठीषु विहर्त्तुमीशते॥"

उपासनाप्रकारेषु समस्यापूर्त्तेरभ्यासो विशेषेण फलोपधायक इति ज्ञात्वा काशीस्थराजकीयसंस्कृतपाठशालाव्यवस्थापित-'साहित्याचार्य्य'-'परीक्षायामस्तीमे वर्षे गृह्यते तावत् समस्यापूर्त्तेः परीक्षापि। अनति-चिरपूर्व्वमपि विद्वत्परिषदि शास्त्रार्थ इव समस्यापूरणमपि पण्डित-प्रकाण्डानां महत्याः प्रतिष्ठायाः स्थानमासीत्।

अत्रोपक्षिप्यन्ते सहृदयेभ्यः पाठकेभ्यः स्वरचिताः परकीयाश्च केचन समस्यापूरणात्मकश्लोकाः,—

समस्या—"नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः।"

न दत्ते प्रत्युक्तिं निवसनविमुक्तिं न सहते
धुनाना मूर्द्धानं स्फुटवचनमुन्मीलयति।

परोरम्भारम्भे स्वसदनतयास्याः परमहो
"नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः॥"
( प्रेमचन्द्रतर्कवागीशस्य )

निकुञ्जे गुञ्जद्भिर्मधुरमलिपुञ्जैर्मुखरिते
समायाते माथे रतिमतिथिभूतेऽथितवति।
वहन्त्या भव्यन्तर्मनसिजरुजामष्टगुणितां
"नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः॥"
( श्रीशचन्द्रविद्यारत्नस्य )

भये कान्ते किन्ते सखि हृदयकोणे कियति मे
कियत्स्थानं न्यास्ते मयि वदति सा मे सुखमिदम्।
मुमुक्षुः स्मेरास्योत्तरमिदमदादेति न सखे
"नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः॥"
( महामहोपाध्याय-कविसम्राट् पण्डितराज-
श्रीयादवेश्वरतर्करत्नस्य )

'प्रिये यामि' स्वामिन्यशनिकठिनं भाषणमिति
ब्रुवाणे विच्छेदज्वरमनुभवन्त्या गुरुतरम्।
विनम्रग्रीवायाः सजलनयनाया मृदुतरो
"नकारोऽलङ्कारो जयति मुखचन्द्रे मृगदृशः।"
( श्रीहरिहरशास्त्रिणः )

समस्या—"किं कार्यं परिशिष्टमस्ति भवतो जानामि नाहं कले।
वेदं वेद न कोऽपि भूधरदरीलीना मुनीनां गिरः
स्वच्छं म्लेच्छमतं जनास्तदनुगाः का नाम धर्म्या: क्रियाः।
मद्यं हृद्यमतीव वारवनिताः सेव्या न गुर्व्वादयः
"किं कार्यं परिशिष्टमस्ति भवतो जानामि नाहं कले॥"
( श्रीप्रेमचन्द्रतर्कवागीशस्य )

समस्या—"प्रविशति जलमध्ये शीतभीता मृगाक्षी।"

तपसि तपनतापे चासभूते सरस्या-
स्तटमुपगतवत्य: स्नातुकामास्तरुण्य:।
अवतरति न काचित् प्रोक्षिता सा कयाचित्
"प्रविशति जलमध्ये शीतभीता मृगाक्षी॥"

( महामहोपाध्याय-कविसम्राट्-पण्डितराज-
श्रीयादवेश्वरतर्करत्नस्य )

पतति शिशिरविन्दुर्देहवस्त्रं विभिन्दन्
वहति मृदुरशेष: शीतलो मातरिश्वा।
उचितवसनहीना मत्तकामातिदीना
" प्रविशति जलमध्ये शीतभीता मृगाक्षी॥"

( श्रीहरिहरशास्त्रिण: )

समस्या—"सहेत विरहव्यथां बत शिरोषमृद्वी कथम्।"

पिकोऽनुकुरुते स्वरं शशभृदेष वह्नायते
विसं ननु करायते कमलमक्षियुग्मायते।
प्रियस्मरणबोधकं निखिलमेव संलक्ष्यते
"सहेत विरहव्यथां बत शिरोषमृद्वी कथम्॥"

( श्रीहरिहरशास्त्रिण: )

समस्या—"दिनद्वयं वर्षमध्ये पतिवक्त्रं न वीक्षते।"

चतुर्थीभाद्रमासस्य चन्द्रचूडस्य भामिनी।
"दिनद्वयं वर्षमध्ये पतिवक्त्रं न वीक्षते॥"

( राजकुमारन्यायरत्नस्य )

समस्या—"तुषारान्ते पश्य ध्वनति परित: कोकिलयुवा।"

"अपेयं पानीयं तुहिनवरण: शीतकिरणो
नलिन्यां मालिन्यं सपदि च बलाद् येन विहितम्।

गतोऽसौ शीतर्त्तुर्मधुरयमुपेतोऽति मुदित-
"तुषारान्ते पश्य ध्वनति परितः कोकिलयुवा ॥"
( प्रेमचन्द्रतर्कवागीशस्य )

समायातो नाथः कथमहह नाद्यापि स युवा
कथं प्राणान् धास्ये मरणसमयेऽस्मिन् सहचरि ।
वसन्तः सामन्तो मदननृपतेरेति सबल-
तुषारान्ते पश्य ध्वनति परितः कोकिलयुवा ॥"
( महामहोपाध्याय कविसम्राट्-पण्डितराज-
श्रीयादवेश्वरतर्करत्नस्य )

समस्या—"नाद्यापि किं प्राविशत् ।"

शीतांशुः चरितार्पितः परभृतः कृष्णत्वमासादितः
कामो नाम निरङ्गतामुपगतो माहेन्द्रकस्त्रियाः शापतः ।
ये ये तापविधायकाः मयदि ते सर्व्वेऽपि दैन्यं गताः
किन्त्वेको दयितो ज्वलत्युरसि मे "नाद्यापि किं प्राविशत् ॥"
( श्रीहरिहरशास्त्रिणः )

समस्या—"किं पीड्यते निर्द्दयम् ।"

भ्रूभङ्गीभिरनङ्गसुन्दरधनुर्वक्त्रेण शीतद्युतिं
बाहुभ्याञ्च मृणालकोमलदलं वाचापि पुंस्कोकिलम् ।
तुच्छत्वेन पुराऽन्वमन्यत वधूरेषा ततः सम्प्रतं
सर्व्वैस्तैरधुना तु नाथविरहे "किं पीड्यते निर्द्दयम् ॥"
( श्रीहरिहरशास्त्रिणः )

समस्या—"स्मितमुखी कुचकुम्भमहर्निशम् ।"

न बहिरेति पुरेव पुरान्तराद्-
भजति काममपि कामकृतां दशाम् ।
रहसि पश्यति किञ्च नवोत्थितं
"स्मितमुखी कुचकुम्भमहर्निशम् ॥"
( प्रेमचन्द्रतर्कवागीशस्य )

प्रियतमे सहसा समुपागते
विजहती तनयं स्तनपायिनम्।
निपुणमावृणुते वसनाञ्चलैः
"स्मितमुखी कुचकुम्भमहर्निशम्॥"

( श्रीहरिहरशास्त्रिणः )

समस्या—"दग्धीकरोति नलिनीं स्वकरेण मित्रः।"

प्राणोपमाः प्रियतमा अपि मित्रवर्ग-
दौस्थ्यस्त एव यदि जीवनयोगशून्याः।
यद्दृश्यतामहह जीवनतो वियुक्तां
"दग्धीकरोति नलिनीं स्वकरेण मित्रः॥"

( श्रीहरिहरशास्त्रिणः )

समस्या—"धवलयति धरित्रीमन्धकारप्रचारः।"

नभसि किमु कदाचिद्भासते पद्मवापी
तपति तुहिनरश्मिर्भूतलं किं कदापि।
क्वचिदपि च किमेतत् श्रूयते नन्वमारो
"धवलयति धरित्रीमन्धकारप्रचारः॥

( श्रीहरिहरशास्त्रिणः )

समस्या—"भानूदये कमलिनी मलिनीबभूव।"

एकान्तकान्तविरहे पतिदेवतानां
लुप्ता भवेदभिरुची रुचिरं चिरेण।
अस्ते रवौ हि ग्रमिनः प्रमदप्रदेऽपि
"भानूदये कमलिनी मलिनीबभूव॥"

( श्रीहरिहरशास्त्रिणः )

समस्या—"अहो दुरन्ता बलवद्विरोधिता।"

स्मितास्यगर्व्वेण कृतावधीरणः
सुपर्व्वपर्व्वोदितगर्व्वरीपतिः।

वधूवधायाद्य करं विसार्य-
"त्यहो दुरन्ता बलवद्विरोधिता ॥"

( श्रीहरिहरशास्त्रिणः )

समस्या—"सिन्दूरविन्दुर्विधवाललाटे ।"

धवाङ्कलीना धवसङ्गमार्थे
दिगम्बरत्वाद्विधवा निशीथे ।
नितम्बिनी भाति न भाति कस्मात्
सिन्दूरविन्दुर्विधवाललाटे ॥"

( महामहोपाध्यायराखालदासन्यायरत्नस्य )

अच्छेदविच्छेदकृता युगादौ-
र्नष्टं विधुं व्योमतले विलोक्य ।
सूर्य्योऽयमित्थं किमु मानिनि स्यात्
"सिन्दूरविन्दुर्विधवाललाटे ॥"

( महामहोपाध्यायपण्डितराज कविसम्राट्-श्रीयादवेश्वर-
तर्करत्नस्य )

समस्या—"नाराधि नारायणः ।"

बाढं सोढमहर्निशं विषयजं दुःखं न तप्तं तपः
भ्रान्तं भ्रान्तिकृतश्रमेण धनिनां द्वारेषु तीर्थेषु नो ।
दातारः किल कातरेण च मया भिक्षाशया सेविताः
हा कष्टं क्षणमप्यभीष्टफलदो "नाराधि नारायणः ॥"

आदिरसमाश्रित्य—

बिभ्राणां मुखनेत्रपाणिचरणव्याजेन पद्मावलीः
कम्बुं कण्ठमिषेण चक्रयुगलं पीनस्तनव्याजतः ।
त्वां हित्वा सुगदाधरां विधुमुखीं चक्रं गदां पङ्कजं
शङ्खं पाणितले दधत् स च मया "नाराधि नारायणः ॥

रीतिरसौ समस्यापूर्त्तेः सहस्त्रवर्षपूर्व्वमपि भारते वर्षे विरराजेति प्रदर्श्यतेऽस्माभिरधस्तात्।

जैनजनसभाजनभाजन 'आदिपुराण' प्रणेता श्रीमान् जिनसेनाचार्य्यः "पार्श्वाभ्युदय" नाम किमपि खण्डकाव्यं निबबन्ध, यत्र स महाकविकालिदासकृतस्य 'मेघदूतस्य' क्रमेण प्रतिश्लोकमेकैकपादं समस्यारूपेणादाय प्रणिनाय स्वयमवशिष्टपादान्। अथादौ कथावतारं काव्यस्यास्य प्रदर्श्य कानिचित् पद्यान्युपहरिष्यामि विद्यारसिकेभ्यः पाठकेभ्यः।

"इहैव भरतक्षेत्रे सुरम्यविषये पौदनपुरे अरविन्दनृपतिः भुवं पूर्व्वं पालयति स्म। तदा विश्वभूतिनाम्नो द्विजन्मनोऽनुदर्य्याश्च तनयौ कमठमरुभूतिसंज्ञकौ तद्भूपतेर्म्मन्त्रिपदं प्राप्तौ। तयोः क्रमेण वरुणा वसुन्धरा च भार्य्ये बभूवतुः। तयोः कनीयान् मरुभूतिः कदाचित् वज्रवीर्य्यरिपुराजविजयाय निजस्वामिनारविन्दभूपेनामा जगाम। तदा लब्धावसरो दुराचारो ज्यायान् कमठः स्वभार्य्यावरुणामुखेन वसुन्धरां भ्रातृपत्नीमङ्गीकारयामास किल। राजा विपक्षविजयानन्तरं स्वपुरागमने तद्दुर्व्वृत्तिं ज्ञात्वा भ्रातृपत्नीमितस्य का वार्त्तेति मरुभूतिं पृष्ट्वा तद्वचनानुसारेण पुरप्रवेशात् पूर्व्वमेव भृत्यमुखेन दुःसहामाज्ञां कारयित्वा अस्मच्चक्षुर्विषयो माभूदिति पुरात् कमठं निर्वाटयामास। सोऽपि भ्रातरि क्रुद्धो वनं गत्वा तापसवृत्तिं बभार। अथ मरुभूतिरागत्य भ्रातृवार्त्तामाकलय्य पश्चात् तापादगत्वा तमन्विष्य तत्कोपशमनाय पादयोरानमंस्तेनैव क्रोधान्धेन मस्तकस्थशिलापातेन मारितः। एवं भवान्तरेष्वपि तेनैव मृतिमित्वे त्वा कश्चिद्भवे तीर्थंकरनाम लब्ध्वात्रैव काशीविषये वाराणसीपूर्य्यां विश्वसेनमहाराजस्य ब्राह्मीदेव्याश्च सूनुः पञ्चकल्याणाधिपतिः पार्श्वनाथनामा मरुभूतिवरस्तीर्थङ्करो बभूव। कमठचरस्तु चिरं संसारे भ्रमित्वा शम्बरनामा ज्योतिरिन्द्रो भूत्वा स्वैरविहार-

समये परिनिष्क्रमणकल्याणानन्तरं प्रतिमायोगस्थितं तमुनीन्द्रं विलोक्य प्राक्तनविरोधेन घोरोपसर्गं चकारेत्यादि कथासङ्गतिर्विस्तरेण तत्पुराणेऽवलम्बया ।"

( "पार्श्वाभ्युदय"काव्यस्य टीका १—२पृ: )

इतः प्रभृत्यारभमानस्य 'पार्श्वाभ्युदय'काव्यस्य निवेश्यन्ते केचित् समस्यापूरणात्मकश्लोका:,—

"सोऽसौ जाल्मः कपटहृदयो दत्यपाशो हताशः
स्मृत्वा वैरं मुनिमपट्टणो हन्तुकामो निकामम् ।
क्रोधात् स्फूर्ज्जन्नवजलमुचः कालिमानं दधान-
"स्तस्य स्थित्वा कथमपि पुरः कौतुकाधानहेतोः ॥"

( १म सर्गः ८ श्लोकः )

"चिन्तानिघ्नः स्मरपरवशां वल्लभां काञ्चिदेकां
ध्यानव्याजात् स्मरति रमणीं कामुको नूनमेषः ।
अज्ञातं वा स्मरति सुदतीं या मया दूषिताऽसीत्
"तां चावश्यं दिवसगणनातत्परामेकपत्नीम् ॥"

( १म सर्गः, ३३ श्लोकः )

"वस्त्रापाये जघनमभितो दृष्टिपातं निरोद्धुं
यूनां कृत्स्ना सुरभिरचिता यत्र मुग्धाङ्गनानाम् ।
कम्पायत्तात् करकिशलयादन्तराले निपत्य
"स्त्रीमूढानां भवति विफलप्रेरणा चूर्णमुष्टिः ॥"

( २य सर्गः ११३ श्लोकः )

"यस्या हेतोस्तव च मम च प्रागभवेऽभूद्विरोध-
स्तत्रात्पत्रा निवसति सती साधुना किन्नराणाम् ।
दृष्टा सौम्यं सजलनयना त्वां स्मरन्ती स्मरार्त्ता
"मध्ये क्षामा चकितहरिणीप्रेक्षणा निम्ननाभिः ॥"

( ३य सर्गः, १८ श्लोकः )

"भो भोः साधो मम कुरु दयां देहि दृष्टिं प्रसीद
प्रायः साधुर्भवति करुणार्द्रीकृतस्वान्तवृत्तिः।
योगं तावच्छिथिलय मनाक् प्रार्थनाचाटुकारै-
"रात्मानं ते चरणपतितं यावदिच्छामि कर्त्तुम् ॥"

( ४र्थ सर्गः, ३६ श्लोकः )

( क्रमशः )

---

## चन्द्रालोकी

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीधूर्जटिप्रसादकाव्यतीर्थः । )

राजमार्गः ।

वाणी यस्य मुखाम्बुजे निवसती सौभाग्यदेवी रमा
शान्तीराज्यविराजिनी प्रणयिनी भक्तिः परा सात्त्विकी
नीतिः शत्रुविमर्द्दिनी स्वहृदये सत्यं हि बन्धुः सतो
दिक्पालांशभवस्य चास्य नृपतेराज्यं हि नाकायते ।

( उपसृत्य ) राजन् ! स्वस्ति—

राजा—भगवन् ! अभिवादये —

( प्रणमन्ति सर्व्वे । )

मुनिः—सर्व्वथा पुरुषायुषजीविनो मनःप्रसादस्ते भूयात् ।

राजा—भगवन् ! भवत्प्रसादात् सर्व्वमाशंसामहे, किन्तु बलवति रिपौ क्षीणप्राणे क्व नो मनःप्रसादः ।

मुनिः—तेनैव ते प्रसादो नूनं भविता ।

राजा—कथमेवम्विधेष्वपि व्यसनेषु मामुपहसति भगवान् ;

ग्रन्तुर्हि मत्सामन्ताज्यमाक्रम्य सर्व्वस्वं जिहीर्षति। ग्रतस्तावत् प्रसादः कथमिति निपुणमनुसन्दधानोऽपि न कथमपि सम्भावयामि।

मुनिः—किन्नाम ; नर्म्मवादिनमिव स्तावकमिव दक्षिणाक्रीत-देवलमिव मां ब्राह्मणब्रुवं वेत्सि ? किमहं त्वां मिथ्यास्तुतिपरम्परया प्रतारयितुमागतः ; ग्ररे ! क्षत्रियापसद !

मन्दारप्रणयावलेपविजडहृप्रदत्तस्रजो
जिष्णोर्गर्व्वविनाशिनं रघुपतेः सौमित्रिमायापहम्।
दुष्मन्तप्रणयार्थि-कण्वदुहितुः सौभाग्यनाशक्षमम्
उर्व्वश्या वडवानिदानमिह मां त्वं विद्धि दुर्व्वाससम्॥

राजा—( पादयोः पतित्वा ) क्षमतामजानता मया यद्व्याहृत-मधुना ; पुरा केनापि कारणेन भृशमुद्विग्नः खिन्नमना एवमनार्य्य-माचरितवान्।

दुर्व्वासाः—( उत्थाप्य ) वत्स ! उत्तिष्ठ मा ते चित्तं क्षुब्धमस्तु।

राजा—(उत्थाय) महर्षे ! तपोलब्धज्ञानातिशयस्य योगिनो न किञ्चि-दविदितमस्ति।

दुर्व्वासाः—ग्रतस्त्वां ध्यानावगतवृत्तान्तो यथाकथञ्चिदुपदेष्टु-मिहागतः ; श्रूयताम्।

राजा—ग्रवहितोऽस्मि।

दुर्व्वासाः—वत्स !

वरं ते राज्यनाशोऽस्तु वरमस्तु वनालयः।
न तथापुरर्व्वंशो देया क्षणाय जीविताशया॥

राजा—भगवन् ! एतैरमात्यादिभिस्तत् प्रागेव मन्त्रितमधुना तु भगवद्वचसा सम्यगवधारितं ; तथापीदं बिभेमि, यदि स नाम जातामर्षः सहसा यदुसैन्यपरिवृतः पुरीमिमामवरुध्य सर्व्वान् पौरान् विनाशयति ?

दुर्व्वासाः—वत्स ! ग्रलमलं शङ्कया ; ते पुनर्वीरा वीरधर्म्म-

मनुपाल्य कदापि पौरेषु विप्लवोत्पादयिष्यन्ति। त्वद्वैतेष्वेवामात्य-सेनापतिवर्गेषु राज्यभारं निक्षिप्य त्वमन्तः पुरान्तर्वर्त्तिना सुरङ्ग-द्वारेण नगराद्बहिर्गम्य देवजातान् देवान् वाश्रय। अत्रान्तरे यदि साहाय्यदानायाभ्यर्थिता आर्य्यावर्त्तनरपतयः समागच्छन्ति, तदानायासेन दुष्पारमिमं विपत्सागरं तर्त्तुं समर्थाः स्याः।

राजा—भगवन्! न मस्यङ्गनिक्षिनामि पलायनं कुतः सम्भाव्यते क्षत्रियाणामिति तदपीह लोकेऽयशसे परत्र च महारौरवाय भविष्यतेऽत्र।

दुर्व्वासाः—( सभ्रूभङ्गं ) का नाम तवैहिकपारत्रिकभावना? केवलं मद्वचसा कार्य्यमवधार्य्यताम्।

राजा—अपिच भगवन्! भगवता श्रीकृष्णेन सह ते नाम नरपतयः कथङ्कारं योद्धुं समर्था भवेयुः।

दुर्व्वासाः वत्स!

निर्व्वीरं किमु भारतं किमिति भो नाक्षत्रलाः क्षत्रियाः।
किंवा भास्करचन्द्रवंशतनया जीवन्मृता दुर्व्वलाः।
येषां सिंहपराक्रमोद्धतभुजाटोपेन सर्व्वा मही
सन्त्रस्तेव पलायते मृगवधूः प्राणात्ययाशङ्कया॥

किञ्चास्मिन् समाहारे यस्य दैवी क्षमता विद्यते स वा, यस्य वा तस्मिन् भगवति वासुदेवे परमा भक्तिरस्ति स वा योद्धुं शक्नुयात्।

राजा—भगवन्! तद्भक्तास्तेन सह युध्यन इति कथं सङ्गच्छते?

दुर्व्वासाः—प्रतिज्ञापालनं महाव्रतं क्षत्रियाणामिति मन्यमाना यदि ते प्रतिज्ञापालनाय विरोधमपि कुर्य्युः, तदा स हि महानुभावतया भक्ताधीनो दीनबन्धुस्तत् प्रतिरोद्धुं न क्षमेत; तद्वत्स! केवलमिदमाशंसामहे—

अवतुङ्गर रक्ष गौरवमदो मन्यस्व कीर्त्तिं परां
धर्म्मे क्षत्रियराजवंशसुलभे वर्त्तस्व शोकं त्यज।

तत्क्षिप्याखिलतां विजेतुमनसा यावत्त युद्धस्थलीं
यच्छ्रुत्वा करणीयमस्ति सफलं तन्नाम वो जायताम्।

परमार्थतस्त्वेवं किल सर्व्वथा मन्तव्यम्।

क्षत्रियाणां यशोदेहं चालो ऽर्तो हि जीवनम्।
सार सारमिदं वीर! धर्म्मो रक्ष जयोऽस्तु वः॥

राजा—यथावानादिशति।

दुर्व्वासाः—तत्साधयामो वयमिदानीं स्वकार्य्यसाधनाय; समयावसरे पुनरपि साक्षात्कारो भविष्यति। विजयतां (निष्क्रान्तः)।

सेनापतिः—(अपवार्य्य) हन्त! विजितमस्माभिर्यदयं महाराजोऽधुना व्यक्तदौर्म्मनस्यः समरायात्सहते नाम।

राजा—यथाभिहितपूर्व्वमनुष्ठीयताम्

सेनापतिः—यथाज्ञापयति देवः।　　(निष्क्रान्तः)

राजा—(दक्षिणाक्षिस्पन्दनं सूचयित्वा) अहो शुभफलार्थिनि दक्षिणाक्षिस्पन्दनं समरविजयमाशंसते।

(ततः प्रविशति सम्भ्रान्तो जयत्सेनः।)

जयत्सेनः—विजयतां विजयतां महाराजः।

राजा—अपि जानासि का वार्त्ता परराष्ट्रस्येति।

जयत्—देव! महती वार्त्ता विद्यते, तामेव तूर्णं भवते निवेदयितुमुपागतोऽस्मि।

राजा—अवहितोऽस्मि, कथ्यताम्।

जयत्—देव! गच्छन्नेव पथि भवत्प्रतिनिधिं कमपि प्रणिधिं पूर्व्वपरिचयवशादेवगत्वा कयाचित् संज्ञयावगम्याहमपृच्छम् भद्र! कथं त्वं त्वरमाण इहागच्छसि। स प्राह यथा किल श्रीकृष्णो रोषपरवशो बहुसैन्यपरिवेष्टितो युद्धार्थमागच्छति; अद्या अवन्तीनगर्य्याश्च पट्सु क्रोशेषु विनिवेशितकटकस्तिष्ठति। अहमपि तच्छ्रुत्वा पुनस्तं तद्गतिप्रेक्षणाय तत्र प्राचोदयम्।

राजा—ननु महाब्रह्मघोषमुद्रवमुखेनानपेत्यैव मद्राज्यसीमान्ते तेन यादवपतिना सेनाकटकोऽधिष्ठापितः।

जयत्—अहमप्येवं सम्भावयामि।

राजा—( विमृश्योत्थाय च) त्वर्यतां त्वर्यताम्, ; अलं विलम्बेन ; सेनापते ! क्षिप्रं भवता सेनापतिश्चित्रवर्म्मा दुर्गद्वारमाक्रम्य स्थातुं वक्तव्यः। अपिच ससैन्येन भवताग्रेसरीभूय तानि यदुबलानि प्रतिबध्यताम् ! भो भोः समरविलासिनो महामानोन्नता वीराः !

इदं राज्यमयं देहः कुलकीर्त्तिरिमाः प्रजाः।
तावत् स्थास्यन्ति लोकेऽस्मिन् यावद्युष्मद्भुजे बलम् ॥

जयत्—देव ! एतदेव बहुतरमनुजीविषु ; तदधुनैवेच्छामि प्रतिबलप्रतिरोधाय, अनुजानातु मां देवः !

राजा—भद्र ! गच्छ ; त्वत्कृपाणतेजसा नश्यन्तु परवीराः ; विजयस्व।

जयत्—( प्रणम्य प्रस्थितः )।

राजा—मन्त्रिन् ! शीघ्रमेव भवता पुरवासिना दुर्गान्तःसंस्थाप्यन्ताम्।

मन्त्री—यथाज्ञापयति देवः।

राजा—अन्यच्च श्रूयताम् ; वड़वारूपामुर्व्वशीमादायागम्यन्ता-मित्यादिश्यन्तामश्वपालाः ; अत्रागताय श्रीकृष्णाय कथितपूर्व्वा वड़वा दर्शनीया चेति। अतोऽन्यत् किं कृत्यमस्ति।

मन्त्री—किमन्यत् ; अस्मद्युद्धक्षण एवापसर्त्तव्यं भवता मुनि-कथितेनानेन सुरङ्गमार्गेण।

राजा—तद्गृह्यतामियं प्रमाणमुद्रा राजाग्रजान्न भवता ; हा धिक् कष्टम्—

प्रथमाङ्के ( वीर्य्यं यस्य वशंगता वसुमतीत्यादि पठति।)

मन्त्री—देव ! देवादिदेवो महादेवो नः स्वस्ति करिष्यति।

राजा—( जानुनी पातयित्वा ) हे भक्तवत्सल! त्रिभुवनैक-शरण! सृष्टिस्थितिप्रलयनिदान! भगवन्! शम्भो!

स्वर्गं स्वर्गमयं विधाय हिमवत्कैलासशैले वसन्
भिक्षापात्रकरो भवन् पतिरता भार्य्यापूर्णापि च।
भोगातीतवरेण्ययोगनिरतौ भक्ता सुसिद्धिप्रदौ
दीनं मां दयतामनन्तमहिमन्। शम्भो त्वमेका गतिः।

(नेपथ्ये) भो भो पौरजानपदाः! सावधाना भवन्तु, यदयं जाता-मर्षो यदुवंशवीरो वासुदेवो युद्धार्थमिहागच्छति, तत् सज्जीभवन्तु भवन्तः। यतः

सैन्याश्वस्वजातधूलिपटलैराच्छाद्यते दिङ्मुखं
चीत्कारैर्विजयोन्मदध्वनिभृतामापूर्य्यते द्राङ् नभः।
वीर्य्यास्कन्दनभारमूर्च्छितभुवा प्राकम्प्यते सन्ततं
हृद्गस्तोशिग्धभीतिकम्पितरवैः सर्व्वत्र संस्तभ्यते॥

तथाहि—

गृह्यन्तां धनुरादिशस्त्रनिकरा ये शत्रुनाशक्षमाः
पीयन्तां कुसुमासवानि भविता यैरद्य दैहे तमः।
भल्लप्रासकपट्टिशप्रहरणाच्चोत्क्षिप्यतां सर्व्वथा
श्रीकृष्णो यदुसैन्यनायक इतो युद्धार्थमागच्छति॥

( प्रस्थानः )

## दीनदम्पती ।

नीलाम्भोधरमुक्तमम्बरतलं शान्तो दिशां कम्पिमा
नारास्तीरकदम्बकोमलरुचि: शून्याङ्गने विक्षते ।
चन्द्रस्तन्द्रिलतां विहाय मधुरैः सान्द्रैः करैरम्बरे,
शम्भोः शीर्षनिवासगौरववशादानन्दमाविन्दते ॥
वर्षानीरदमुक्तनीरकलितैः पङ्कैश्चिरादाविला,
गङ्गा गाढतरङ्गसङ्गततटा स्वच्छत्वमभ्यागता ।
शस्यस्तम्बवशाद्यसम्भृततया श्यामाद्य सर्व्वंसहा,
यूथं कीरपतत्त्रिणां प्रतिदिशं शस्यार्थमुज्जृम्भते ॥
वापी स्वच्छजला जले कमलजं सम्यक् समुन्मीलितम्,
तत्रास्ते भ्रमरव्रजः कमलजे तद्गुञ्जिते माधुरी ।
माधुर्य्यां सविलासमानसहरो भावः परं दृश्यते,
शान्ता शारदकौमुदी प्रतिपदं काप्यद्य सञ्चरते ॥
नीपानां कुसुमावली विगलिता वर्षाविलोपाद्भुवः,
शुभ्रा काशवसुन्धरा कुसुमिता तूलैरिव व्याकुला ।
मन्दो गन्धवहः प्रसूनमधुरं वल्लीकुलं नर्त्तयन्,
आराद्वेदयते नवीनसुषमां देवप्रियां शारदीम् ।
एवं दिङ्मुखमालिनव्यपरमे ज्योत्स्नाविधौताम्बरे,
शेफालीकुसुमश्रिया क्षितितले चित्रीकृते कोमले ।
आयाता गिरिजा गिरामधिपया लक्ष्म्या सुताद्यैस्तथा,
मर्त्त्यागारमसारसंसृतिमतां दुःखानि भेत्तुं परम् ॥
आनन्देन वियुक्तपूर्व्वमधुना भूमन्दिरं विन्दते,
कामातीतमपूर्व्वमेव मधुरानन्दं जनन्यागमात् ।

शोकार्त्तः श्वचमुच्चिनन्ति तरसा दुःखी न दुःखे स्थितः,
सर्व्वे मुग्धहृदो वहन्ति जननीपादेश्वरे कामनाम् ॥
एवं प्रावटकान्तिकोमलतमे काले मुदा व्याकुले,
देव्यात् कस्यचिदालयस्य निभृते देशे स्थितौ दम्पती ।
हा हा हन्त नवीनभूषणभृतो लक्ष्मीवतामात्मजाः
ताभ्यामात्मसुताय दातुमनघं वासोऽपि नो शक्यते ॥
किंवा पूर्व्वमकारि दुष्कृतमहो येनेदमासाद्यते,
दुःखं जीवनविप्रयोगविषमं ह्याभ्यां निशावासरम् ।
दातुं भोज्यमभीष्टमात्मजमुखे नित्यं न वा शक्यते,
क्षेमं पृच्छति नापि कोऽपि सुतरां दुःखं समीक्ष्यापि वाम् ॥
मातर्वात्सरिकार्च्चनं तव मया केनाद्य सम्पाद्यताम्,
चित्तं व्यस्तमुपास्ति योगनियमाः सर्व्वे विदूरं गताः ।
तेनापि प्रियसाहसेन सदने पूजाघटः स्थापितः,
स्वां पूजां स्वयमेव कारय शिवे तुभ्यं नमः कोटिशः ।
दम्पत्योरतिदुःखदुर्गतिमिमां गाढं समापन्नयो-
स्तत्रोपास्थित सादरेण मनसा पुत्रः सहास्याननः ॥
प्रावोचत् पितरौ समागतवती पत्या समं सोदरा
ज्येष्ठा मे भवनोपसन्नशकटे नानाविधैर्वस्तुभिः ॥
लब्ध्वा स्वर्गसुखं ततो हृदि परं दुःखान्वितौ दम्पती,
मातुर्मङ्गलजनप्रकीर्णकवचासारं विमृश्य क्षणम् ।
पूजार्थं निहिते घटे बहुविधां कृत्वा नतिं भक्तितः,
प्रागातां भवनाद्बहिः प्रियतमां कन्यां समालिङ्गितुम् ॥
कन्यानीतविचित्रवस्तुनिवहैः पूजा समाप्तिं गता,
पुत्री दुर्लभवेशभूषितवपुर्विश्वेश्वरीं प्राणमत् ।
भिक्षुभ्यो धनिकाबलीदुहितया भोज्यप्रदानं कृतम्,
वाञ्छातुल्यविधानशक्तिविरहाद्दुःखस्य नो सम्भवः ॥

तत्र त्रीणि दिनानि यापितवती कनया सपत्यात्मजा,
प्रागच्छद्धिमशैलसंनिभसमुदये यामे द्वितीये गृहम्।
पूजायाः सकलाङ्गसाधनवशादानन्दितौ दम्पती,
पार्वत्या दुहितुश्च दूरगमनाद् दीर्घं विषादं गतौ॥
तस्मादेव परे दिने स्वदुहितुः पत्रं समभ्यागमत्
मातस्तात कथं नु वार्षिककृतिः पूजा समाप्ताभवत्।
अस्माभिर्बहुकर्मबाधिततया गन्तुं न युष्मद्गृहे
पूजाह्ने वत पारितं स्मृतिरियं दुःखाय नः कल्पते॥
लब्ध्वा स्वीयसुताप्रदत्तमुचितं पत्रं नु तौ दम्पती,
कञ्चिद् विस्मयमापतुः प्रतिपदं सञ्चिन्त्य मातुः कृपाम्।
नूनं शैलसुता सुतादिमहिता कन्यास्वरूपं गता,
प्रागाद्दीनविकेतनं घटयितुं स्वीयां समभ्यर्च्चनाम्॥

## दुर्गेशनन्दिनी।

(पूर्व्वतोऽनुवृत्ता।)

### पञ्चमः परिच्छेदः।

### विधवा।

कुत्र तावत् तिलोत्तमा ? क्व तावत् सा पितृहीना अनाथा बाला ? कुत्र वा विमला ? कुतो वा सा समागता पतुर्वधभूमिम् ? कुत्र वा पश्चाद्गता ?

कथं मुमूर्षुर्वीरेन्द्रसिंहो न ददर्श प्रियतमायाः अपि दुहितुः मुखम् ? कथं वा स तन्नामश्रवणादेव हुताशनवत् प्रादीप्यत। कथमुक्तं तेन—न मे दुहिता वर्त्तत इति ? कथं वा अवाचयित्वा एव दूरं निचिक्षेप विमलाप्रेषितां पत्रिकाम्।

कथमिति ? स्मर्य्यतां तावत् कतलुखानं प्रति वीरेन्द्रस्य तिरस्कार-वचनम्,—पर्य्यालोचय किं भीषणं वृत्तमिति।

कलङ्कितं खलु पवित्रं कुलमिति वदन्नेव जगर्ज्ज तदा मृत्युभीत: शार्दूल:। पृच्छामि कुत्र तावत् तिलोत्तमा विमला वा ? अनु-सन्धीयताम् (वीचीयतां) तावत् कतलुखानरमणीनाम् आवासस्थानम्। तत्रैव द्रक्ष्यसि।

एषैव गति: संसारस्य। दारुणं तावत् आवर्त्तनम् अदृष्टचक्रस्य। रूपं, यौवनं, आर्जवम्, सारल्यम, अमलत्वं भवति सर्व्वमेव एतच्चक्र-नेमिपेषणेन पिष्टम्। विजिते कुत्रचित् दुर्गे ग्रामे वा तत्र स्थिता चेत् कापि लावण्यवती ललना,सा खलु भोगार्थमेव गृहीता भवतीत्येवासीत् रीति: कतलुखानस्य। मन्दारणदुर्गजयात् परेद्यु: तत्रोपागमस्य वन्दिषु यथावत् विधाने, दुर्गरक्षार्थं सैन्यनियोजने च आसीत् व्यापृत: कतलुखान:। वन्दिजनेषु विमलां तिलोत्तमां च दृष्ट्वैव स्वविलास-भवनमलङ्कनाय प्रेषितवान्। पश्चाच्चासीत् इतरकार्य्येषु अतीव व्यापृत:। श्रुतं तेन राजपुतसेना श्रुतजगत्सिंहबन्धनवृत्तान्ता आरादेव तिष्ठति कुत्रापि आक्रमणाय इति, अतस्तस्या: पराभवीकरणाय यथोचितं व्यवस्थाविधानव्यापृतेन तेन न प्राप्तोऽवकाशो नव-लब्धानां ललनानां सङ्गसुखलाभस्य।

विमला तिलोत्तमा च पृथक् कक्षेषु रक्षिता। पतितासीत् यत्र भूमौ पिढच्छीनाया: नवीनाया: धूलिधूसरा देहलता, पाठक न कार्य्यं तत्र नयनपातेन। किं प्रयोजनम् ? को वा इदानीं तिलोत्तमां प्रति दृष्टिं ददाति ? मधूदये नवलतायां मन्दवायुहिल्लोलविधूतायां को वा सुवासाश्रया सादरं तां नोपगच्छति ? नैदाघप्रभञ्जनेन सोपद्रवायां तस्यां भूतलगतायां उन्मूलितद्रुमराशिषु कस्तावत् वृक्षं विहाय लतायां दृष्टिं ददाति ? काष्ठिका: काष्ठं नयति, लता तु केवलं पदतलेन पीड्यत एव।

गम्यताम् तावत् तिलोत्तमां विहाय अन्यस्मिन् कक्षे। तत्रैव गच्छामः, यत्र तावत्—वत्सलायाः, चतुरायाः, रामप्रियायाः, रसिकायायाश्च विमलायाः, स्थाने गम्भीरा, अनुतापतप्ता, मलिना, विधवा, दत्तनेत्राञ्चला सती समासीना वर्त्तते।

किमेषा विमला? नास्ति तस्याः स केशविन्यासः। मस्तके वर्त्तते धूलिराशिः। नास्ति कारुकार्य्यरञ्जितं तदुत्तरीयम्। नास्ति रत्नखचितं तत् वक्षोजावरणम्। जीर्णं क्षुद्रं च तत् वसनम् अतीव मलिनम्। कुत्र गतः स भूषणराशिः। कुत्र तत् अंशसंस्पर्शलोभि कुण्डलयुगलम्? कथं नेत्रद्वयं स्फीततां गतम्? कुत्र स कटाक्षविक्षेपः? ललाटदेशे वा कथं क्षतं दृश्यते—तस्मात् रुधिरं च प्रवहति।

विमला ओसमानं प्रतीक्षमाणा तस्थौ। ओसमानः पाठानकुलमलङ्कार। युद्धं नाम तस्य स्वार्थसाधनम्, वृत्तिधर्म्मश्च। अतो युद्धजयाय नासीत् तस्य कस्मिन्नपि कार्य्ये सङ्कोचलेशः। युद्धप्रयोजने तु सिद्धे स पराजितं शत्रुं प्रति कदापि कमपि अत्याचारं नानुमन्यत। स्वयं कतलुखानः चेत् विमलां तिलोत्तमाञ्च अन्तरेण एवं नाविधास्यत, तदा ओसमानस्य कृपया न जातु ते वन्दिग्राहं गृहीते अभविष्यताम्। तस्यैव अनुकम्पया मरणसमये विमला स्वामिनो दर्शनं अधिगता। पश्चात् सा वीरेन्द्रपत्नीति परिज्ञातस्य ओसमानस्य दयार्द्रं हृदयं आर्द्रतरं सञ्जातम्। ओसमानस्तावत् आसीत् भ्रातुष्पुत्रः कतलुखानस्य। अतः शुद्धान्तेऽपि तस्य गमनागमनिषेधम्। एतत्तु दृष्टपूर्व्वमेव। यत्र विहारगृहे कतलुखानस्य दयिताः प्रवृत्तुः, तत्र तस्य पुत्रा अपि निषिद्धप्रवेशाः, ओसमानोऽपि तथैव। सः खलु कतलुखानस्य दक्षिणो हस्तः, तस्यैव भुजबलेन कतलुखानः आमोदरतीरं यावत् उत्कलप्रदेशम् अधिकृतवान्। अतः पौराः आसन् प्रायेण कतलुखानस्य इव तस्यापि वशाः। अत-

एव अद्य प्रातः विमलायाः प्रार्थनया अन्तिमकाले स्वामिसन्दर्शनं जातम्।

वैधव्यजननात् तृतीये दिवसे विमला शेषान् अलङ्कारान् कतलु-खाननियोजितदास्यै अयच्छत्। दासी पप्रच्छ—"किम् आज्ञाप्यते अयं जनः?"

विमला प्रोवाच—"गम्यतां त्वया ह्य इव पुनरपि अद्य ओसमान-समीपम्। कथ्यताञ्चासौ—अहम भूयोऽपि सकृत तस्य दर्शनाभि-लाषिणी। एषा एव मे पश्चिमा प्रार्थना। न खलु पुनरपि तं प्रार्थयिषेय।"

दासी तथा चकार। ओसमानः दासीमुखेन उवाच—"त्वद्गार-गृहे मम गमनं तु सङ्कटपूर्णम्। कथय तामेव मम आवासगृहा-गमनाय।"

विमला पप्रच्छ—"कथमहं गच्छामि?"

दासी प्रत्यभाषत—"तेनैव तस्य उपायो विधातव्य इत्युक्तम्।"

निशामुखे काचित् आयेषायाः दासी आगम्य शुद्धान्तप्रतीहारेः वर्षवरैः सार्द्धं किमपि आलप्य विमलया सह ओसमानम् उपा-गच्छत्।

ओसमानोऽपृच्छत्—"कं वा पुनस्ते उपकारं करोमि?"

विमला प्रत्यभाषत—"क्षुद्रं नाम तत्। अपि कच्चित् कुमारः जगत्सिंहो जीवति?"

ओसमान—"जीवति।"

विमला—"किं स स्वाधीन उत बन्दी?"

ओसमान—बन्दी तावत्। परमधुना न स कारागृहे। भग्नाङ्गः स वन्यः शय्यागतो वर्त्तते। कतलुखानस्य अज्ञातम् आव शुद्धान्ते एव। यत्नविशेष एव तत्र स्थापनस्य कारणम्।

विमला श्रुत्वावदत्—"जातं तावदमङ्गलम् दुर्भगाणामस्माकं सम्पृक्तस्यापि जनस्य। दुर्दैवेन तु एवं सञ्जातम्।

इदानीं तावत् यदि जीवेत् स राजपुत्रः, तदा नीरोगाय तस्मै दातव्या एषा पत्रिका। अधुना तु भवतस्समीपे एव तिष्ठतु। एषैव मे भिक्षा।"

ओसमानः प्रत्यर्प्य लिपिमुवाच—"अयुक्तं मम एतत्। यत्रैव तिष्ठतु राजकुमारः, स वन्दित्वेनैव गण्यते, वन्दिभ्यः अपठित्वा लिपिं दातुं न युज्यते। आदेशविरुद्धञ्चैतत् मम प्रभोः।"

विमला प्रोवाच—"नास्ति किञ्चिदत्र भवताम् विपदः स्थानम्। अतो न भविष्यत्यवैधं कार्य्यम्। अन्यच्च—प्रभोरादेश इति? भवान् स्वयमेव आत्मनः प्रभुः।"

ओसमानः प्रत्यभाषत—"अन्यत्राहं कदापि पितृव्यस्य आदेश विरुद्धम् आचरामि। परं नेदृशे व्यापारे (विषये)। भवत्या यत् उच्यते, नास्ति किञ्चित् अत्र विरुद्धम् इति तथैवाहं प्रतीमि। परमत्र मया नियमभङ्गो न कर्त्तव्यः। मया तु एतत् कार्य्यं न भविष्यति।"

विमला क्षुण्णमना अवदत्—"तदा पठित्वा एव दास्यति भवान्।"
ओसमानो लिपिं गृहीत्वा पठितुम् आरभत।

---

षष्ठः परिच्छेदः

विमलायाः पत्रम्

युवराज,—

एकदा स्वकं परिचयं दास्यामीति आसीत् मे प्रतिश्रुतम् भवते। उपस्थितोऽद्य स एव अवसरः

आसीत् मे आशा, तिलोत्तमायाम् अम्बरसिंहासनरूढ़ायां परिचयावसरो भविष्यति। सा मे आशंसा तु विफलतां गता। मनेऽ, अचिरादेव भवत: कर्णपथं यास्यति, नास्ति इह काचित् तिलोत्तमा, विमला वा। अस्माकम् आयुष्कालः पूर्णतां गत:।

अतएव भवते लिख्यते लिपिरेषा। महापापाहम्। कृतं मया बहूनि विधिविगर्हितानि कार्य्याणि। उपरतायां मयि, जनो मां निन्दिष्यति, कति वा अवाच्यानि वक्ष्यति। कस्तावत् तदा मे कलङ्कमपनेष्यति, को वा वर्त्तते ईदृशः सुहृद् ?

अस्ति तावत् एकः। स तु अचिरेणैव लोकालयं परित्यज्य तपसे तपोवनं गमिष्यति। तत्रभवता अभिराम-स्वामिना दासा: किमपि कार्य्यं न सेतस्यति। राजकुमार, आशंसेन मया दिनमेकमपि भवत: स्वजनेषु परिगणितो भविष्यामि। करोतु भवान् स्वजनकार्य्यम्। किं वा ब्रवीमि ? दुर्भगाणामस्माकं दौर्भाग्यम् अग्निशिखा इव समासन्नं बन्धुमपि समाचक्राम। भवतु, दास्या भिक्षां स्मरिष्यति भवान्। यदा जनाः वक्ष्यन्ति आसीद्विमला कुलटा, दासीवेशेन गणिका वा, तदा भवता वाच्यम्, विमला अनुच्चवर्णसम्भवा, मन्दभाग्या, आशानिरसमना, दोषदुष्टा च,— न तु कदापि गणिका। स्वर्गगतो महाराज एव दिष्ट्या तस्या: पाणिं जग्राह। न खलु विमला दिवसमात्रमपि तस्य प्रभोर्विश्वासघातिनी।

एतावन्तं कालमप्रकाशितेऽस्मिन् वचने कस्तावत् विश्वसिति ? कथं वा पत्नी अपि दासीव आसम् श्रूयताम्—

मन्दारणदुर्गाभ्यासे कस्मिन्नपि ग्रामे अवात्सीत् शशिशेखरभट्टाचार्य्य:। विभवशालिन: कस्यचित् ब्राह्मणस्य पुत्र: शशिशेखर: यौवने यथावत् शास्त्रमधीतवान्। अध्ययनात् तु स्वभावदोषो न गच्छति। स खलु भगवता सर्व्वगुणालङ्कृतोऽपि प्रबलदोषेणैकेन दुष्ट:। सोऽयं कामज एव दोषः।

आसीत् मन्दारणदुर्गे जयधरसिंहस्य कस्यापि अनुचरस्य वंशे कापि प्रोषितभर्त्तृका ललना। अलौकिकलावण्यवत्यास्तस्याः पतिरासीत राजसैनिकः। अतः सुचिरं स्वदेशात् प्रोषितः। सा तावत् रमणी शशिशेखरस्य नगनपथस्य पथिकः समजायत, अल्पेनैवकालेन तस्याः पतिविरहितायाः शशिशेखरसंसर्गेण गर्भसञ्चारः सञ्जातः।

न खलु पातकं पापस्य चिरं सगुप्तं तिष्ठतः। आकर्णितं शशिशेखरस्य दुष्कृतं पिता। स तावत् पुत्रकृतपरकुलकलङ्कमपनेतुं पदेन तस्याः स्वामिनं त्वरितं गृहमानिनाय अपराह्णं पुत्रञ्च बहु भर्त्सयामास। जातकलङ्कः शशिशेखरो देशं तत्याज।

पितृगृहं परित्यज्य शशिशेखरः काशीं प्रतस्थे। तत्र च कस्यापि सर्व्वस्वस्य दर्शनशास्त्रविद्याख्यातिसम्पन्नस्य समीपे अध्येतुं प्राक्रमत। तीक्ष्णबुद्धिशाली दर्शनादिशास्त्रेष्वभवत् ज्योतिषे च अद्वितीयः सञ्जातः। आचार्य्यः अतीव सन्तुष्टस्तम् अध्यापितवान्। अवात्-सीत् शशिशेखरः कस्याश्चित् शूद्रायाः गृहाभ्यासे। तस्याश्च शूद्रायाः आसीत् काचित् नवयुवतिर्दुहिता। युवतिर्ब्राह्मणभक्तया तस्य आहार्य्यसंविधादिकं गृहकार्य्यं सम्पादयति स्म। पितोर्दुष्कृतम् अपावरणीयम्। किं बहुना, शूद्रकन्यायां शशिशेखरात् जाता इयमधन्या। श्रुत्वैवेदं गुरुः शिष्यमुवाच—"वत्स, न भवेत् मत्तो दुराचाराणाम् अध्ययनम्। त्वं न पुनरत्र स्वमुखं दर्शय।"

सञ्जातलज्जः शशिशेखरः काशीधाम्नः प्रस्थितः।

माता हि मातामहेन कुलटेति गृहात् निष्कासिता।

दुःखिनी माता तु कुटीरमेकमधिवसन्ती मया सह कायिकश्रमेण जीवनम् अधारयत्। न कोऽपि दुःखिनीम् अनुकम्पते स्म। नाधिगतश्च पितुरपि कश्चित् सन्देशः।

गतेषु कतिषु वर्षेषु एकदा शिशिरसमये कश्चित् धनिकः पाठानो वङ्गदेशात् दिल्लीनगरीं गच्छन् काशीं सम्प्राप्तः। निशायां नगरी-

मुपस्थाय आवासस्थानं न प्राप । आसीत् तेन सह तत्पत्नी कुमारश्च । ते तु मातृकुटीर उपसृत्य कुटीरमध्ये निशायापनप्रार्थनं विज्ञाप्य इदमूचुः अस्यां रात्री हिन्दुपल्लीमध्ये न कोऽपि मे आवासाय स्थानं अदात् । कुत्र वयमधुना इमं बालकम् आदाय गमिष्यामः । नानेन हिमम् सोढ़ुं शक्यते । न विद्यन्ते मया सह बहवः परिजनाः कुटीर-मध्ये एव भविष्यति अवस्थानम् अस्माकम् । दास्याम्यहं तुभ्यं यथेष्टं पारितोषिकम् । पाठानस्तावत् गुरुप्रयोजनेन त्वरितं दिल्लीं अभि प्रस्थितः । आसीत् एक एव भृत्यस्तेन सह ।

दीना दयार्द्रहृदया च मे माता धनलोभेन वा बालकं प्रति स्नेहाद्वा पाठानाय कुटीरे आश्रयं ददौ । पाठानः सपुत्रकलत्रः निशायापनार्थं कुटीरैकदेशे प्रदीपं प्रज्वल्य अशेत । अन्यदेशे तु वयं शयिताः ।

तदा तु वाराणस्यां प्रबलमासीत बालकचौर्य्यभयम् । अहं तु तदा षड्वर्षदेशीया एव । न शक्नोमि सर्व्वं यथावत् स्मर्त्तुम् । मातुर्यत्श्रुतं तद्वोच्यते ।

निशीथे प्रदीपः अज्वालीत् । कश्चित् चौरः पर्णकुटीरे कृतसन्धिः पाठानबालकम् अपहृत्य पलायितुमुपचक्रमे । तदा प्रबुद्धया मया चौरकस्य सर्व्वम् आलोकितम् । चौरो बालकं नयतीति दृष्ट्वा उच्चैः चीत्कारं कृतवती । मम चीत्कारशब्देन सर्व्व एव प्रबोधिताः ।

पाठानपत्नी बालकं शय्यायाम् अदृष्ट्वा कातरं अरोदीत् । आसीत् तदा चौरो बालकमादाय शय्यान्ते लुक्कायितः । पाठानस्तं केशग्राहं गृहीत्वा बालकं बलात् जग्राह । अनुनयं कृतवतः चौरस्य, असिना कर्णौ एव छित्त्वा तं निःसारितवान् ( दूरीचकार ) ।

एतावत् वाचयित्वा लिपिम् शोभमानः अन्यमनाः चिन्तयन् विमलां पप्रच्छ—"किं ते कदापि नासीत् अन्यत् किमपि नाम ?"

विमला प्रत्यभाषत—"आसीत् पुरा । तत् तु यावनिकमिति पित्रा

नामपरिवर्त्तनं कृतम्" "किं तन्नाम ? किं माहक इति।" सविस्मयं विमलावादीत् "कथं भवता ज्ञातम् ?" श्रीसमान: प्रोवाच --"अहमेव स चोरित: शिशु:।"

विमला विस्मयं गता। श्रीसमान: पुनरपि वाचयितुं प्रचक्रमे।

"परेद्यु: प्रात: पाठानो गमनसमये मातरमवाच—"नालमहमधुना तव कन्याया: प्रत्युपकाराय। परं कथय मां तवाभिलाषम्। अहमधुना दिल्लीं गच्छामि। तत: पश्चात् तव अभीष्टं प्रेषयामि। अर्थेन चेत् प्रयोजनं तदपि प्रेषयिष्यामि। माता प्रत्यभाषत—"नास्ति मे धनेन प्रयोजनम्। शारीरिकपरिश्रमेणाहं कालं यापयामि। यदि वाटग्रामसमीपे वर्त्तते तं प्रतिष्ठा काचित्—(प्रतिपत्ति:)।—

वाक्यसमापनात् पूर्व्वमेव पाठान: प्रोवाच—"पर्य्याप्तं वर्त्तते। अक्वं मया राजसभायां तवोपकारं कर्त्तुम्।"

माता प्रोवाच—"तदा अस्या मे कन्याया: पितरमनुसन्धाय वार्त्तां मे प्रेषयितुमर्हति भवान्।"

पाठानस्तत् प्रतिश्रुत्य गत:। मातुर्हस्ते सुवर्णं ददौ, माता तु न जग्राह। स प्रतिश्रुतिमनुसृत्य राजपुरुषान् पितुरनुसन्धानाय नियोजितवान्। परं अधिगत: स कश्चित् उदन्त:।

गतेषु ततश्चतुर्दशसु वर्षेषु राजपुरुषा: पितरं मे अनुसन्धाय प्रचारितपूर्व्वया राजाज्ञया मातं लिपिं प्रेरयामासु:। आसीत् पिता दिल्लीनगर्य्यामेव। स खलु शशिशेखरभट्टाचार्य्य इति नाम परित्यज्य अभिरामस्वामीति नाम्ना आत्मानं प्रकाशयामास।

मातु: स्वर्गगमनादनन्तरमेव आगत एष सन्देश:।

यथा तावत् अमन्त्रं पाणि: ग्राहित:, तस्याश्चेत् स्वर्गगमनाधिकारो वर्त्तते, तदा माता नूनं स्वर्गमेव गता।

अधिगते जनकोदन्ते मनस्तु मे पुन: काश्यां न स्थिरत्वं गतम्। संसारेऽस्मिन् मे केवलं पिता एव अवर्त्तत। स यदि दिल्लीम्

अध्यवात्सीत्, तदाहं किमर्थं काशीमधितिष्ठामि ? एवं चिन्तयन्ती अहं एकाकिनी पितृदर्शनाय प्रस्थिता। पिता मम गमनेन प्राक् कष्ट एवाभवत्। पश्चात् रोगग्रस्यमानायाः मे तत्र सेवार्थमवस्थान-मनुमेने। मातृकस्यार्थे मम [illegible] नाम चकार च। अहन्तु पित्रालये अवस्थाय यथाशक्ति पितृसेवायां मनो न्यवेशयम्। तस्य सन्तापमात्रेण यन्त्रवती नाभवम्। न हि जाने हृदये पितुः स्नेहा-काङ्क्षया [illegible]। जातः पितृसेवायां नूनं मे आनन्दा-तिशयः। नासीत् मे अन्यः कश्चित् पितरं विना। अमन्ये पितृ-सेवायाः अन्यत् किमपि नास्ति जगति संसारे। पितापि मे भक्ति-दर्शनेन मनुष्यसाधारणगुणं [illegible] मयि स्नेहमकार्षीत्, स्नेहः खलु समुद्रगामिनी स्रोतस्विनीव। यथा यथा वर्द्धन्ते, तथा तथैव वृद्धि-मधिगच्छति। मम [illegible] प्रभाते, ज्ञातं मया पिता मयि कीदृशः स्नेहशालीति। ( [illegible] इति )

( क्रमशः )

## विविधकथा ।

**अभिनयः**—विगते मासस्य चतुर्विंशवासरे मार्च ष्टारक्लेर परिषत्सदस्यैर्महाकविकालिदासस्यालौकिकी कृतिरभिज्ञानशाकु-न्तलम्, नाटकं महेन्द्रविक्रमभूपस्य कृति 'मत्तविलास' नाम प्रह-सनञ्च साधुप्रायुज्यत। तत्र परिषद्विद्यालयस्य समुन्नतये शुल्कं गृहीतं सामाजिकानां सकाशतः। व्ययवियोगादनन्तरं कतिमुद्राः सम्प्रत्यवशिष्यन्त इति नेदानीमपि निर्णीतम्। यथाकालं तत् सदस्य-महत्तमानां विज्ञापयिष्यामः। तत्र प्रयोगप्रकर्षापकर्षादिकं नाम्ना-

भिर्वर्णनीयम्। स्वगुणाविष्करणं दोषायैव कल्पते मनीषिणां गोष्ठीषु। न चास्माभिरपि कदापि स्वानि दृगितानुग्राह्यन्ते। सर्व्वथा-स्मिन् विषये रसिकवर्य्या समालोकितप्रयोगाः सामाजिकमहलमा एव प्रमाणम्। परं ..था अभिनयस्य समाप्तिं यावत् रङ्गालय-प्रेक्षकवर्गाः सम्यक् परिपूर्णं आसीत्तेनैव प्रयोगस्य समुत्कर्षमेवानु-मिन्वन्ति सुधियः। शृणुमश्च ..निदिन आत्मकृ.. क्रियमाणां बहुलबहुला प्रशंसा कियाश्चिदभिनेतृणाम् अभिनयपाटवमुत्-कर्षस्य परा काटिकामसमिति स्वगुणाविष्करणपराङ्मुखैरप्यस्माभि वर्ण्यमेव।

**श्रीश्रीशङ्करीसङ्गीतम्।** कान्तपदावलीग्रन्थनपटीयसा जयदेवगोस्वामिपादाना 'गीतगोविन्दसरणिमनुसृत्य कविवरजग-न्नारायणेन लिखितं प्राचीनपुस्तकमस्माभिरासादितम्। रमणीयमिदं वस्तु पाठकानाम् उपाहराम.।

**कालीतन्त्रम्** इदं नाम परिषद्ग्रन्थमालायां द्वितीयं पुस्तकम्। मूल्यम् साधारणानां ..गानकम। तम. परिषत्सदस्यानान्तु आनकाष्टकम्।

प्रागेवेदम् अस्माभि. सदस्यमहोदयाना गोचरीकृतं यथैतदतीव प्रयोजनीयमप्रकाशितपूर्व्वं तन्त्ररत्नमस्माभि प्रकाशयिष्यत इति। अधुना प्रकाशनकृत्यं समाप्तिं गतम्। वङ्गानुवादान्वितम्।

संस्कृतटीकासमुल्लसितञ्चैतत् पाठकाना महान्तमुपकारमुत्पाद-यिष्यतीति निःसंशया वयम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः ।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीय—कार्त्तिके, ५म वर्षस्य ७म संख्या ।

## श्रीश्रीशङ्करीसङ्गीतम् ।

(पूर्व्वतोऽनुवृत्तम् । )

ततः समाहृत्य शुभात्मकानि
द्रव्याणि रत्नासनसंस्थितां ताम् ।
पुराङ्गनाभिः सह शैलजाया
निर्म्मञ्छयामास यथाभिलाषम् ॥
पद्मालया किन्नु पुलोमजेयं
श्रेयस्ततिः किन्नु हिमालयस्य ।
शरीरिणीं तामवलोक्य सर्व्वा
नगाङ्गना विस्मयमापुरित्थम् ॥
नेत्रव्रजैस्तत्पुरसुन्दरीणां
चितं तदङ्गं क्रमशः पतद्भिः ।
[illegible]विपसूत्रेण विनापि माला-
मिन्दीवरालीरचितां बिभर्त्ति ॥
सुधेव विद्वेषि सुधाकरस्य
शरीरजं काव्यविदो वदन्ति ।

मुखेन्दुमालोकयतां हि तस्या
अहृष्टगतानि निमीलनानि ॥

यस्या वैभवलेशमात्रकथने वेदाः परं कुण्ठिता
ब्रह्माद्या यदनुग्रहप्रणयिनो दौवारिकत्वं गताः।
पित्रोः प्राज्यमुपार्जितोऽयनपमां पूर्णं विधातुं फलं
भक्ताधीनतया तया बहुविधा लीलास्ततश्चक्रिरे ॥

( मध्यमानतालरामकिरीरागेण गीयते। )

मत्तकरीन्द्रसुमन्दगता दरदोलितसुन्दरवासाः।
गायति चासितकण्ठगुणं पिककण्ठविकुण्ठनभासा ॥
हिमगिरिराजसुता ललिता, नृत्यति नववनितालियुता ॥

ध्रुवम् ॥

चञ्चलनूपुरमञ्जुलशिञ्जितगञ्जितहंसमभाजा।
खञ्जनगञ्जनखञ्जनगर्व्वविखर्व्वणनयनसरोजा ॥
मन्दगलच्छ्रमवारिलवा दरविलुलितललितशरीरा।
प्रातरिवानिलकम्पितकल्पलता परिगलिततुषारा ॥
चारुसखीगणमध्यगता रुचिरोचितभुवनविताना।
तारापटलविमण्डलिता शशिलेखाहृदयनिधाना ॥
वादयते मृदु वेणुवरं जननीविनिहितनवनीतम्।
आदधाति सखीवदनाब्जे चारु मधुररसपूतम् ॥
वर्णितमेतदुमाचरितं ललितं सततं परिपूतम्।
श्रीजयनारायणकविना कुरु तां जगतामतिशातम् ॥

तां दृष्ट्वा हृष्टचेता हिमगिरिवनिता जन्मजन्मार्ज्जितानाम्
पुण्यानां पूर्णमासं फलमिव सहसा नेत्रधारां वहन्ती।
कृत्वान्तीं प्राङ्गणान्ते स्मितरुचिरुचिरां पञ्चजाथेरवेद्याम्
प्रोचैः प्रोवाच वाचोऽचलकुलतिलकं पूर्णकामा हिमाद्रिम् ॥

( खाड़ाचौतालखटरागेण गोयते । )

ताण्डवलोलसुलोहितकिरणपदाम्बुजविरचितभूषम् ।
उदयशिखरितटमिव नवसमुदितदिनपतिविततविलासम् ॥
पश्य ममाङ्गनमुमया शोभितमचल विचित्रमिदं सखजोजनया ॥
ध्रुवम् ॥
चारुचरणविनिवेशनलाञ्छनलाञ्छितमध्यविभागम् ।
अविरलविकसितनिर्मलशतदलचितमिव शरदि तड़ागम् ॥
काञ्चनपीतमयूखविकाशिततनुलतया समुपेतम् ।
अम्बरमिव रुचिरं परिखेलितसुस्थिरचपलाजातम् ॥
स्फुरदभिराममरीचिचयाननमण्डलया कृतचारम् ।
शशधरलेखयेव दिवापि मनोहरविहितविहारम् ॥
श्रीजयनारायणकविना परिवर्णितमेतदुदारम् ।
सततं श्रवणपुटेन निपीतं सुखयतु कोविदवारम् ॥
संसारार्णवपारसेतुरखिलानन्दैककेलीस्थली
खेदच्छेदिसमस्ततीर्थनिलयो मोक्षस्य मुख्यायनम् ।
सर्व्वाभीष्टफलौघसंवितरणश्रीकल्पभूमीरुहः
श्रीदुर्गाचरणारविन्दमखिलं पायाज्जगत् सन्ततम् ॥

इति श्रीश्रीशङ्करीसङ्गीते बाल्यलीलावर्णनं नाम द्वितीयः सर्गः ॥

विलोक्य तस्या भुवनाद्भुतानि मुदान्वितो बाल्यविचेष्टितानि ।
अनाप्नुवन्नाँ वचनयुग्मतृप्तिं जगाद मेनामथ शैलराजः ॥
( मध्यमानतालश्रीरागेण गोयते । )
वादयामि मृदु मधुरमृदङ्गम् ।
त्वमपि कलय करतालविभङ्गम् ॥
त्वयि कृतसुकृतचये गौरी
पुनरपि नर्त्तय सफलय मम नयने ॥ ध्रुवम् ॥

जन्मसु बहुषु तपः कति तप्तम् ।
तस्य मया फलमिदमभिप्राप्तम् ॥
कोटिकोटिकुलमजनि पवित्रम् ।
कामदुघं मम भवनचरित्रम् ॥
तोषितविप्रगणाशीर्गदितम् ।
नूनमिदानीं तन्मम फलितम् ॥
धरणितले न कृतं कति सुकृतम् ।
चरणस्पर्शनसुखमनुभूतम् ॥
श्रीजयनारायणकृतगीतम् ।
भक्तजनं कुरुतामतिप्रीतम् ॥
इति जनकजनन्योर्वाञ्छितं पूरयन्ती
मदनमथनजाया मायया मोहयन्ती ।
त्रिभुवनमनिशं सा देहिनी ब्रह्मरूपा ।
हिमवति कति कालान् पर्व्वते संनिनाय ॥
तस्याः समीपं किल नारदोऽथ
वाराणसीनाथनिदेशवर्त्ती ।
अभ्याययौ प्रीतमना महर्षि-
र्गायंस्तदीयं चरितं महत्या ॥
कृताञ्जलिर्भक्तिनतोत्तमाङ्गः
सवाष्पधारापरिवाहनेत्रः ।
तुष्टाव तां हृष्टमना गरिष्ठ-
स्पष्टार्थवाग्भिर्वदतां वरिष्ठः ॥

( चौतालभाषावरीरागेण गीयते । )

अव्ययमेकमनन्तविभवमपि परमं ज्योतिरसि त्वम् ।
स्फटिकमणेरिव गुणसंयोगात्तव जगदम्ब बहुत्वम् ॥

करुणामयि मयि करुणा भवतु भवार्णवभीते
तव चरणशरणविभवे ॥ ध्रुवम् ॥
त्वं प्रकृतिः पुरुषोऽसि च काले सृजसि रक्षसि संहरसि ।
विश्वमशेषमनिशमभिभजतां मुक्तिपदं विदधासि ॥
विधिहरिगिरिशमुखा विबुधास्तव जातास्तनुकणकूपात् ।
क्रमशस्तमे त्रिजगन्मयरूपे दीपालय इव दीपात् ॥
सुकृतवतां सुकृतं जननि त्वं यागवतामसि यागः ।
सत्त्ववतामसि परमं तत्त्वं रागवतामसि रागः ॥
ध्यायति सकृदपि हृदि यस्तव पदपल्लवमविदितसीमम् ।
गोष्पदमिव भवसागरमाशु स तारिणि सन्तरतीमम् ॥
तव नामार्णवसुधां निपिबति यः सकृदपि त्रिभुवनमातः ।
स पुनर्न च जननीजठरोद्भवदुःखचयानुयातः ॥
श्रीजयनारायणकविवर्णितमेतदतीव विचित्रम् ।
शृणुत बुधा यदि वो गिरिजाया नन्दयते सुचरित्रम् ॥
तस्याकलय्य वचनं मुनिपुङ्गवस्य भक्तिप्रयुक्तमथ भक्तजनानुरक्ता ।
साविर्बभूव पुरतश्च शुभप्रसङ्गैरन्वग्रहीत्तमखिलान्तरभावविज्ञा ॥
साष्टाङ्गपातं प्रणिपत्य पत्युरादिष्टमाचष्ट च सन्निकृष्टम् ।
प्रख्यातुमस्यै स तथेति सापि स्वीकृत्य तत्तत्र तिरोबभूव ॥
या ब्रह्माण्डमशेषमीश्वरहृषीकेशप्रजेशादिकान् ।
प्रासूय क्रमशो नियोजितवती स्वस्वाधिकारेऽनिशम् ॥
सा दुर्गाखिलदुर्गदुर्गतिहरा स्वर्गापवर्गप्रदा ।
नितरानित्यमनित्यवैभवभवाद्दुःखमस्मनः कर्षतु ॥
इति श्रीश्रीशङ्करीसङ्गीते नारदसमागमो नाम तृतीयः सर्गः ॥

( क्रमशः )

---

# अमरवाणीमहिमा।

( लेखकः—श्रीईश्वरचन्द्रब्रह्मचारी हरिद्वारगुरुकुलाध्यापकः। )

अनवरतं परिवर्त्तनमापद्यमानानि वस्तूनि विश्वस्ता समीरोद्धूननोद्वेलसर इवोदयमानव्ययमानविविधविचाराकुलितं मनस्तरलतां बिभर्त्ति। वसन्ते परिमललोलुपालिमालावलम्बितैर्मृदुलपल्लवैस्तरुभिर्मृद्वीकामधुरिमाणमधरयद्भिः पिककूजितैर्या मूर्त्तिमतीव सुषमा मन्देतरमानन्दं जनयति, सा निदाघे लेशतोऽपि न दृशमुपैति। तदानीञ्च प्रस्तरनिचितास्वरण्यानीषु विशालभारतभूभागेषु, भूपानामभ्रंलिहसौधेषु किरति कृशानुकणानिव किरणमालया तरणिः। यश्च तारकाराजो भुवनं ज्योत्स्नया दुग्धप्लावितमिव नवनीतमयमिव प्रचुरहीरकमालमिव विदधाति, स एवामायां गगनमनलङ्कुर्वाणो घनतमसि मज्जयति। शरीरञ्च बाल्ययौवनवार्द्धकभेदेन भिद्यमानं नैकरूपेणावतिष्ठते। ये च प्राणिनः सुखिनस्त एव कदाचिद्विपदमनुभवन्ति। अस्य सर्वथाप्यप्रतिहतप्रसरस्य परिवर्त्तनस्य प्रभावेणामरभारत्या खेदकरीं दशामवलोकामहे।

एकदा प्रत्नाचार्यसंलब्धधन्यमहिम्ना संस्कृतवाणीयशो निखिलभूमण्डले प्रससार। नैकविधतत्त्वबुभुत्सया जनाः संस्कृतभाषामध्यैयन्त। सपर्याप्रसन्नगुरुलब्धविद्याश्च छात्रानध्यापयन्तो निबन्धांश्च प्रबध्नन्तो विदधिरे मानवजन्म सफलम्। लेशतोऽपि न चचलुश्च धर्म्यात् पथः। तेषामेव महात्मनां गरीयान् प्रयत्नोऽद्यापि निखिलविपरीतज्ञानमुत्पादयति। तथाहि कैवल्यसाधनानि दर्शनषट्कं वर्णाश्रमधर्मान् स्मृतयः क्रतुविधीन् कल्पसूत्राणि विस्तरेण प्रतिपादयन्ति। अमूनि च शास्त्राणि परिशीलयता तदनुकूलञ्च प्रवर्त्तमानेन सुशका-

धिगन्तुमपत्यद्रविणादिभवा संपत्। किं बहुना, न दुरापा च परमपुमर्थकैवल्यश्रीः। संप्रत्यपि भगवद्वाल्मीकिप्रभृतिकविवचनरसमाचाम्य कस्य न सचेतसश्चेतो लभते मुदम्। को वा तर्कशास्त्रगभीरार्थानालोच्य नो विस्मयते। कैव देववाणी सांप्रतं कुहचन कोणे निलीनेवावतिष्ठत इति किमतः परं स्याद्विषादास्पदं नः। यामधीत्य पूतमिवात्मानं मेनिरे प्राञ्चस्तेषामेव वंशजैरिदानीमुपहस्यन्ते तद्विदः। अत्र बीजं विविच्यतामिदमाभाति। पूर्वमपव्यन्त न्यायवेदान्तादिवदर्थशास्त्रादीन्यपि। ततो भूपालास्तान्यधीत्य निरुपद्रवं राज्यकार्याणि निरवाहयन्। साधारणा जनाश्च भौतिकीमुन्नतिं विधाय लौकिकव्यवहारानप्यनायासेन निर्वर्त्तयामासुः। अतोऽनेन तु बहुतिथे काले सवेगवहमानधर्मतरङ्गिणीप्रबलकल्लोलाहताः धर्मशास्त्रं विहायाना ग्रन्थाः कान्दिशीकतां भेजिरे। यवनसम्राजां दिगन्तविस्तृतवैभवे चार्थिद्वेषिणो यवना भस्मसाच्चक्रुर्भूयसो ग्रन्थान्। अपि च विद्यागोपनोपदेशोऽपि शस्त्रादिविज्ञानविलये कारणतामाप। ताम्रपात्रनिहितमाज्यमपि प्रणाशाय कल्पत इति नयेन मदितरदत्तिकृपस्य प्रयोगनैपुण्यं जनतोद्वेजकं स्यादित्यनेनाभिसंधिनानधिकारिभ्यो गोपनीया विद्येति पूर्वतनैरभ्यधायि। यथाह भगवान् यास्कः—उपसन्नाय तु निब्रूयाद्यो वाऽलं विज्ञातुं स्यान्मेधाविने तपस्विने वा

"विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्॥"

इति। तमसाच्छन्नहृदयस्तु भाविप्रसूतिकं शमप्यनालोच्य न चेदिन्नुवीमहि विद्यां न सेवेरन् कायेन द्रव्येण वाचा वा अस्मान् किंचाद्याचीनकोर्त्तिस्तनभवेदिति योगेभ्योऽपि सम्यगनुपदिशन्तः कालेन कवलीकृताः। इत्थं लुप्ता विविधविद्याः। तदात्वे च जना व्याकरणादिकमध्येतुं प्रवहृतिरे जहुश्च संगीतनाट्यरसायनादिशास्त्रजिज्ञासाम्। एकस्तेऽपि यावदान्नायशासितार्थे श्रद्धाना

भूपाला: सम्यक् वेदविदस्तावत् प्रचचार संस्कृतगी:। अथ प्रश्नमराज्ञ विदेशीयभाषासु ताभिरेव च निवर्त्त्यमाने राजकीयव्यवहारे जनानां संस्कृतभाषायामादर: शिथिलतामापेदे। सम्प्रतितनाश्च देववाणी-विदो गगनोदरसंचारीणि विमानानि सौदामिनीमाहात्म्यतंपाद्यानि च विदूरे शब्दप्रेषणादीनि प्रेक्ष्य विस्मयमाना इतरेषामुपहा-सास्पदतामनुभवन्ति। तत्तत्कलाप्रतिपादकसत्संदर्भप्रचारणया जड़पदार्थसंमेलनजन्यनूतनवस्तुरचनाविधिविशेषोऽपि सम्पद्येत। कौटिलीयार्थशास्त्रं च राजनीतिबोधसमर्थम्। इदं चांशतो हिंवत्-प्राणहरविषयुक्तधूमादिनिर्माणविधिमपि निर्दिशति। कौटिल्यो बहूनामाचार्याणां मतानि जगाद, तेषां ग्रन्थाश्चेदुपलभ्येरन् सर्वाङ्गीणा राजनीतिरुज्जिर्जायेत। परै: शाठ्येन बाध्यमानेभ्यो नितरामुपयुज्यते कौटिलीयनय इति नैतत्प्रचारतोऽनिष्टमाशंकनीयम्। विस्तृते चास्मिन्विषयान्तरे नाधुना व्यापार्यते लेखनी। वृक्षायुर्वेदीयाश्च भूयिष्ठा ग्रन्था विरेजिरे। श्रीमद्वाचस्पतिमिश्रप्रभृतिविद्वद्वरेषाम्ना-यत वृक्षायुर्वेदादिकमिति तदीयग्रन्थोपनिबद्धोदाहरणैर्विशदीभवति। तथाहि, भामत्यामध्यासभाष्यव्याख्यायां नैयायिकाभिमतान्यथाख्यातिं निराकुर्वद्भिरन्तेऽभिहितं भामतीपतिभि: "यथा दावाग्निदग्धानां वेत्रबीजानां कदलीकाण्डजनकत्वम्" इति। तत्तु समन्वयादिति सूत्रे च मोक्षसंस्कार्यतां प्रतिषेधद्भिरुक्तं "द्वयी हि संस्कार्यता गुणा-धानेन वा, यथा बीजपूरकुसुमस्य लाक्षारसावसेक:, तेन हि तत्कुसुमं संस्कृतं लाक्षासवर्णं फलं प्रसूत इति श्रीवेङ्कटेशाश्च तत्त्वमुक्ताकलाप-व्याख्यायां सर्वार्थसिद्धौ द्वितीयजीवसरीयपंचषष्टितम—"सर्वं-स्याप्यानुकूल्य" मित्यादिपद्ये मुक्तस्य दु:खास्पृष्टसर्वातिशाय्यानन्दानु-भवं प्रतिपादयन्त: पूर्व्वपक्षे प्राहु: "न चात्र काषतां जनयेद्दोषो निम्ब-वृन्दाकारेणुमान्" इतिवत्किंचिन्निमित्तमन्तरेण स्वत: प्राप्तप्रकाशैक-देशभङ्ग: स्यात्" इति। उत्तरत्राप्युक्तं ननु संस्कृत्यवस्थाविव

निरयाणां प्रातिकूल्यं स्वानुभूतं च दुःखं मुक्तः पश्यति वा नवा ? आद्ये "गन्धाश्मरजसा स्पृष्टो नष्टो दीपः पुनर्ज्वलेत्" इति न्यायेन पुनरपि दुःखसन्ततिरुदियात् इति। एतेनानुमिमीमहे पूर्वमासन्ननवद्यविद्याद्योतमानानि ग्रन्थरत्नानि। तानि च चिरादेव पुरापि दुर्मिलान्यजायन्त। तथाहि न्यायकुसुमाञ्जलौ द्वितीयस्तवके—

"जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः।
ह्रासदर्शनतो ह्रासः संप्रदायस्य मीयताम्॥"

इतीमां कारिकां विवृण्वद्भिरुदयनाचार्यैरुक्तं "पूर्वं सहस्रशाखो वेदोऽध्यगायि, ततो व्यस्तः, ततः षडङ्ग एकः। इदानीन्तु क्वचिदेका इती"ति। अतोऽनुमीयते आचार्यसमये भूयस्यो वेदशाखा व्यलीयन्तेति। अपि च चीनदेशीयभाषायां येषां बौद्धसिद्धान्तप्रतिपादकग्रन्थानां देवगिरा ग्रथितानामनुवादो बौद्धैर्विहितस्ते सांप्रतं नोपलभ्यन्ते। यवनैश्च नीता बहवः प्रबन्धाः स्वदेशं प्रति। अथापि गवेषयेम बहुसंख्याकानां ग्रन्थानामुपलब्धौ द्रढीयसी संभावनास्ते। गवेषणार्थं च वसुराशिरपेक्ष्यते। प्रायो निष्किञ्चनाश्च संस्कृतविदः पर्याप्तधनदाने सर्वथासमर्था इति महामहिमानः केचन समितिं विधाय भारतीयभूपतीनामेतत्कार्याय मनांस्याकर्षयेयुर्यदि तर्हि सुमिलं धनम्। धनप्राप्तौ च निर्वाहोचितद्रविणं लभमाना बुधाः देशान्तरेभ्यः संग्राहं संग्राहं ग्रन्थान् संमुद्र्य प्रसारयेयुः। तांश्च पठित्वा संस्कृतविदोऽपि विमानादिरचनाविज्ञाः स्युरिति निर्विवादम्। अपि च विदेशीयभाषानिबद्धानां तत्तच्छास्त्रसंबन्धिनां ग्रन्थानां संस्कृतभाषायामनुवादं विदधीरन्ननेकभाषाविदः। प्राक्तनानुसृतश्चायं पन्थाः। पण्डितजगन्नाथनिर्मितो बीजगणिताख्यः संदर्भ आरबदेशीयभाषातः संस्कृतभाषायामनूदितः सांप्रतमानन्दयति पण्डितमनांसि। वृक्षायुर्वेद इदानीं नोपलभ्यते, तथापि समाहृतस्तदीयोऽल्पीयानप्यंशः प्राचामेतस्मिन् विषये धीप्रकर्षबोधनाय पर्याप्नुयादिति निबध्यते।

सिक्ताम्भोभिः पललतुपयोः कुक्कुटानां पुरीषं
मूले दत्त्वा सकुसुमफला गोस्तनो वृद्धिमेति ।
स्कन्धन्यस्तैः पनसतरवोऽप्याशु पालालभारै-
र्मूलादग्रं दधति च वचावारिसिक्ताः फलानि ॥
सर्पिर्गुडक्षीरमधूपचारं दत्त्वा निषिक्तौ च कपित्थबिल्वौ ।
पीयूषकल्पान्यतिमांसलानि फलान्यनस्थीनि सदा दधाते ॥
वृश्चिककण्टकविद्धाः सुरभीघृतधूपिता हि निखिललताः ।
मूषककोलवसाभिः संसिक्ताः स्युः फलैर्नम्राः ॥
यस्य कस्यापि पुष्पस्य सौरभेणाधिवासितान् ।
मृत्तिकाशकलान्मूले वृक्षाणां बहुलान् क्षिपेत् ॥
कुष्ठपत्रसुरामुस्तातगरोशीरचूर्णकैः ।
मिश्रितेनाम्भसा सेकान्मासं सौरभसंभवः ॥
यवतिलनिशापलाशैरुपचितमूला तदम्बुसिक्ता च ।
ज्वलदनलोपमसक्तत्कर्पासी तूलकं सूते ॥
तिलखलिविडङ्गगोमयविलोडितेक्षुरससेचितस्य तरोः ।
फलकुसुममकालभवं मनोहरं फलति लोकस्य ॥
मधुयष्टिसिताकुष्ठमधुपुष्पविनिर्मितैः ।
मोदकैश्छादिते मूले निरस्थि स्यात् फलं तरोः ॥
कोलशोणितमेदोभ्यामङ्कोलक्वथितेन च ।
सिञ्चिता कदली सूते दाडिमीफलमुत्तमम् ॥”

इति। एतादृशविषयस्यानुष्ठाने सम्यगवबोद्धुं शक्यते। अविदिताभिधानेन केनचिद्विदुषा रचितं चौरशास्त्रमपि श्रवणगोचरतां गतम्। सांप्रतं यैर्महाभागैः संस्कृतभाषाग्रन्थान्वेषणमारब्धं, तैरेतादृशप्रबन्धाः प्रकाशनीया इति सप्रश्रयमभ्यर्थना। अस्मदीयानां पत्रिकासम्पादका अपि विविधमतावलम्बिनां लेखान् प्रकाशयेयुस्तर्हि जायेत संस्कृतप्रचारे अल्पं साहाय्यम्। संस्कृत-

पत्रिकास्वितरभाषासंपाद्यमानपत्रिकावन्मुद्रणमसृणपत्रेषु मुक्ताफल-मालामञ्जुलान्यक्षराणि दधत्यो बहिरत्नतरेयुः। देवदेवस्य वरदस्य करुणाकोरकितदृगन्तपातैः समुल्लसतु संस्कृतभारत्याः सर्वपथीनं यशः। माभूद्विस्तर इत्युपरम्यते।

## प्राचीनभारते काराविधिः। *

( लेखकः—श्रीअमरेश्वरठाकुर एम्, ए। )

प्राचीनेषु पालिजातकग्रन्थेषु बन्धनस्य बन्धनागारस्य च समुल्लेखो दृश्यते। कारादण्डमाप्ताः पुरुषाः कारागृहेषु कथं रक्षिताः को वा तेषां निवासप्रकार इत्यादीनां विषयाणां परिज्ञानं न सम्यग् जायते तेभ्यो ग्रन्थेभ्यः। कस्मिन् खल्वपराधे सञ्जाते कारादण्डविधानमासी-त्तदपि न परिज्ञापयन्ति ते ग्रन्थाः। तदानीन्तनानां बन्धनागार-स्थितानामुपरि राज्ञः प्रभुत्वं निरङ्कुशमासीदित्यस्मात्तेषां जीवनं मरणञ्च तदधीनमासीदित्यस्या अपि बहुभिर्निदर्शनीभूता सुतनुजातक-कथा। तत्र एतद् वर्ण्यते—स्वजीवनरक्षार्थं राजा प्रत्यहमेव पुरुषमेकं कस्यचिद् यक्षस्य समीपे प्रेषणायाङ्गीचकार। कुत्र तावद् बहवः पुरुषा मिलिष्यन्तीति राज्ञश्चिन्तायां सञ्जातायां "मा चिन्तय बन्धना-गारे बहवो मनुष्या वर्तन्ते" इत्युक्त्वा राजानं विगतचिन्तमकुर्वं-स्तदमात्याः। काले बहुतिथे गते बन्धनागारं शून्यं सञ्जातम्।

गौतम-वशिष्ठ-बौधायन-संहितासु तथान्येष्वपि मन्वादिषु प्राचीन-स्मृतिग्रन्थेषु बन्धनदण्डेन दण्डितानां समुल्लेखो वर्त्तते, किन्तु दण्ड-प्रकारभेदेषु कारादण्डस्य परिगणनं कुत्रापि न समुपलभ्यते।

* परिषदो मासिकाधिवेशने पठितोऽयं निबन्धः

"धिग्दण्डस्त्वथ वागदण्डो धनदण्डो वधस्तथा।
योज्या व्यस्ताः समस्ता वा अपराधवशादिमे॥"

इति दण्डस्य चातुर्विध्यं परिकल्पयता याज्ञवल्क्येन बन्धनं दण्डत्वेन न परिगणितं स्फुटत इत्येव प्रतिभाति।

"वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम्।
तृतीयं धनदण्डं तु वधदण्डमतः परम्॥"

इति ब्रुवन् मनुरपि स्पष्टतया कारादण्डस्य उल्लेखं न कृतवान् इत्यपि च प्रतीयते। वधस्तु ताड़नाद्यङ्गच्छेदरूपः शारीरो दण्ड इति टीकाकृद्भिर्व्याख्यातम्। "शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः। शारीरः संनिरोधादि"रिति नारदवचनैनैकवाक्यतामापादयद्भिर्देवणभट्टादिभिः सिद्धान्तितं यद्याज्ञवल्क्यमनुप्रोक्ते वधदण्ड एवान्तर्भवति कारादण्डः। तथाच स्मृतिचन्द्रिकायाम्—"एवञ्च बन्धनाङ्ककरण-कर्म्मकरण-बन्धनागारप्रवेश-ताड़नरूपाः शारीरदण्डभेदाः पञ्च विज्ञेयाः॥

एतदेवाभिप्रेत्य "स्त्रीबालोन्मत्तवृद्धानां दरिद्राणामरोगिणाम्। शफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥" इत्यनेन बन्धनं तथा बन्धनागारप्रवेशश्च समाम्नात इति व्याख्यातञ्च देवणभट्टेन।

यः खलु उत्तमर्ण ऋणं प्रत्यर्पयितुमसमर्थः, उत्तमर्णस्य कर्म्मकारी च न शक्तस्तस्य बन्धनदण्डो बन्धनागारप्रवेशश्च भवेदिति कात्यायनस्य मतम्। तथा च तद्वचनम्—

"धनदानासहं बुद्धा स्वाधीनं कर्म कारयेत्।
अशक्तो बन्धनागारं प्रवेश्यो ब्राह्मणादृते॥"

यः कुलधर्मं तथा जातिधर्मं परित्यजति, यश्च महापातकी तस्य बन्धनदण्डो विधीयते आपस्तम्बेन (२।१०।२७।१८)। कौटिलीये अर्थशास्त्रे बन्धनागारस्य बन्धनदण्डस्य च नातिविस्तीर्णं विवरणमस्ति। तत्र राज्ञः कुलोद्भवानां विद्रोहिणां तथा आगच्छमान विद्रोहाणा-

ग्रामावरोधदण्डानामुल्लेखो वर्त्तते। यः खलु कुमारः संसारवैराग्यवान् राज्ञः एकः प्रियश्च पुत्रस्तस्य बन्धनेन दण्डविधानं "विरागं प्रियमेकपुत्रं वा बध्नीयात्" इत्यनुशासनतो ज्ञायते। आकरिकद्रव्याणामपहरणे बन्धनदण्डो विधीयमान आसीदित्यत्र "आकरिकमपहरन्तमष्टगुणं दापयेदन्यत्र रत्नेभ्य" इत्यनुशासनमेव प्रमाणम्। * रात्रौ विरलप्रचारसमये पथि विचरतो जनस्य बन्धनागारप्रवेशाभिधानं 'रात्रौ राजदायिकाक्षणभीतः सारमस्य हस्ते निक्षिप्याप्यपगच्छेत्, स एनं बन्धनागारगतो याचेते"त्यनुशासनतो निष्कृष्यते। यो राजपुरुषः कारागृहात् अवरुद्धं जनं मोचयेत् तस्य ऋणपरिमितो द्विगुणो वा दण्डो भवेदिति वदतः कौटिल्यस्यापि ऋणाप्रत्यर्पणे बन्धनदण्डोऽभिप्रेत इति परिज्ञायते। यस्त्वन्तेवासी शिष्यमन्तं महापातकाद्यदुष्टमाचार्यं संपरित्यजेत्तस्य बन्धनदण्डो नारदेन विहितः। तथाच—

"शिष्यमन्तमदुष्टं य आचार्यं सम्परित्यजेत्।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति॥"

एतावता स्थूलतोऽपराधविशेषेषु बन्धनदण्डस्य विधानेऽपि कस्मिन्नपराधे किम्परिमितं कालं तद्भोगो भवेदिति कस्मिन्नपि प्राचीने स्मृतिग्रन्थे न समुल्लिख्यते। शुक्रनीतिसारग्रन्थे एतद्विषयकं यद्विवरणं विद्यते, तदवलम्ब्य किञ्चिदुच्यते। अपराधगुरुत्व एव बन्धनदण्डस्य विधानं भवितुमर्हति, स्वल्पापराधे प्रथमद्वितीयापराधयोर्वा अर्थदण्डस्यौचित्यं शुक्राचार्यो मन्यते। यदा तु अर्थदण्डेनाकार्यनिवृत्तिर्न स्यात्तदैव बन्धनदण्डः प्रयोक्तव्य इति तन्मतनिष्कर्षः। दण्डभोगस्तु यथापराधं मासमात्रं त्रिमासं षण्मासं वत्सरं यावज्जीवं वा भवेत्। तथाच तद्वचनम्—

"मासमात्रं त्रिमासं वा षण्मासं वापि वत्सरम्।
यावज्जीवं तु वा कश्चित् न कश्चिद्वधमर्हति॥"

बन्धनगृहस्य निवेशनं राजमार्ग एव भवेदिति 'बन्धनानि च

सर्वाणि राजमार्गे निवेशयेत्। दुःखिता यत्र दृश्येरन् विकृताः पापकारिणः॥" इत्यनेन मनुरनुशास्ति। यदकार्यनिवृत्तिरेव दण्ड-विधानस्य मुख्यफलत्वेनाभिप्रेतासीत् धर्मशास्त्रप्रवक्तृणां तत् स्पष्टीभूतं सर्वजनदृश्ये राजमार्गे कारागारस्थापनविधानेन। टीकाकृता कुल्लूकभट्टेनापि एतदेवाभिप्रेत्य व्याख्यातम्—"बन्धन-गृहाणि सर्व्वजनदृश्ये राजमार्गे कुर्य्यात्। यत्र निगड़बन्धादुपेताः क्षुत्तृष्णाभिभूता दीर्घकेशनखश्मश्रवः पापकारिणोऽन्यैरकार्य्य-कारिभिरकार्य्यनिवृत्त्यर्थं दृश्येरन् इति।"

यः खलु राजपुरुषो बन्धनागारादिनिर्म्माणविषये प्राप्तभार आसीत्, स सन्निधातेति नाम्ना कीर्त्त्यते कौटिल्येन। स्त्रीणां पुरुषाणाञ्च स्थानं बन्धनागारे पृथक् पृथगेवासीत्, बन्धनागार-कक्षाणि च सुगुप्तान्यासन्निति प्रतीयते कौटलीयार्थशास्त्रात्, "विभक्तस्त्रीपुरुषस्थानं सुगुप्तकक्ष्यं बन्धनागारं कारयेदि"त्यतः। बन्धनागारं प्रशस्तशालायुक्तं पुरीषोत्सर्गस्थानवत् कूपस्नानगृह-सनाथम् अग्निविषत्राणोपायदेवपूजनोपायमार्जारनकुलाद्युपेतं चासीदिति स्पष्टीकरोति कौटिल्य एव "सर्व्वेषां शालाखातोदपान-वर्च्चस्नानगृहाग्निविषत्राणमार्जारनकुलारक्षास्थादैवपूजनवृत्ताः कारयेदि"ति बन्धनागारादिनिर्म्माण...भि.।

दण्डितस्य कारागारप्रवेशकाले केनापराधेन तस्य ईदृशो दण्डो राज्ञा विहितस्तदाख्यानं बन्धनागाराध्यक्षस्य कर्त्तव्यत्वेन निर्दिष्ट-मासीत्, तथा च कौटिल्यः—"बन्धनागाराध्यक्षस्य संक्रुष्टकमनाख्याय चारयतश्चतुर्विंशतिपणो दण्डः।"

मार्गसंस्करणबीजवपनादिनीचकर्म्म अवरुद्धानां कारयितव्यमा-सीदिति परिज्ञायते 'बहुहलपरिकृष्टायां स्वभूमौ दासकर्म्मकरदण्डप्रति-कर्त्तृभिर्वापयेदिति कौटिल्योक्त्या 'ततः संरोधनं नित्यं मार्ग-संस्कारार्थकम्' 'द्विगुणं त्रिगुणं पश्चात् संरोधं नीचकर्म्म च' 'मार्ग-

संस्करणे योज्या' इत्यादिभिः शुक्राचार्य्योक्तिभिश्च । सामर्थ्यातिरिक्तं कर्म्म कारयतोऽध्यक्षस्य अष्टचत्वारिंशत् पणो दण्डः कौटिल्येन विहितः 'कर्म्म कारयतो द्विगुण' इति वदता ।

स्वजात्युचितकर्म्माण्येवावरुद्धानां कारयितव्यान्यासन्निति ज्ञायते 'तत्तज्जात्युचितकर्म्माणि कारयेत च तैर्नृपः' इति शुक्राचार्य्यवचनेन । नान्नं कुत्सितमपक्वमवरुद्धेभ्यो भोजनाय दीयमानमासीदित्यपि च परिज्ञायते 'मार्गसंस्करणे योज्याः कदन्नान्नभोजनाः' इति शुक्रनीति-वचनात् ।

पानभोजनादिविषये अवरुद्धानां क्लेशं जनयतस्तेभ्य उत्कोचं वा गृह्णतस्तथा एकस्माद् बन्धनागारादन्यद् बन्धनागारं विनैव कारणं तान् गमयतश्च राजपुरुषस्य दण्डविधानं कौटिल्येन क्रियते । "स्थानान्यत्वं गमयतोऽन्नपानं वा रुन्धतः षण्णवतिर्दण्डः परिक्लेशयत उत्कोचयतो वा मध्यमसाहसदण्ड" इत्यादिभिर्वचनैः । अवरुद्धा स्त्रियस्तथा तेषां जीवनमपि न तादृशं मूल्यवदिति तात्कालिकानां बुद्धेर्निदर्शनं तेषां हननं, अवरुद्धायाः स्त्रिया बलात्कारे च अपराधिनोऽर्थदण्डमात्रविधानम् । तथा च कौटिल्यः—'घ्नतः साहस्र' इति, 'संरुद्धिकामभिचरतः पूर्व्वः साहसदण्ड' इति च ।

अप्राप्तमयावज्जीवबन्धनदण्डानां मुक्तिवितरणं मुक्तौ तेषां हर्षश्च 'अस्य निष्क्रमणकाल इव भवति' इति मृगपक्षजातकवाक्यादवगम्यते । उत्सवविशेषेषु तथा पुण्यदिवसेषु च बालवृद्धव्याधितानाथादीनाम-समर्थानां जनानां निर्विशेषं सर्व्वेषामपि मुक्तिविधानं दृश्यते । तथा च कुशजातके पुत्रोद्वाहं निमित्तीकृत्य इक्ष्वाकुः सर्व्वेषां बद्धानां मोचनादेशं ददाति भेरीनिनादेनेति वर्णनमस्ति । विवाहाद्युत्सवेषु अवरुद्धानां मुक्तिविषयकं निदर्शनम् अर्व्वाचीनेषु रघुवंशादिकाव्य-ग्रन्थेष्वपि बहुशो वर्त्तते ।

अत्र विषये कौटिल्योऽपि—

"अपूर्व्वदेशाधिगमे युवराजाभिषेचने ।
पुत्रजन्मनि वा मोक्षो बन्धनस्य विधीयते ॥"

तथाच 'बन्धनागारे च बालवृद्धव्याधितानाथानाञ्च जातनक्षत्र-पौर्णमासीषु विसर्गः' ॥

यदि कश्चित् पुण्यशीलो दयापरवशो जनोऽन्यो वा अवरुद्धैः सह कृतसमयो राज्ञे निष्क्रयधनं दद्यात्तदापि अवरुद्धानां मोक्षो भवेदित्यस्यापि विधानस्य समुल्लेखो वर्त्तते कौटिल्ये। तथा च कौटिल्यः—

"पुण्यशीलाः समयानुबद्धा वा दोषनिष्क्रयं दद्युरिति ॥"

ये खलु राजपुरुषा बन्धनागारनियममुल्लङ्घ्य परिचरन्त आसंस्तेषां कारादण्डविधानमासीदित्यपि वक्ति कौटिल्यः। कर्म्मणा तथा कायदण्डेन हेतुना अवरुद्धानां स्वास्थ्यभङ्गो जायमानः शास्त्रकृतो येन तेषां स्वास्थ्यरक्षा भवेत्तस्यापि विधानमकुर्वन्। हीन-स्वास्थ्या जना धनदानेन स्वास्थ्यलाभाय यतितुमपि प्राभवन्निति। नत् सर्व्वं 'दिवसे पञ्चरात्रे वा बन्धनस्थान् विशोधयेत्। कर्म्मणा काय-दण्डेन हिरण्यानुग्रहेण वा ॥' इति कौटिल्यवचनतो निष्क्राम्यते।

यदि कश्चित् कञ्चिदवरुद्धं न्यायादपेतेन मार्गेण मोचयेत्, तदा तस्य दण्डविधानमपराधानुरूपं कृतं कौटिल्येन। पलायितस्य तु दण्डव्यवस्था तत्र न दृश्यते। तथा च तद्वचनानि—"धर्म्मस्थीयात् चारकान्निःसारयतो बन्धनागारात् शय्यासनभोजनोच्चारसञ्चारं रोग-बन्धनेषु त्रिपणोत्तराः दण्डाः कर्त्तुः कारयितुश्च। बन्धनागारात् सर्व्वस्वं वधश्च। चारकमभित्त्वा निष्पातयतो मध्यमः भित्त्वा वधः बन्धनागारात् सर्व्वस्वं वधश्च ॥"

लोकेषु आवद्धानामप्रतिष्ठाभावं भविष्यत्तत्त्वञ्च सूचयति तेषामसाचित्त्वोक्तया कौटिल्य एव। हेयभावश्च सूच्यते मनुवशिष्ठ-

गौतमापस्तम्बादीनां तेभ्योऽन्नग्रहणनिषेधोक्तता। मनुरप्युत्तानामन्यत्रपि वक्ति तेषां द्रव्यक्रयानर्हत्वोपदेशेन। तथा च तद्वचनम्—"अगारदाही गरदः कुण्डाशी सोमविक्रयी। समुद्रयायी वन्दी च तैलिकः कूटकारकः। तान् द्रव्यक्रययोर्विप्रान् वर्जान् मनुरब्रवीत्॥"

---

## विलासिवैराग्यम् ।

विल्वग्रामः समृद्धो बहुधनजनतासम्पदा सम्भृतश्रीः,
श्रीदेव्या वासगेहं मधुमयकविताबोधदक्षैरुपेता।
तत्राभूद्भूमिनाथो विटनटरसिको दक्षिणादारसक्तो
नाम्ना गोविन्ददेवो दिवमिव भुवनं मन्यमानः समानः॥
नित्यं हर्षेण गेहे सुखमनुभवता भाविता पानगोष्ठी,
वारस्त्रीचित्तसेवा प्रतिदिनमसमा साधिता बाधशून्यम्।
राज्ये प्राज्ये प्रजानां प्रचुरमपि चिरं दुःखदैन्यं न दृष्टं
सोऽयं स्वामेव शान्तिं विपुलधनजनैः मानितोऽयं विजज्ञौ॥
राज्ये राज्ञो न दृष्टिः सपदि विचलिता विद्वता शास्त्रतत्त्वे
सत्कृत्ये नास्ति कीर्त्तिर्नहि सुकृतकथा रागयोगो विलासे।
मन्त्रः शृङ्गारकाव्यं मनसिजनियमा नानितत्त्वानि चित्ते
वित्ते भोगैकवित्ते हृदयविलसितं तस्य नित्यं वभावे॥
प्रातः प्रारभ्य तावद्विटनटसहितः पानगोष्ठीं वितन्वन्,
एकस्मिन्नह्नि भूयः सुखमनुरचयन्नास्त गोविन्ददेवः।
आख्यानान्तः प्रकीर्णे विमलबहुमतप्रच्छदे पानपात्रम्
न्यस्तं रिक्तं चषेन प्रचितमथ परं तत्र दृष्टं चषेन॥

सङ्गीतं वारमुख्या विदधति सुनयं मूर्च्छनामुग्धभावं
मुक्तारत्नप्रतानैः प्रचितिमुपगता चारुचन्द्रातपश्रीः ।
कुड्येर चित्राणि नानाविधरसविषयान् मानसे भासयन्ति,
पुष्पाणां गन्धवन्धः प्रचरति मरुता सर्व्वतः प्रीतिवर्षी ॥
यावद्गोष्ठीभवोऽयं प्रकृतिमतितमामाप सङ्गीतवादः,
हर्षं यातः प्रसादः सुखपरिकरणी लोपमाप प्रमादः ।
आनन्दोत्थो निनादः सपदि बहुतरो भूतवान् लुप्तबाधः,
तावद्गोविन्दपुत्री ननु मिलितवती बालिकास्थानगेहे ॥
तात प्रातर्व्यतीतं क्रमनियमवशान्मध्यमह्नोऽपि यातम्
तिग्मांशुः पश्चिमान्तेऽवतरति किरणश्रेमह्नीनः सुदीनः ।
यस्मादूर्द्धं नु सायं लयमयमधुना वासरः सम्प्रयाति,
तस्मादुत्तिष्ठ निष्ठां गमय समयतः स्नानमित्रं वभाषे ॥
श्रुत्वा कन्याजनोक्तं वचनमनुपदं स्नानदीप्तान्तरात्मा,
सोऽयं गोविन्ददेवः प्रतिवचनमदात् सूक्तमुक्तं हि वक्तुं ।
यस्मादूर्द्धं नु सायं लयमयमधुना वासरः सम्प्रयाति,
स्नानं दीप्तं मदीयं व्रजति च सुचिरादस्तमज्ञानधारा ॥
इत्येवं वाक्यमुक्ता परिषदमजहादेष गोविन्ददेवः,
यातं सर्व्वैश्वरेयं मधुविकृतिवशात् प्रस्थिताः सभ्यवर्गाः ।
राजा गोविन्ददेवः पुनरतिमुक्तताद्देकवासा विरागी,
दूरादूर्द्धं प्रतस्थे क्वचन न ददृशे तद्दिनानन्तरं सः ॥

# समस्यापूर्त्तिकौतुकम् ।

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः—श्रीहरिहरशास्त्री )

सर्गचतुष्टयात्मकं काव्यमिदं राष्ट्रकूटवंशावतंसस्य प्राथमिकस्यामोघवर्षनृपतेः शासनसामयिकमिति ग्रन्थसमाप्तौ कविः स्वयमाह,—

"इति-विरचितमेतत् काव्यमावेष्ट्य मेघं
बहुगुणमपदोषं कालिदासस्य काव्यम् ।
मलिनितपरकाव्यं तिष्ठतादाशशाङ्कं
भुवनमवतु देवः सर्व्वदाऽमोघवर्षः ॥
श्रीवीरसेनमुनिपादपयोजभृङ्गः
श्रीमानभूद्विनयसेनमुनिर्गरीयान् ।
तच्चोदितेन जिनसेनमुनीश्वरेण
काव्यं व्यधायि परिवेष्टितमेघदूतम् ॥"—( ११७ पृः )

आसीदसौ जिनसेनोऽपि जैनमुनेर्वीरसेनस्य शिष्यो नरपतेरमोघवर्षस्य गुरुश्चेति । तदुक्तमाचार्य्यगुणभद्रेण 'उत्तरपुराणे'—

"अभवदिह हिमाद्रेर्देवसिन्धुप्रवाहो
ध्वनिरिव सकलज्ञात् सर्व्वशास्त्रैकमूर्त्तिः ।
उदयगिरितटाद्वा भास्करो भासमानो
मुनिरनु जिनसेनो वीरसेनादमुष्मात् ॥
यस्य प्रांशुनखांशुजालविसरद्धारान्तराविर्भवत्
पादाम्भोजरजःपिशङ्गमुकुटप्रत्यग्ररत्नद्युतिः ।
संस्मर्त्ता स्वममोघवर्षनृपतिः पूतोऽहमद्येत्यलं
स श्रीमान् जिनसेनपूज्यभगवत्पादो जगन्मङ्गलम् ॥

जिनसेनप्रणीतायां कर्मप्राभृतव्याख्यायां 'जयधवला'यां—

"एकोनषष्टिसमधिकसप्तशताब्देषु शकनरेन्द्रस्य।
समतीतेषु समाप्ता जयधवला प्राभृतव्याख्या ॥"

इतीत्थं रचनाकालनिर्णायकः श्लोको दृश्यते; अत एवानुमीयते मुनेर्जिनसेनस्य ७५८ खिस्ताब्दपर्यन्तस्थायित्वम्। एवञ्च यत्तु 'पार्श्वाभ्युदयं' काव्यटीकाकृता पण्डिताचार्य्येण,—

"कालिदासाह्वयः कश्चित् कविः कृत्वा महौजसा।
मेघदूताभिधं काव्यं श्रावयन् गणशो नृपान् ॥
अमोघवर्षराजस्य सभामेत्य मदोद्धुरः।
विदुषोऽवगणय्यत्र प्रभुमश्रावयत् कृतिम् ॥
तदा विनयसेनस्य सतीर्थस्योपरोधतः।
तद्विद्याहङ्कृतिच्युत्यै सन्मार्गोद्दीप्तये परम् ॥
जिनसेनमुनिस्वामी स्वविद्याधीश्वराग्रणीः।
विंशत्यग्रशतग्रन्थप्रबन्धश्रुतिमात्रतः ॥
एकसन्धित्वतः सर्व्वं गृहीत्वा पद्यमर्थतः।
भूभृद्विद्वत्सभामध्ये प्रोचे परिहसन्निति ॥
पुरातनकृतिस्तेयात् काव्यं रम्यमभूदिदम्।
तच्छ्रुत्वा सोऽब्रवीद्रुष्टः पठतात् कृतिरस्ति चेत् ॥
पुरान्तरे सुदूरेऽस्ति वासराष्टकमात्रतः।
आनाय्य वाचयिष्यामीत्यवोचद्यमिकुञ्जरः ॥
इतीदवलोक्याथ सभापतिपुरोगमाः।
तथैवास्त्विति माध्यस्थ्यात् समयं चक्रिरे मिथः ॥
श्रीमत्पार्श्वार्हदीशस्य कथामाश्रित्य सोऽतनोत्।
श्रीपार्श्वाभ्युदयं काव्यं तत्पादार्द्धादिवेष्टितम् ॥
सप्तेऽहदिवसे काव्यं वाचयित्वा स संसदि।
तद्दन्तमुदीर्य्याथ कालिदासमसानयत् ॥"

इति प्रलपितम्, तदुन्मत्तप्रलपितमेव, यतः बीजापुरमण्डलान्तर्वत्तिनि 'ऐहोली'नामके ग्रामे 'मेगूती'त्यभिधानजैनमन्दिरस्य गात्रे ५५६ मितशकवर्षीयशिलालिप्यां कवी रविकीर्त्तिः सगौरवमकीर्त्तयन्महाकवेः कालिदासस्य नाम (१) अयं खलु रविकीर्त्तिर्हि तीयपुलिकेशीत्यपराभिधानस्य सत्याश्रयस्य परं प्रसादमधयगच्छत्। आसीदसौ चालुक्यकुलभूषणायमानो मानोन्नतो भूपरिवृढः कान्यकुब्जाधिपतिं महाराजं श्रीहर्षवर्द्धनं पराजित्य 'परमेश्वर' पदमाप्तवानोऽपि। तदुक्तं--"समरसंसक्तसकलोत्तरापथेश्वरश्रीहर्षवर्द्धनपराजयोपलब्धपरमेश्वरशब्दात् ... तस्य सत्याश्रयश्रीपृथिवीवल्लभमहाराजाधिराजपरमेश्वरस्य प्रियतनयः—इति।—( Journal of the Bombay braunch of the Royal Asiatic Society. vol xvi p 234 ) श्रीहर्षवर्द्धनानुग्रहवर्द्धितः कविकुलगुरुर्बाणोऽपि स्वकृतौ "हर्षचरिते"—

"निर्गतासु न वा कस्य कालिदासस्य सूक्तिषु ।
प्रीतिर्मधुरसार्द्रासु मञ्जरीष्विव जायते ॥"

इति ससम्भ्रमं व्याजहार ।

'मेघदूत'स्य प्रतिश्लोकमन्तिमपादमादाय 'विक्रम' नामकः

(१) "पञ्चाशत्सु कलौ काले षट्सु पञ्चशतासु च ।
समासु समतीतासु शकानामपि भूभुजाम् ॥
तस्याम्बुधित्रयनिवारितशासनस्य सत्याश्रयस्य परमाप्तवता प्रसादम् ।
शैलं जिनेन्द्रभवनं भवनं महिम्नां निर्म्मापितं मतिमता रविकीर्त्तिनेदम् ॥
प्रशस्तेर्वसतेश्चास्या जिनस्य त्रिजगद्गुरोः ।
कर्त्ता कारयिता चापि रविकीर्त्तिः कृती स्वयम् ॥
येनायोजि नवेऽश्मस्थिरमर्थविधौ विवेकिना जिनवेश्म ।
स विजयतां रविकीर्त्तिः कविताश्रितकालिदासभारविकीर्त्तिः ॥"
( Indian Antiquary Vol, V. P. 70-71. )

कोऽपि जैनकवि'र्नेमिचरितं' मित्यभिधेयं किमपि खण्डकाव्यं प्रणिनाय। शैलशृङ्गे तपस्यानिरतं राजतनयं नेमिनाथं तत्पत्नी सानुनयमभिललाप,—

"तुङ्गं शृङ्गं परिहर गिरेरेहि यावः पुरीं स्वां
रत्नश्रेणीरचितभवनद्योतिताशान्तरालाम्।
शोभासाम्यं कलयति मनाङ् नालका नाथ यस्या
"बाह्योद्यानस्थितहरशिरश्चन्द्रिकाधौतहर्म्या ॥"
आलोकेऽस्मिन् तरलतड़िदाक्रान्तनीलाब्दमालं
प्रावृट्कालं विततविकसद्यूथिकाजातिजालम्।
अन्तर्जाग्रद्विरहदहनो जीवितालम्बनेऽलं
"न स्यादन्योऽप्यहमिव जनो यः पराधीनवृत्तिः ॥"
एतत्तुङ्गं त्यज शिखरिणः शृङ्गमङ्गीकुरुष्व
प्राज्यं राज्यं प्रणयमखिलं पालयन् बन्धुवर्गं।
रम्ये हर्म्येऽत्र चिरमनुभव प्राप्य भोगानखण्डान्
"सोत्कण्ठानि प्रियसहचरीसम्भ्रमालिङ्गितानि ॥"

## चन्द्रालोकः

### द्वितीयोऽङ्कः।

( पूर्व्वतोऽनुवृत्तम्। )

( लेखकः—श्रीधूर्ज्जटिप्रसादकाव्यतीर्थः। )

ततः प्रविशति सम्भ्रान्तः पुरुषः

पुरुषः—महाराज! सिन्धं इदो अवसरेदु भवं, यदुसेनिया नअरसीमन्दं पविट्ठा सेणावइना चित्तवम्मणा सह जअन्दि नासिम-

धाराधविकखिप्पासपहिसप्पहुदिहिं पहरणसदेहिं दुग्गमा वहीनअरभूमी ; आआसं अ गिद्धकोलकंकवाअसादिहिं लत्तमंसलुद्धेहिं आच्छन्नं अ अगणिद-चिदानलधूमन्धआरिदा रच्छा पहिला अ जिअसोणिदेहिं समराहदसेनिअगणत्तणादपरिपूण्णा इदो तदो जुज्झअन्दरभूमी ( नेपथ्ये कलकलः) सुणादु सुणादु देओ हाहारवविमिस्सो रोदनसद्दो इदो आअच्छदि ( पुनर्नेपथ्ये कलकलः ) ता अस्सां गेह्निअ मुनिकधिदसुरङ्गपथेन सिग्धं अवसरेहित्ति सेणावइ कधेदि त्ति प्पमाणम् ।

राजा—( ससम्भ्रमम् ) अपि जानासि जयत्सेनस्य कः संवादः ?

पुरुषः—यदुवीरेहिं आक्कन्दो वज्झो अ ।

राजा—तत्त्वं त्वरितमिमां घोटकीमिहानय ।

पुरुषः—जं देओ आणवेदि ।　　　　( प्रस्थितः )

राजा—( सोत्साहमुत्थाय )

भो भो मानधनाः प्रयात समरं हित्वा भयं मेऽत्र-
श्चानीत त्रिदिवं रणाङ्गनमिदं यद्दुर्लभं नीचकैः ।
संग्रामानलदत्तगात्रधमनीरक्ताज्यगन्धोत्कट-
प्रेङ्खण्डाग्निनितुल्यबाहुयुगला यूयं यदि क्षत्रियाः ॥

अपिच भो मदवलम्बनीभूताः प्रधानयोधाः प्रतिजानताम् भवन्तः ।

( प्रथमाङ्के यावत् कार्मुकमस्मेत्यादि पुनः पठति )

पुरुषः ( प्रविश्य ) जअदु जअदु भट्टा, एमा सा समागदा ।

राजा—( परावृत्य ) प्रिये ! महानयमनर्थपातः, तदागच्छ सुरङ्गपथेनापसराव: ।

उर्व्वशी—( प्रविश्य स्वगतम् ) साहु मन्तिदं अज्जेन, मम वि एदं अहिमदम् ।

राजा—( दीर्घं निःश्वस्य ) हा धिक् कष्टम् दुर्व्वलानां जयाशा जीविताशा च प्रतिक्षणमिव गगनतलावरोहिसपक्षपर्व्वताधःस्थिताना-

मिव न नाम विधेया। (नेपथ्ये कलकलः) हा धिक्! आगता एव! तत् क्षिप्रमागच्छ।

उर्व्वशी—एहि नाथ!

राजा—मातर्जन्मभूमे! भूतधात्रि!

आसृष्टिसंसृतपदापि मदीयवंश्यै-
र्या त्वं जहासि तनयं हतभागधेयम्।
क्षीणा कदापि करुणामयि सा न च स्यात्
याचे कृताञ्जलिरहं विनयावनम्रः॥

सर्व्वे—सर्व्वथा देवताः स्वस्ति कुर्व्वन्तु।

(निष्क्रान्ताः सर्व्वे)

(ततः प्रविशति सानुचरः श्रीकृष्णः सात्यकिरनिरुद्धश्च)

कृष्णः—सात्यके! क्व गता सोर्व्वशी महाराजो वा; प्रागेव मन्त्रणागारे तौ क्रीडास्थानमिति तदनुचरमुखात् संश्रुतम्। (विमृश्य) कच्चित् हर्म्यं सुदर्शनेनानोपरिरचितमस्ति?

सात्यकिः—अथ किम्।

कृष्णः—अपि नाम सा स्थानादस्मान्महाराजेन समं विलुप्ता तिरस्करिणीविद्याप्रभावेन?

अनिरुद्धः—देव! तिरस्करिणीविद्याप्रभावेण विलुप्तेति कथं सम्भाव्यते, यतः सा दुर्व्वाससः शापात् गतप्रभावा।

कृष्णः—तत् केन पथा कया वा दिशा गता सात्यके! अनिरुद्ध! आन्वष्यतामन्विष्यताम्। अपि च भो भोः सैनिकाः! यूयमपि प्रतिगृहं सुनिपुणमनुसन्धत्त।

(नेपथ्ये)—यथाज्ञापयति देवः।

कृष्णः—भो भो यादववाहिनीपतयः!

नो लुण्ठेयत धनं न वा परिजने विप्रोऽनुचर्य्येत वा
नो नाश्येत गजाश्वरैनिकगणः पूर्व्वं यथोक्तं मया।

भूमौ रवन् न परिखिन्नो मदवशात्कृतीन साम्प्रतम्
संहृत न चिराय नीतिकुशलैर्युष्माभिरेतोर्व्वशो ॥

नेपथ्ये—यथाज्ञापयति देवः। विजयतां त्रिभुवनपतिर्भगवान् वासुदेवः।

कृष्णः—अपि च—

आकैलासाद्रिशृङ्गाल्लवणजलनिधिं तुङ्गतालोर्म्मिमालं
पूर्व्वाद्रेश्चापराद्रिं प्रतिवननगरग्रामकं यात वीराः!
मत्नामाङ्कां पताकां शिरसि च दधतो दर्पवन्मूर्त्तिमन्तो
राज्ये राज्ये सदर्पं विचरत भुवनेऽस्मिन्नितैनां नृपश्च ॥

( ततः प्रविशति प्रद्युम्नः। )

प्रद्युम्नः—जयति जयति तातपाद! भवदादिष्टेन मार्गेणाहमपि यदुसेनापतीभूत आगच्छन्नहं पथि प्रतिरोधिनः प्रतिबलवीरान् सम्मोहनास्त्रेण सम्मोहयन् सानुचरं जयत्सेनं सेनापतिमनाथासेनावीत्सम्। अथ नगरं प्रविष्टः चित्रवर्म्मादीन् राजसेनापतीन् तेनैवोपायेन सम्मोहयन् मिथ्यासमरलक्षणप्रकटनाय—केवलप्रतिपक्षप्रजाश्वादिपशूनेव हत्वा तच्छोणिते रथ्याः प्लावयन् तानेव चितानले व्यक्षिपम्. अथाधुना यदुसैनिकानां मृषा कातरोक्त्या शोकमयीव नगरी वर्त्तते। ततः किमन्यत् कृत्यमस्ति?

कृष्णः—वत्स! अस्मत्-प्रमादेनैवेतः स्थानाद्विलुप्ता सा महाराज्ञेन सममुर्व्वशी, तन्निपुणमन्विष्यताम् विचार्य्यताञ्च किमधुना विधेयमस्ति। (स्वगतम्) अथवा गच्छतु स वराकस्त्रिभुवनं परिभ्रम्य पाण्डवाश्रयं; तेन पुनर्मन्मनोरथा उभयथा सिद्धिमुपयास्यन्ति।

अनिरुद्धः—( दृष्ट्वा, सविस्मयम् ) अहो किमेतत्!

नागाधवमखारसातलगतं द्वारं तथा विस्तृतं
मार्त्तण्डोद्गमनात् पलायितमिव प्राच्यं तमः सञ्चितम्?

उर्व्वश्या च तया दिनेऽप्यविरहादेतत्, किं चिन्तितं
मन्ये ; येन गतौ च तौ विलपथा संदृश्यते सोऽधुना ॥

कृष्ण:—रे रे चित्रभ ! अनेनापसृत्य विलपथेन जीवन् तया सह यथाकामं भोगं सुखेन भोक्ष्य इति मन्यसे, न नाम विदितमस्ति ; यत् किल:—

परेषां दृष्ट्वा प्रविचार्य्य नीत्या
परेषु सम्यग् विनियुज्य भेदम् ।
उच्छिन्नमूलानिव वन्यवृक्षान्
स्पृष्ट्वा शनैस्तान् विनिपातयन्ति ॥

तद्वत्स ! सात्यके ! अनिरुद्ध ! गच्छतं तूर्णं तदनुसरणं कमेव ।

सात्यक्यनिरुद्धौ—यथाज्ञापयति देव: । ( प्रस्थितौ )

कृष्ण:—बलदेवसेनप्रभृतय: सेनापतयोऽस्मीराज्यं रक्षन्तु यावन्न राजा प्रत्यावर्त्तते । अपिच वत्स ! प्रद्युम्न ! त्वमपि प्रतिदिशं गमय सैन्यानि, अहमपि देवकार्य्यावसरं प्रतीक्षे ।

प्रद्युम्न:—यथाज्ञापयति तात: । ( प्रस्थित: )

कृष्ण:—अयि भो दक्षिणराज ! जितं प्रणयेन ! येन त्वया—

विभाव्य तृणवद्राज्यं स्वजनांश्च धनानि च ।
भ्रम्यते त्रिषु लोकेषु तत्सङ्गमसुखाशया ॥

अत: सर्व्वथा देवता: स्वस्ति कुर्व्वन्तु ।

( इति निष्क्रान्त: । )

इति द्वितीयोऽङ्क: ।

---

## रोमकीयपातव्यपुरीस्थ-विश्वविद्यालयस्य सप्तशत-तमसांवत्सरिकमहोत्सवः ।

( Seventh Centenary Celebrations of the University of Padua, Rome )

महोत्सवस्यास्य कृत्यजातं विगतवैशाखे निरपद्यत । तत्रैव निमन्त्रिताः कलिकाताविश्वविद्यालयप्रतिनिधीभूताः श्रीयुक्त-सुनीतिकुमारचट्टोपाध्याय,-श्रीयुक्तदेवेन्द्रनाथमल्लिक,-श्रीयुक्तफणीन्द्र-नाथघोषाख्यास्ते मनीषिणः देववाणीगुम्फितमभिभाषणं किञ्चन वाचितवन्तः । विप्रकृष्टे पाश्चात्यप्रदेशे नानादिग्देशा-दायातानां मनीषिमहत्तमानां समागमपरिपूते समाजे देवभाषया-भिभाषणमिदं नवीननवीनं गीर्वाणवाण्या गौरवातिरेकमुद्घोष-यतीति तदस्माभिः पाठकानामुपाह्रियते ।

"ॐ स्वस्ति ।। श्रीः । रोमकीयपातव्यपुरीस्थविश्वविद्यालयस्य सप्तशततमसांवत्सरिकमहोत्सवार्थं भारतीयसर्वविश्वविद्यालयैः प्रेषिता मङ्गलाशिषः सौहार्दसम्भाजनानि च ॥

नमः समस्तविद्यानां प्रसूतिं शारदां शिवाम् ।
यत्पादाम्भोजमधुभिः प्लावितं भुवनत्रयम् ॥

सभासदः !

पातव्यनगरीस्थविश्वविद्यालयस्य सप्तशततमसांवत्सरिकवर्धापन-महोत्सवे भारतीयविश्वविद्यालयस्थविद्वत्परिषदः सम्प्रतिनिधि-मुखेन ससौहार्दं च सप्रमोदं चामुं सभाजयन्ति, शाश्वतजीवितां चास्य समभिलषन्ति । महान् खल्वयं सम्मानो भारतीयानां यदेते वयम् अत्रोपनिमन्त्रिताः पाश्चात्यपण्डितानां परिषदि । वहामश्च कीर्तनं पारिषदात् पातव्यविश्वविद्यालयस्य ॥

नूनमिदं विद्यामन्दिरं यूरोपीयभूविभागे प्राचीनतरम्। यत् सत्यमधुनातना: भारतीयविश्वविद्यालया: सुतरामेतस्मात् दवीयस्तरा:। किन्तु भारतीयानामस्माकमेव विश्रुतं भगवच्छा-ण्डिल्ययाज्ञवल्क्यप्रभृतीनामुपशान्तासु तपोवनभूमिषु विनेयशतसहस्रेभ्यो निगमान्तविद्यामुपदिशताम्। दुष्करं च विस्मरणं परःशतैः कुलपतिभिरधिष्ठितानामधुना स्मृतिशेषतां गतानामाश्रमो-पान्तभूमिषु शब्दघोषैर्निनादितानां विद्यागोष्ठीबन्धानाम्। दुष्पारतरश्च स्मृतिविशेष: तक्षशिला-नालन्दा-विक्रमशीला-विद्यापीठानां। मैथिलीयनवद्वीपीयानां च यच्छिष्यपरम्परा अद्यापि काशी-काश्म्यादिनगरेषु तामेव प्राचीनामध्ययनपरिपाटीमनुवर्तयन्ति। दूरे च स्मृतिविशेषो यदेकदा तक्षशिला च नालन्दा च न केवलं भारतीयानां वैनेयजनानामपि तु शकतुषारकुच-तुरुष्क द्रुष-चीन-भोट काम्बोजादिजनानां प्रियतमं विद्यापीठमभूताम्। यथा च पाश्चात्यभूविभागे पातव्यपुरी परिसनगरी उच्चतरणा च विद्यापीठा-नामधिभूमिरेवमेव च पौरस्त्यभूविभागे तक्षशिलानालन्दादीनीत्यपि प्रथितमेतत्। अद्यतनानि च भारतीयविद्यापीठानि पूर्वाचार्याणां दायमादाय नूतनेभ्यश्चामृतकलां संगृह्य प्राचीनाश्चार्वाचीनाश्च विद्या: नवीनया तरण्या शिष्येभ्य: समुपदिशन्ति,प्रथयन्ति च नवतरां जीविकाम् आत्मन:, समुद्घोषयन्ति च सप्रमोदम्—

अस्मन्तु सर्वशास्त्राणि भावानां वणजीविकाम्।
वयन्तु सर्वविद्यानामानन्त्यं प्रयास्महे॥

इतीमां विजयघोषणाम्।

समाना व आकूति: समानि हृदयानि व:। इतीयमनुपदिशन्त्वा-म्नाया:। एवमेवास्मिन् पातव्यपुरीस्थविद्यापीठस्य शतवर्षावधि-परिवर्धापनमहोत्सवे सङ्गता तमेव विद्यागिरिमावहन्ती मादृ-

रायमोहिनीविशेषितः वीरस्तत्रः सुशतुविनीयाश पाश्चात्या वयं मिलित्वैवं प्रार्थयामहे—

सह नाववतु
सह नौ भुनक्तु
सहवीर्य्यं करवावहै
तेजस्वि नावधीतमस्तु
मा विद्विषावहै ॥

ॐ शान्तिः शान्तिः शान्तिः ॥ सिद्धिरस्तु, शुभं भवतु। इति वङ्गेषु काशीमहाराजनगरीस्थविश्वविद्यालयादागतानां प्रतिनिधीनाम्। मल्लिकोपनामश्रीदेवेन्द्रनाथस्य। घोषोपनामश्रीफणीन्द्रनाथस्य। महापाध्यायोपनामश्रीसुनीतिकुमारदेवशर्म्मणः। पातञ्जनगरे उत्सववासरे।

# दुर्गेशनन्दिनी।

## सप्तमः परिच्छेदः।

### विमलायाः पत्रसमाप्तिः।

उक्तपूर्व्वं मया, मन्दारणदुर्गस्य कापि दीना रमणी पितुर्मे संसर्गाद् गर्भमधित्त। यथा मातुर्मे ललाटलिपिस्तस्या अपि तथैवाभूत्। तस्या अपि काचित् पुत्रिका जाता। सञ्जातरेभव्या शिशोर्जननी मम जननीव, श्रमोपार्जितवित्ता दुहितरं पालयामास। आकरसहयमेव दुग्धम् उत्पद्यते इति तु न विधातृविहितम्। पर्व्वतपाषाणेऽपि कोमला कुसुमलतिका जायते, तिमिरावृते खनिमध्येऽपि उज्ज्वलं रत्नम् उद्भवति। दरिद्रकुटिरेऽपि असामान्या रूपवती कन्यका

जाता। विधवा पुत्रिका मन्दारगड़दुर्गमध्ये प्रख्यातरूपत्वेन परिगणिता बभूव। कालक्रमेण सर्व्वमेव लीयते। विधवायाः कलङ्कोऽपि लीनतां गतः॥ विस्मृतं सर्व्वैः विधवातनया जारजेति। बहूनामेतदासीदपरिज्ञातम्। दुर्गमध्ये प्रायः केनापि नाज्ञायत। किमधिकं सा एव सुन्दरी तिलोत्तमायाः जननी बभूव।

अस्मादेव परिणयात् मम जीविते महत् किमपि वृत्तम् अभूत्। तिलोत्तमा तदा जननीजठरे अवर्त्तत। एकदा पिता सह जामात्रा आश्रमपदमागच्छत्। पित्रा प्रियत्वेन परिचितात् स्वर्गतात् प्रभोः यथार्थं परिचयमहं पश्चात् लब्धवती। तं दृष्ट्वैव—चित्तं मे पराधीनं जातम्। कथं वा तं वृत्तान्तमभ्यं कथयामि? ज्ञातं वीरेन्द्रसिंहेन—परिणयं विना नाहं तेन लब्धुं शक्या। पितापि अनुभवेन विदितवृत्तान्तो बभूव। एकदा तु उभयोरेवं संवादः प्रवृत्तः॥ मया श्रुतः। पिता प्रोवाच—न मया विमलां परित्यज्य कुत्रापि स्थातुं शक्यते। विमलायां ते धर्मपत्न्यां सञ्जातायां मया तव गृहे एव स्थातव्यम्। यदि पुनस्ते न वर्त्तते तादृशोऽभिप्रायः—

असमाप्ते एव पितुर्वचने स्वर्गतः प्रभुराकृष्टोऽवदत्—कथं देव, शूद्रा मया परिणेतव्या?

पिता सावहासमवादीत्—कथं वा त्वया जारजा कन्या विवाहिता?

प्राणेश ईषत् क्षुण्णमनाः प्रोवाच—न विदितम् मया परिणयसमये, सा जारजेति। जानता कथं शूद्रा परिणेतव्या? अपि च, जारजापि भवतो आत्मजा, न शूद्रा।

पिता प्रोवाच—साधु, त्वया विवाहो नाङ्गीकृतः। परं जायते विमलाया अनिष्टमत्र तवागमनेन। अतो नास्ति प्रयोजनं तवात्र पुनरागमनेन। तव गृहे एव मया सह दर्शनं भविष्यति।

ततः प्रभृति कियतो दिवसान् स विरतोऽभवदागमनात्। प्रात-

कीव यहं प्रतिदिवसं तस्यागमनं प्रत्यंसे। परं कियन्ति दिनानि आशा मे निष्फलत्वमगमत्। मन्ये स तावत् चिरं अवसन्नत्वं न भेजे। पुनरपि पूर्व्ववत् गमनागमनरतोऽभवत्। अतः पुनरपि आसाद्य तस्य दर्शनं न पुनस्तथा लज्जाशीला अभवम्।

पिता तु एतत् पर्य्यवेक्षत। एकदा स मामाहूयावादीत्—अव-लम्बितं मया धनाश्रमपतनम्। सुचिरं न भविष्यति मे दुहिता सहावस्थानम्। देशे देशे भ्रमति मयि, कुत्र त्वया स्थातव्यम्? पितु-र्विरहाशङ्कया कातराहं रुदती प्रावोचम्—अहमपि त्वया सह गमि-ष्यामि। न चेत् यथैव वाराणस्यामासम्, तथैवात्र एकाकिनी स्थास्यामि।

पितोवाच—नैवं विमले, मया तत्तोपि श्रेयान् संकल्पः कृतः। मदनन्तस्थानसमये तत्र सुरक्षकं विधास्यामि। त्वया महाराजमानसिंहस्य नवोढ़ायाः महिष्याः सहचर्य्या भवितव्यम्।

रुदन्त्या मयोक्तम्—मा मां परित्यजतु भवान्। पिताभाषत—नैव। नाहमिदानीं क्वापि गमिष्यामि। गम्यतां त्वमधुना मान-सिंहस्य गृहम्। अत्रैवाहं तिष्ठामि, प्रत्यहञ्च त्वां द्रष्टुं गमिष्यामि। तत्र तव अवस्थानस्वरूपं सम्यक् विज्ञाय मया कर्त्तव्यं विधातव्यम्। युवराज! भवदीयपुराङ्गनाहं संवृत्ता। कौशलेन पिता मां जामातुर्दर्शनपथात् अपसारयामास।

युवराज! सुचिरं भवदीयपितृभवने स्थिताहं पौररमणी-रूपेण। त्वं तु मां न जानासि। तदा दशवर्षदेशीयः त्वम् अम्बर-राजप्रासादे मातृसन्निधाने अवात्सीः, अहञ्च तव विमातुः साहचर्य्यं दिक्षोमगर्य्यामासम् नियुक्ता। कुसुममालिका इव असंख्या रमणी-राजिः ग्रथिता आसीत् महाराजस्य मानसिंहस्य कण्ठे। किं सर्व्वा एव विमातरस्त्वया परिज्ञाताः? किं स्मरसि योधपुरसम्भवां ऊर्म्मिलादेवीम्। ऊर्म्मिलादेवीगुणराशीनां कथं परिचयं दास्यामि?

नामन्यत सा मां सहचरीं दासीमिव। सा अपश्यत् मयि सहोदरायां प्राणाधिकायामिव। आकुमारं नानाविद्याविषयकी तस्या एव यत्नेन। तस्या एव अनुकम्पया अभिज्ञातं मया शिल्पकार्यजातम्। अधिगतं मया—नृत्यगीतादिकं तस्या एव मनोरञ्जनार्थम्। अध्यापिताहं तया स्वयमेव। तव मातुर्[illegible]देव्या अनुकम्पाफलमेतद् यदेषा प्रेषयितुं शक्यते भवत्समीपे मत्करसम्बद्धा पत्रिका।

तस्या ऊर्म्मिलायाः कृपया अपरोऽपि वरीयान् लाभः समभवत्। सा यथा मां प्रीतिचक्षुषा पश्यति स्म, तथैव महाराजाय मानसिंहाय परिचयमपि ददौ। आसीत् सङ्गीतादौ मम कश्चित् अधिकारः। तत्र च अजनि महाराजस्य कापि प्रीतिः। येनैव कारणेन भवतु, महाराजो मानसिंहो मां स्वपरिजनमिवामन्यत। स आसीत् भक्तिमान् मम पितरि। पिता सदैव मह्यं दर्शनं ददाति स्म।

आसमहं सर्व्वथा सुखिता ऊर्म्मिलादेवीसविधे। यदस्ति अन्यादन्यत् सर्व्वमेव तावत् सुस्थता तस्यादर्शनमेव मे केवलः परितापविषयः। किमहं तेन विस्मृता? नैव। युवराज, किं स्मरसि आसमानिं नाम परिचारिकाम्? भवेत् सा स्मृतिपथमागता! तया सह जाता मे महती प्रीतिः। प्रेषिता सा मया प्रभोः सकाशाय। अनुसन्धाय सा तस्मै मे प्रवृत्तिं ददौ।

प्रत्युत्तरेण स मह्यं कति नाम वार्त्ताः प्रेषितवान् तत् किं वक्तव्यम्? आसमानिहस्तेन प्रेषितवती तस्मै पत्रिकाम्। सोऽपि तस्या उत्तरमदात्। एवं वारं वारं सञ्जातम्। अतोऽपि दर्शनाभावे इत्थमावयोर्विश्रम्भसंवादः समजनि।

अनया रीत्या गतं वर्षत्रयम्। वर्षत्रयविरहेऽपि परस्परं ज्ञाताऽविस्मरणीयाभ्यामावाभ्यां ज्ञातं—यत् प्रणय एव न खलु मेघाच्छन्नमिव उपरि भासते, अपि तु पद्ममिव अन्तर्व्वर्त्तुलम्। न जाने कथ-

मिति—यद्यपि समये तथापि धैर्यच्युति-र्बभूव। एकदा तु दिन सायं जातम्। निशायामेकाकिनी शयनकक्षे शयानाऽहमकस्मात् जाते निद्राभङ्गे, स्तिमितप्रदीपालोके शिरोदेशे मानुषाकृतिमपश्यम्।

मधुरकण्ठेन मे कर्णकुहरे प्रविष्टमेतत् वचः—प्राणेश्वरि, मा भैषीः। अहं तवैव अनुगतो दासजनः।

किं मया उत्तरं दातव्यम्? वर्षत्रयात् परं जातं दर्शनम्। मुक्तेव विस्मृताऽहम्। तस्य कण्ठलग्ना अभवम्। सत्यमेव त्यक्ष्यामि प्राणान्। अतो विगलिता मे लज्जा। सर्वमेव वक्तुं शक्नोमि।

जाते वाक्यस्फोरणे तमपृच्छम्, कथं त्वयात्र अवरोधमध्ये आगतम्?

उक्तं तेन—पृच्छ आसमानीम्। तयैव सह नारिवाहकाष्ठरूपेणागतोऽहमत्र। ततः प्रभृति निलीनस्तिष्ठामि।

उक्तं मया—"अधुना?"

स प्रत्यभाषत—किमन्यत्? यत् त्वया विधीयते।

अहं विचिन्तयन्ती आसम्—किं करोमि? कं वा पन्थानमाश्रयामि।

बुद्धिःचित्तमनुसरति च। एवं चिन्तयन्त्या मम शयनकक्षद्वारमपाहतम्। पुरतोऽदृश्यत—महाराजा मानसिंहः।

अलं विस्तरेण? वीरेन्द्रसिंहः काराबद्धो बभूव।" स खलु राजदण्डेन दण्डनीय इति प्रकाशितं महाराजेन। मन्ये, मम हृदयावस्थां जानाति भवान्। उद्दन्ता अहम् उर्मिलायाः पदतले पतिता आत्मदोषं सर्वं प्रकाशितवती। तथापि पितृदत्तां तदाशिषं अन्वेतवती अनुष्ठम्।

महाराजस्तस्मिन् आसीत् अधिमान्। तं च गुरवस्तु आश्रयन्ति। स तूर्णं पितुर्मे अनुरोध रक्षितेति। उक्तं च मया—पितः, सम्प्रु

भवान् ज्येष्ठां तनयाम्। मम पिता महाराजेन सह मन्त्रयामास। स मम रोदने कर्णमपि न ददौ। रुष्ट स्नाब्रवीत्—पापे, किं त्वया सर्व्वथा लज्जा परित्यक्ता ?

अम्बिकादेवी मम प्राणरक्षार्थं महाराजसविधे बहु अभाषत। महाराजः प्रत्यभाषत—चोरं मोचयेयं, यदि स विमलाम् परिणयेत्।

ज्ञात्वा महाराजस्य अभिसन्धिमहं निःशब्दमासम्। प्राणेशो महाराजस्य वचसा जातरोषोऽवदत्—वरं मे यावज्जीवं कारागृहवासः, वरमपि प्राणदण्डस्तथापि नाहं कदापि शूद्रां परिणेष्यामि। हिन्दुर्भूत्वा कथं भवान् मामेवं प्रार्थयसे ?

महाराजः प्रोवाच—योऽहं मे भगिनीं युवराजाय वेलिमाय दत्तवान्, किमत्र चित्रम् सोऽहं त्वां ब्राह्मणतनयविवाहाय प्रार्थयिष्ये ?

तथापि नानुमन्यतैतत् मे प्रभुः। उवाच च—महाराज, भूनं यदासीत् भवितव्यम्। मुञ्च माम्। न पुनरहं विमलायाः कदापि नामापि उच्चारयिष्यामि। महाराजः प्रत्यभाषत—तदा कथं ते कृतस्य अपराधस्य प्रायश्चित्तं भवेत्। त्वया परित्यक्तां विमलामपरः स्नावत् सञ्जातकलङ्काम् मत्वा जुगुप्सया नापि स्पृक्ष्यति।

तथापि पूर्व्वं नाभवत् तस्य परिणयमतिः। पश्चात् असह्यायां कारागृहयन्त्रणायां कथमपि अङ्गसम्मतः स प्रोवाच—यदि नाम विमला मम गृहे परिचारिकावत् निवसेत्, मम जीवनकाले वा विवाहकथां नोत्थापयेत्, मम पत्नीति परिचयं न यच्छेच, तदेवाहं नान्यथा शूद्रां तां परिणयेयम्।

सञ्जातविपुलपुलकाहं तदेव प्रत्यपद्ये। नाहमासम् उत्सुका (कमासा) धनगौरवकौलीन्यादिषु। पिता महाराजश्च उभावपि अन्वमन्येताम्। दासीवेषेण अहं राजभवनात् स्वगृहमागता।

परिणीताहं तेन अनिच्छता परवशपौरुषः। को नाम एवं परिणीतां पत्नीमाद्रियेत। विवाहादनन्तरं प्रभुर्मां विषवत् अम

भूतः । तदा पूर्व्वप्रणयः सर्व्वथा विलुप्तः । महाराजमानसिंह-कृतमपमानं संस्मृत्य प्रभुर्मां भर्त्सयते स्म । तस्य तत् भर्त्सनं मया भादर इवावमन्यत । अलं वा तत्परिचयप्रदानेन ? प्रहतो मम वृत्तान्तः—नार्थस्तदितरकथया । कालेऽहं पुनरपि तस्य दयिता सञ्जाता । परमस्वरपतिं प्रति तस्य यथापूर्व्वं विषदृष्टिरेवावर्त्तत । ललाटलिपिरियम् । नो चेत् कथमेतत् सर्व्वम् भविष्यति ? समाप्तिं गतो मम वृत्तान्तः । न केवलं स्वप्रतिश्रुतप्रहरणार्थमेव एष मे यत्नः । मन्यन्ते बहवः, कुलधर्म्मं विसृज्याहं मन्दारणदुर्गाधिपतिना सह अवसम् । मयि उपरतायां भवता एत स मे कलङ्कः प्रतिमोचनीयः इत्येव भवन्तमेव एवं लिखामि । पत्रेऽस्मिन् लिखितं मया सविवरणमेव । यस्य च जनस्य सन्देशार्थं भवान् चञ्चलचित्तो वर्त्तते, तस्य नामोल्लेखमपि न कृतवता । मन्यताम्, लुप्तमेव तन्नाम पत्राः पृथिव्याः । विस्मर्य्यताम्—तिलोत्तमा नाम कापि कुत्रापि आसीदिति ।"

लिपिपाठं समाप्य ओसमानः प्रोवाच—मात भवतया रक्षितं मे जीवनम् । अहं तावत् ते प्रत्युपकरिष्यामि ।

विमला दीर्घं निश्वस्य प्रोवाच—कस्तावदिह वर्त्तते मम उपकारः ? त्वया मे किमुपकार्य्यम् ? एकस्तावदुपकारः—

ओसमानः प्रत्यभाषत—अहं तदेव साधयिष्यामि । विमलायाः नयनयुगलं प्रोज्ज्वलं सञ्जातम् । सा अभाषत—ओसमान, किं भाषसे ? कथमिदं दग्धं हृदयं प्रवञ्चयसे ? ओसमानः करस्थात् अङ्गुरीयकमेकं उन्मुच्यानादीत्—गृहाण एतदङ्गुरीयकम् । द्वित्रिदिवसैर्न किमपि सेत्स्यति । आगतप्रायः कतलुखानस्य जन्मदिन-समहोत्सवः । तदा प्रतिहाराः आमोदमत्ताः स्थास्यन्ति । तस्मिन् खलु दिवसे त्वामहमुद्धरिष्यामि । तन्निशीथे आगन्तव्यं त्वया अन्तःपुरद्वारम् । यदि कश्चित् प्रदर्शयति त्वामीदृशमङ्गुरीयकं

तत्र चागन्तव्यं त्वया पुराहरितेनैव सार्द्धम्। अन्ते निमन्त्रणकमेव भवद्दिदृक्षया चागन्तुं शक्ष्यसि।

विमला अवदत्—जगदीश्वरकृपया त्वं चिरं जीव। किमपि मया वचनीयम्।

बाष्पबद्धकण्ठा विमला नाशक्नोत अधिकं वक्तुम्।

आशीर्भिरापृच्छन्तीं विमलामीक्षमाणः प्रोवाच—एकस्मिन् विषये पुनरप्रमादः कार्य्यः। एकाकिन्या एव भवत्या आगन्तव्यम्। कापि सहचरी वर्त्तते चेत्, कार्य्यं न सेत्स्यति। प्रमादश्चाशङ्कनीय-स्तदा।

विमलया विज्ञातम्—यत् शोभमानेन तिलोत्तमाद्वितीयायास्तस्या गमनं निषिध्यते इति। सा मनसि विचारयामास—भवतु, यदि नाम उभाभ्याम् न गन्तुं शक्येत, तदा तिलोत्तमा एव एकाकिनी गमिष्यति।

विमला तमापृच्छ्य गता।

---

## कालीतन्त्रम्।

संस्कृतसाहित्यपरिषदा नवं प्रकाशितं कालीतन्त्रमालोक्य मूलानुसन्धानपरैस्तन्त्रमन्त्रविलासिभिरनेकैः सहृदयविद्वद्भिः सदयं परिषदे प्रदत्तः साम्नोः साधुवादो बहुलप्रश्रयैरस्माभिः शिरसि धार्य्यते।

अपरैः पुनः कैश्चिद्विद्वद्भिर्महाशयैः ग्रन्थस्यास्य प्रथमप्रकाशने संशयानैरेवं पारिषदा अनुयुक्ता "इतःपूर्व्वमपि कालीतन्त्रम् मुद्रित-मास्ते। तत् किमिति भवद्भिर्नवमेतत् प्रकाशितमित्युच्यते? यदीदं मुद्रितपूर्व्वात् कालीतन्त्रात् पृथगेव वस्तु, कीदृशं तत् पार्थक्यं? इति प्राचम्य वा कतरदेतयोरुभयं वा प्रमाणभूतं तान्त्रिकाणाम्? भवतां सोपपत्तिकप्रमाणैरत्र वयं निर्विकल्पा भवितुमिच्छाम इति।"

पाठकवराः सकौतूहलं जिज्ञासन्ते: कथमेतदविष्कृतमस्माभि-रिति चेत्।

अस्त्यस्मिन् प्रचारितमितःपूर्व्वतोऽपि कालीतन्त्रं नाम किमपि। किन्तु हन्त! तत्र तन्त्रसारश्यामारहस्यकालार्चनचन्द्रिका-श्यामाकल्पलताप्रभृतिप्रामाणिकनिबन्धेषु कालीतन्त्रीयत्वेन परः-शतानामेकतमदपि नासादितम्—बाहुल्येन भूतप्रेतादिबाधनं याद्दच्छिकभेषज्यविधानं चावलोकितम्। याथार्थ्यमन्यच्चात्र काली-विषयकं किमपि नोपलब्धम्। गम्भीरार्थपदानां सम्प्रसादानां तान्त्रिक-वचनगौरवलोमपहाय प्रायेण च्युतसंस्कारा पल्लवमर्वाचीना चात्र, काचन परिदृष्टैवास्ति। इत्येतत् सर्व्वं निपुणमालोच्य चटतली मुद्रितपूर्व्वम् तन्त्रं नाम तदमूलमप्रमाणं कृत्रिममेवावधारितमस्माभिः।

ततः प्रभृति परिषत्पक्षतः मूलमातृकामन्विष्यद्भिरस्माभिरा-देतरस्थानादर्शचतुष्टयं समासादितम्। तानि च परस्परं मूल-पुस्तकानि, निबन्धृभिर्धृतैः कालीतन्त्रवचनैश्च संवाद्य तन्त्रतत्त्व-विमर्शचतुरैः सुधीभिः सम्पाद्य परिषदा प्रकाशितमेतत्। इदमेव कालीतन्त्रं मूलम् तान्त्रिकनिबन्धृणां साम्प्रदायिकानाञ्च प्रमाणभूत-मिति निःसन्देहं प्रदर्श्यते।

तान्त्रिकनिबन्धेषु तन्त्रान्तरेषु वा प्रसङ्गादुद्धृतानि कालीतन्त्रीय-वचनानि सर्व्वाण्येवात्रैव यथायथमधिगम्यन्ते। तथाच तन्त्रसारे श्यामाप्रकरणे —

"कामत्रयं वह्निसंस्थं रतिबिन्दुविभूषित"मित्यादि।

( परिषत्प्रकाशितकालीतन्त्रे १प।५, ६ इत्यादि )

श्यामारहस्ये पुरश्चरणप्रकरणे—

"आदौ पुरस्क्रियां कुर्य्यान्नियमेन यथाविधी"त्यादि।

( परिषत्प्रकाशितकालीतन्त्रे २प।२, ३ इत्यादि )

काव्यदर्शनचन्द्रिकायां मन्त्रभेदप्रकरणे—

"कामाचरं वह्निसंस्थमिन्दिरा नादबिन्दुभि"रित्यादि ।

( परिषत्प्रकाशित कालीतन्त्रे १०प।११, १२ इत्यादि )

श्यामाकल्पलतायां वीरसाधनप्रकरणे—

"मद्याशवाः प्रशस्ताः सुराः प्रधानवीरसाधने" इत्यादि ।

( परिषत्प्रकाशितकालीतन्त्रे ८प।४१ )

प्राणतोषिण्यां कालीप्रकरणे

"नानाचारो न कर्त्तव्यो न चारणमितस्ततः

भूतहिंसा न कर्त्तव्या पशुहिंसा विशेषतः ।

बलिदानं विना देव्या हिंसां सर्व्वत्र वर्जये" दिति ।

( परिषत्प्रकाशितकालीतन्त्रे २प।४, ५ )

एवमादीनि पुरश्चरणरसोल्लासहरतत्त्वदीधितिप्रभृतिभ्यः उद्धर्त्तुं शक्यन्ते । बाहुल्यभिया ततो विरतिरालम्बिता । एतत्सम्प्रदायस्थानां विदितमेतत् यदेकाकाचर्य्यां विशेषध्यानं सिद्धेश्वरतन्त्रोक्तं "शवारूढा"मित्यादिकमेव प्रायेण प्रचरितमास्ते । किन्तु गौड़ेषु—क्वचित् "करालवदना" मित्यादि ध्यानमपि एकाचर्य्या एव सपर्य्यायां व्यवह्रियते । तादृक्करणमूलप्रमाणन्तु—

"ध्यानपूजादिकं सर्व्वं साधनञ्च पुरस्क्रिया

अनिरुद्धसरस्वत्याः समानं सर्वमीरितम् ॥" इति

अस्मिन्नेव कालीतन्त्रे ( १०।१७ ) अस्ति नान्यत्र ।

आद्यविद्याया अयमेव प्रकरणग्रन्थो मूलीभूतः, अन्यानि च तन्त्राणि एतस्य सम्पूरकाणीति—स्वयं निर्धारयन्तु सुधियः ।

किं बहुना मन्यामहे, एतेनैव लेखविशेषेण इदमेव कालीतन्त्रं परिषत्प्रकाशितं मूलं नान्यदिति संशयिनो निराकुलामेकतरपक्षपातितामुपायास्यन्तीति । विशेषार्थिनस्तु तन्त्रनीतत्पर्य्यालोच्य

कलिकाता इत्यत्र तत्प्रकाशे एव प्राप्यते। मूल्यम् रूप्यक-मात्रम्। अन्यदास्याः सुदीर्घं समालोचनमत्रैव भविष्यतीत्यलं विस्तरेण।

---

## विविधकथा।

**कृष्णवर्णस्य श्वेतवर्णतासम्पादनम्**—पो एफ् पिचु सो नामकः कश्चन पाश्चात्त्यचिकित्सकः प्रचारयति, यत् स नाति-विलम्बमेव मानुषाणां कृष्णवर्णतां परिवर्त्य श्वेतवर्णतां सम्पादयितुं शक्ष्यतीति। स पञ्चदश वत्सरान् यावदस्मिन् विषये प्रचेष्टमानः सार्थकश्रमो जातः। पञ्चदश दिवसान् प्रयत्नविशेषमाचरता तेन बहवः कृष्णवर्णा मूषिकाः श्वेतिमानं लम्भिताः। सम्प्रति परीक्षा संवृत्ता तस्य मानुषेष्वपि। कस्यचन कृष्णवर्णपुरुषस्य वामहस्तगतं किञ्चित् शोणितं निःसार्य तदीयमन्त्रयन्त्रे समभ्याप्यत, यस्याभ्यन्तरे च यदा तत् शोणितं प्रक्रियाविशेषेण परिशुद्धं निर्दोषमजनि, तदा पुनः प्रवेशनयन्त्रेण दक्षिणकरे तस्मिन् शोणिते सञ्चारिते, द्वित्रैरेव सप्ताहैस्तस्य वर्णपरिशुद्धिः समजायत।

( समयपत्रिकातः )

मन्तव्यम्—भोः भोः श्यामकामिनीकाः युवानः, नूनमयं सौभाग्य-समुदयो युष्माकम्, यद्यं कृष्णवर्णानां श्वेतिमसम्पादनहेतुरुपगतः, समागतो दृशां दर्शमपूर्वं चपलाविनिन्दिरूपजातं जातः पर्व-भवितव्यं भवद्भिर्विषादवद्भिः। परन्तु ये कृष्णाङ्गत्वमेवमसुरोचनं पदविषयेषु नियमनुपेक्ष्य निर्वर्तयन्ति, तेषामिव सकलो विषयि-रेव समुपनतः। [illegible] [illegible] तदा [illegible] साकल्यतो विस्मयं तैरिति [illegible] [illegible]।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम् ॥

१८४५ शकीय —अग्रहायणी, ५म वर्षस्य ८म संख्या।

## सेवाधर्मः।

( लेखकः—श्रीशिवनारायणशर्मा शास्त्री विद्यावारिधिः मोहर बीकानेर शिवलाल-रामलालसंस्कृतपाठशालाध्यापकः। )

विषयोऽयं परमगहनः सेवाधर्माख्यः, न सहसा रहस्यमस्यावगन्तुं शक्यते। पूर्णमस्य रहस्यं मर्यादाव्यवस्थापकेन भगवता श्रीरामचन्द्रेण पूर्णावतारेण भगवता श्रीकृष्णचन्द्रेण पतिव्रताग्रगण्यया जनकनन्दिन्या श्रीजानक्या मारुतात्मजेन श्रीहनुमता च सम्यगबोधि, शेषतः परन्तपेन पाण्डुनन्दनेन अर्जुनेनापि पर्यज्ञायि। अत एव "सेवाधर्मः परमगहनो योगिनामप्यगम्यः" इत्येवं राजर्षिणा श्रीभर्तृहरिणाभाणि। या सेवा संसृतौ सर्वतो जघन्या, यदर्थं न कोऽपि सज्जीभवति, सापि धर्मस्य कलेवरमिति नेयं साधारणी वार्त्ता। मनुस्मृतौ—"सेवा श्ववृत्तिराख्याता तस्मात्तां परिवर्जयेत्।" इत्यलेखि। मानवोऽयम् ऋतामृतमृतप्रमृतसत्यानृताख्यासु पञ्चसु वृत्तिषु यां कामपि वृत्तिमाश्रित्य स्वनिर्वाहं कुर्यान्नाम परं सेवाधर्मं न आत्मसात्कुर्यात्, श्ववृत्तित्वात् सेवाधर्मस्य, यथाशक्यं मानवेन परित्याग एवास्य विधेय इति हि भगवतो मनोरादेशः। एवञ्च धर्मरूपतामभ्युपगम्य सेवाया इतिकर्त्तव्यता प्रतिपाद्यते, अन्यत्र च

स्वहन्तित्वमाख्याय निन्दनीयत्वं व्यवस्थाप्यते सेवाया इत्यहो कियत् महदन्तरम्।

तत्रायं पूर्वाचार्याणां विमर्शः—सेवा हि द्विविधा वरीवर्त्ति स्वार्थ-साधनपूर्विका स्वार्थत्यागपूर्विका च। तत्र प्रथमा वृत्तिः, द्वितीया धर्म इति। परं वार्त्तेयं स्थूलदृशा विचारेऽवगम्यते, सूक्ष्मेक्षणया यदि विचारः क्रियेत, तदा तु द्वयोरपि वर्त्तते स्वार्थ इति सुस्पष्टं सिध्यति, तत्रापि प्रथमापेक्षया द्वितीयायामधिकाराच्चेति पुरः स्पष्टं भविष्यति।

सेवास्वरूपम्।

मनसा वाचा कर्मणा येन केनापि प्रकारेण वा प्राणिमात्रस्यो-पकृतिः शर्मसम्पादनं सेवायाः प्राथमिकं स्वरूपम्। सेयं द्वैते संभवति नाद्वैते। सेवको येन कर्मणा स्वसेव्यस्य कृपाभाजनं भवेत्, सा क्रिया सेवा नाम। सेवया सेवकः कालान्तरे सेव्यस्थानमुपलभ्य अनेकेषां सेव्यः समुपजायते। "दासोऽहं सोऽहम्" इति वाक्ययोः 'दा' मात्रस्यैवान्तरम्, नास्य रहस्यं सर्वेऽवबोद्धुं शक्नुवन्ति। स्वार्थे परमार्थः, परमार्थे च स्वार्थो नीरक्षीरवदस्ति सम्मिलितः, नैकस्मात् कदापि परः पृथक् भवितुमर्हति। सेवायां क्रियमाणायां सेवकस्य सेव्यपदप्राप्तिरेवास्य प्रत्यक्षं निदर्शनम्।

इदमेव स्वार्थस्य सर्वतोऽधिकं विश्वव्यापि स्वरूपम्।

विश्वव्यापिसेवाप्रपञ्चः।

निखिलेऽपि जगति सेवेयम् एकादशभेदविभिन्ना वरीवर्त्ति। मातृसेवा—पितृसेवा—गुरुसेवा—पतिसेवा—देशसेवा—जातिसेवा—धर्मसेवा—राजसेवा—आत्मसेवा—भगवत्सेवा—अतिथिसेवा चेति भेदात्। इतोऽन्यत् यत्किंचित् सेवास्वरूपं संभवति तदिहैव एकादशभिदास्वन्तर्भवति, सेवामात्रे च स्वार्थमात्रा संक्रान्तेति सर्वैत्र विवेचनीयम्।

## मातृसेवा ।

मानवैः सेवाधर्मसेवनं निजवेश्मतः ( प्राक् ) शिक्षणीयम्, ततस्तु अभ्यासेन लब्धनैपुण्यै र्बहिरस्य चर्चायां वर्तितव्यम् । माता पुत्रस्य कियतीं सेवां विधत्ते, नास्य परिमाणाय किंचित् लोकनसाधनम-स्माकं सविधेऽस्ति, । पितुर्बिन्दुमात्रं वीर्यं स्वशरीरीयाधिकरसेन परिवर्ड्य गर्भगतबालकस्याहर्निशं हितचिन्तनविधानं स्वीयपरि-स्थितेरपि तदनुकूलकरणं जन्मानु तदेकताननया तत्परिपालने मनसः संक्रमणम्, इतोदं कर्तव्यं संसृतौ यदि कस्यचिदस्ति, तर्हि केवलं श्रीमातृदेव्या एव । अतएव—

"यं मातापितरौ क्लेशं सहेते संभवे नृणाम् ।
न तस्य निष्कृतिः शक्या कर्तुं वर्षशतैरपि ॥"

इति भगवता मनुनाऽभाणि । अतः सर्वैरेवास्तिकपुत्रैः प्रातरु-त्थाय स्वमातृपित्रोश्चरणवन्दनं विधाय ताभ्यामाशीर्वादो ग्रहीतव्यः । "यः पुरुषोऽभिवादनशीलः स आयुर्विद्यां यशोबलं चाधिगच्छति" इति मनूक्तेः । "उपाध्यायतो दशगुण आचार्यः, आचार्यात् शत-गुणः पिता, पितुः सहस्रगुणाधिका जननी," इत्यपि भगवता मनुनैवोक्तम् ।

"मात्रा समं नास्ति शरीरपोषणं नारोग्यसमं नास्ति शरीरतोषणम् ।
चिन्तासमं नास्ति शरीरशोषणं विद्यासमं नास्ति शरीरभूषणम् ॥"

अतः पुत्रेण सर्वदा जनन्या हितं चिन्तनीयं, मातुराज्ञा परिपाल-नीया, अत्रैव तस्यानिमात्रं कल्याणमस्ति ।

## पितृसेवा ।

अनन्यभावेन पितुराज्ञापरिपालनमेव पितृसेवा । पितैव पुत्र-स्वरूपेण परिणतो भवति, "आत्मा वै जायते पुत्रः" इत्यादि वचन-प्रामाण्यात् । उरसा संबन्धबाहुल्यात् पुत्रस्य औरस इति नाम पतति, "हृदयादधिजायसे" इति मन्त्रवर्णात् । पुत्रस्य बाल्य, दाम्प-

णानि पुराणादौ। भीष्मपितामहः स्वपितुः सुखार्थम् आजन्मब्रह्म-चारित्वं स्वीचकार। भगवान् श्रीरामचन्द्रोऽपि पितुः सुखार्थमेव चतुर्द्दशवार्षिकं वनवासं स्वीकृतवान्। रामप्रत्यानयनाय चित्रकूटाश्रमे गतं भरतं प्रति कीदृशो भगवतः श्रीरामचन्द्रस्योक्तिर्नूनं सर्व्वैः सर्वदा कण्ठस्थीकरणीया। सा चेयम्—

"त्वया मया च कर्त्तव्यं सत्यवाचः पितुर्वचः।
इति प्रत्यादिशद्रामो भारतीमपि भारतीम्॥" इति।

पितुराज्ञापरिपालनविषये श्रीरामकथैव सर्वतो गरीयसी, आदर्शरूपा च।

## गुरुसेवा।

अनन्यभावेन गुरोराज्ञापरिपालनमेव गुरुसेवा। हस्ते समिधमादाय गुरोर्निकटगमनं वेदानुमतम्। राजवैद्यगुरूणां सविधे न कदापि रिक्तपाणिना गन्तव्यमिति सनातनी शिक्षा। विद्यासमाप्तौ गुरुदक्षिणां प्रदाय कौत्सवत् गृहे गन्तव्यम्। गुरुरेव लोकमज्ञानान्धं ज्ञानाञ्जनशलाकया चक्षुष्मन्तं करोति। गुरुर्ब्रह्मा, गुरुर्विष्णुः, गुरुरेव शंकरः, गुरुरेव परं ब्रह्म, इति भावनया यो गुरुदेवस्याराधनं करोति, नूनं स गुरुहृद्गतस्य विद्याधनस्य भागी भवति। तदुक्तम्—

"यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ।
तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥ इति।"

मर्मेदं तत्त्वतो यो विजानाति, स एव सत्यो विद्यार्थी नान्यः॥

## पतिसेवा।

पित्रा वाग्दाने कृते पत्युः सर्वात्मभावेन हितकामना पतिसेवा। स्त्रीणां कृते न कश्चिद्यज्ञोऽस्ति, न व्रतम्, नाप्युपवासः, किंतु केवलं पतिदेवपरिचर्यया तासां स्वर्गगतेः पन्थाः। मनुसिद्धान्तोऽप्ययमेव। "या नानन्यपतिका स्त्री नासौ संसृतौ यशो लभते, शृगालयोनिं च

भूयोऽधिगच्छति, पापरोगैश्च पीड़िता भवति।" इति हि मनुना कथ्यते। विषये चास्मिन् गोस्वामिन इदमेव मन्तव्यम्—

"एक हि धर्म एक व्रत नेमा। कायवचनमन पतिपदप्रेमा॥"

इति। पातिव्रतविषये सीतादयो बहव उदाहरणस्वरूपाः। यदा रावणेन हनुमतः पुच्छे हुताशनारोपणमकारि, तदा तच्छितकामनया तत्परया सीतयाऽभ्यभाषि—

"यद्यस्ति पतिशुश्रूषा यद्यस्ति चरितं तपः।
यदि चापेरकपत्नीत्वं शीतो भव हनूमतः॥" इति।

एवं कथित एव हुताशनः शीतलतामभजत्। भोजप्रबन्धेऽपि— "सुतं पतन्तं प्रसमीक्ष्य पावके, न बोधयामास पतिं पतिव्रता।" तदाभवत्तत्पतिभक्तिगौरवाद्धुताशनश्चन्दनपङ्कशीतलः॥" इत्याख्यान मुपलभ्यते। गान्धार्या इतिहासो महाभारते दर्शनार्हः, यस्या एव शापेन यदुवंशनाशः समभूत्, श्रीकृष्णो न किञ्चित् कर्तुं शशाक। पद्मिन्याः सतीत्वं जगत्प्रसिद्धम्। एवमन्यासामपि सावित्र्यादीनाम्॥

## देशसेवा।

स्वदेशकृते हितचिन्तनं देशसेवा। मानवो यत्र भूमावुत्पद्यते तदुन्नतिभारोऽपि तदुपर्येवास्ति विद्यमानः। यथा तदुन्नता भवेत् तस्याः कलाकौशलव्यापारविद्यायशांसि वर्द्धरन् तथा कार्यं कर्तव्यम्। एतत् समीक्ष्य व श्रीकृष्णः पार्थसारथिरभूत्। स्वर्गतो गोपालकृष्ण-गोखलमहाशयो देशसेवायामेव निरत आसीत्। यत्पुरुषार्थेनाद्य स्थले स्थले सेवासमितीनां संगठनं जायते। खेद इयानेव बहवो जना धर्मभावेन कार्यं कर्तुं नाद्यावधि जानन्ति। उद्यानारोपणं धर्मशालामन्दिरवापीकूपतडागादीनां निर्माणं च देशस्य परम सेवा। राजानो देशस्य बह्वोः कालात् कार्येऽस्मिन् भागिनः। सेयमतिसौभाग्यवार्ता। ये मन्दिरनिर्माणादीनां विरोधिनो नूनं ते देशद्रोहिणः॥

जातिसेवा।

या यज्जातावुत्पन्नस्तस्या हितचिन्तनं तत्कर्त्तव्यावश्यकम्। ब्राह्मणाद्या विविधा जातयो या भारतवर्षेऽनादिकालतः प्रचलिता आगच्छन्ति न ता सदात्वे उच्छेदयासम्भवाः, कुरीतिसंक्रान्तत्वात्तासाम्। अस्मदनुमतौ प्रत्येकजातौ कुरीतिनिवारिण्या सभया भवितव्यम्। स्वस्वजातेः स्वरूपरक्षणं येन संभवेत्, तत्कार्य्यं प्रत्येकजातिनेतृभिरवश्यं सम्पादनीयम्, अन्यथा वर्णव्यवस्था विलुप्येदिति नः संभावना। वर्णव्यवस्थाविघटका नूनं जातिद्रोहिण इति ततः सावधानैरेव सर्व्वैर्भवितव्यम्॥

धर्मसेवा।

प्रत्येकजातेर्धर्मोऽस्ति भिन्नभिन्नः। तत्र स्वस्वधर्मरक्षणमेव धर्मसेवा। येन स्वस्वरूपस्य रक्षा भवेत्, स धर्मः, स्वरूपपातकश्चाधर्मः। तथा चाभियुक्ताः—"स्वरूपरक्षको धर्मः पातकं तस्य पातकम्" इति। भगवान् श्रीरामचन्द्रो धर्मरक्षार्थमेव वनं जगाम, राजा हरिश्चन्द्रोऽपि धर्मरक्षार्थमेव कष्टजाते पपात, भोजमहाराजोऽप्यस्यैव सेवायां कटिबद्ध आसीत्, पञ्चसप्तवर्षवयस्कौ श्रीगुरुगोविन्दसिंहकुमारावपि धर्म्मरक्षार्थमेव म्लेच्छाधिपतिना भित्तौ धृतावास्ताम्, पद्मिन्यपि धर्मरक्षार्थमेव चितायां दग्धाऽभवत्। स्वाराज्यप्राप्त्यर्थमपि धर्म्म एवाश्रयितव्यः, धर्म्मे स्थिते यदि स्वाराज्यं मिलेत् तर्हि ग्राह्यम्, अन्यथा त्विन्द्रपदमपि सर्व्वथा हेयमेव। ये च देशनेतारो धर्म्मं हत्वा शर्मभोगाभिलाषिणो नूनं ते भ्रान्ता देशशत्रवश्च। तथाचोक्तम्—

"वाताभ्रविभ्रममिदं वसुधाधिपत्यमापातमात्रमधुरो विषयोपभोगः। प्राणास्तृणाग्रजलविन्दुसमा नराणां धर्मः सखा परमहो परलोकयाने॥" इति। अतः सदैव सर्व्वदा स्वस्वधर्मरक्षार्थं संयतकटिभिर्भवितव्यम्। दयानन्दिनो धर्मद्रोहिणः, इमे सर्वान्

एकीकर्तुमिच्छन्ति, आचारविचारं नाश्रयन्ति। धार्मिकैर्न कदापैरेषां सङ्गतिः कार्या, इमे कालनेमिस्वरूपा, जनवञ्चका भारतविध्वंसकाश्च ॥

आत्मसेवा ।

आत्मशब्देनात्र शरीरसभ्यतायश आदयः सर्व एवार्था अभिप्रेताः। आत्महननं महापापम्। धर्मोऽपि स एव यो वेदस्मृतिसदाचारसिद्ध आत्मप्रियश्च भवेत्, आत्मविरुद्धकार्यकरणं पापसम्पादनम्। आत्महन्ता नरकं यातीति वेदानुमतम्। मानवेन सर्वदा आत्मन उन्नतिः सम्पादनीया, स्वात्मा उन्नतां नेयः, आत्मतुष्टिरेव कार्यमात्रस्य फलम्। ईश्वरेण मिलनम् आत्मनः परमा उन्नतिः, भगवत्सेवया चैतत्संभवति। श्रवणकीर्तनादीनि भगवत्सेवाङ्गानि। मूढाः शरीरमेवात्मानं मन्यन्ते, ते नास्तिकाः, केचन सभ्यतास्तम् आत्मविस्तारं मन्यन्ते, परं दिलीपसदृशा महानुभावा यशःशरीरं मन्यन्ते स्म, स्वरूपशब्दार्थोऽतिविस्तृतः, कर्ण-शिवि-जीमूतवाहनदधीचयो विषयस्यास्य महत्त्वं सम्यगबोधिषत। कर्णेन त्वक्, शिविना स्वमांसं, जीमूतवाहनेन प्राणाः, दधीचिना स्वास्थीनि च लोकमङ्गलायैव प्रदिषत, आत्मविस्तारस्यायं सर्वः परिणामः। सर्वैरेवात्मसेवायां सावधानैर्भवितव्यम्। नियोगादिकुकर्मभिरात्मा पतति, देवपूजनभगवद्भजनश्राद्धादिभिश्च तदुद्धारः ॥

अतिथिसेवा ।

सनातनधर्मेऽस्यातिमहत्त्वम् वेदादौ सत्यशास्त्रेऽस्य बहूनि प्रमाणानि, अथर्ववेदीयम् अतिथिसूक्तमस्यातिपक्षपाति। यस्यागमनस्य न काचित्तिथिर्निश्चिता सोऽतिथिरुच्यते। कार्यमिदं सर्वेषां गृहे भवति, राज्ञां गृहे राजानोऽतिथयो भवन्ति, रङ्कानां च रङ्काः। यथाशक्ति तस्यान्नजलादिनाभीष्टोपपादनम् अतिथिसेवा। राज्ञां वणिजां च धनिनां महान्ति गृहान्ति विश्रामस्थानानि ( गेष्ट हाउस )

अतिथिसेवार्थमेव नियतानि दृष्टिपथमवतरन्ति। विश्वामित्रस्य वशिष्ठेनातिथ्यं कृतम्, भरतस्य भरद्वाज आतिथ्यमकरोत्। प्राचीने समये जनकनलनहुषादयो राजानः सर्वदा विदुषामातिथ्यं चक्रुः, एतदर्थं प्रमाणोपन्यासोऽन्धस्य दीपदर्शनमिव॥

भगवत्सेवा।

भगवान् सर्वत्र मूर्तिमान्, विश्वमात्रं तस्य विराट् स्वरूपम्। मूर्तं चामूर्तं चेति द्वयं तस्य निजं रूपम्। तत्र वाय्वाकाशेति द्वयम् अमूर्तं रूपम्। वेदेषु यत्र क्वापि अमूर्तब्रह्मणो वर्णनमुपलभ्यते, तत्रैव वाय्वाकाशरूपावस्थितब्रह्मणो वेदितव्यम्। पृथिवीजलतेज इति त्रयं च मूर्तं ब्रह्म। अमूर्तापेक्षया मूर्तस्याधिको विस्तारः। भगवतः सर्व्वेति नाम, "सर्वं समाप्नोषि ततोऽसि सर्वः" इत्युक्तेः। व्याप्यव्यापकभेदेन भगवानेव जगन्मयः, सर्वं तस्य स एव सर्वं यत्किञ्चिदस्ति।

"क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम्।
अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते॥" इति

अनेन भगवद्गीतापद्येन प्रतिपाद्यते—अव्यक्तस्योपासनाया अधिकतरं कष्टमुपजायते। मनुष्यमात्रः सुखस्याभिलाषी, सुखं च साकारस्योपासनायामेव। भगवान् सर्वत्रास्ति, सर्वं च भगवति यत्किंचिदस्ति। गीतं च गीतायां भगवता—

"यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति॥"

अत आस्तिकधिया भगवद्दर्शनकरणमेव मानवकल्याणमार्गः।

"पुंस्त्वादपि प्रविचलेद्यदि यद्यधोऽपि,
यायाद्यदि प्रणयनेन महानपि स्यात्।
अभ्युद्धरेत्तदपि विश्वमितीदृशीयम्,
केनापि दिक् प्रकटिता पुरुषोत्तमेन॥"

यतो मनुष्यो मनुष्यत्वाद्वा पतेत्, अधोगतिं वा प्राप्नुयात्, लघुर्वा भूयात्, परं विश्वोद्धारव्रतं न जातु जह्यात्, पुरुषोत्तमेनैव मार्गस्यास्य शिक्षणात्। भगवताऽमृताहरणसमये मोहिनीरूपं धृतमासीत्, तत्र विश्वोद्धार एव हेतुरासीत्, अन्यः, पाताले बलि-द्वारस्थितिप्रतिज्ञा केवलं विश्वोद्धारनिमित्तमेव भगवताऽकारि, याचनसमये वामनावतारस्वरूपं विश्वोद्धारार्थेव भगवताऽधारि, ततोऽस्यैव मार्गस्यानुसरणं सर्वैः कार्य्यम्।

सेवातात्पर्यम्।

भारते याः सेवासमितयः सन्ति, तासु बह्वास्त्रुटयः; तत्र प्रथमा त्रुटिस्तु धर्मभावस्याभाव एव। तासु सम्मिलिता नवयुवका मनः-कल्पितं कुर्व्वन्ति, नम्रतायास्तेषु गन्धोऽपि नास्ति, सर्वं चैतत् सेवाधर्मविरुद्धम्। सेवायां नास्ति जातिभेदविचारः, ब्राह्मणो वा भवतु चाण्डालो वा, अविशेषेण सेवा कर्त्तव्या, जातिभेदविचारे हि सेवाव्याघातापातात्।

लेखोपसंहारः।

यस्य पवित्रसेवाधर्मस्य आदर्शो भगवता श्रीकृष्णचन्द्रेणास्माकं समक्षम् उपस्थापितः, यस्योद्धारः श्रीकृष्णगोपालगोखलेमहाशयद्वारा समभूत्, तस्य भारते स्थले स्थले प्रचारो भवतु। सेवासमितयो धर्मभावेन कार्य्यं कर्त्तुं शिक्षेरन्। देशेऽराजकता मा प्रसरतु, प्रतिनगरं सेवाश्रमसेवका जनताया उपकारं विदधतु, विश्वीया जना विश्वोपकारव्रते दीक्षिताः स्युः, सर्व्वेषां कल्याणमस्तु इति शम्।

---

# श्रीहर्षकवेस्तत्काव्यस्य च समालोचना।*

( लेखकः—श्रीकाशीश्वरभट्टाचार्यकाव्यविशारदकाव्यतीर्थः। )

भारत्याः पितृनिलयत्वेनास्मिन् भारते भारती नितरां विराजते। इहैवास्याः पुराणमध्यजातान्निमाय व्यासवाल्मीकिशूद्रक-कालिदासभवभूतिदण्डिबाणश्रीहर्षबिल्हणजगन्नाथराजादयश्चान्येऽपि च बहवो वरपुत्रा मातृसेवानिरताः परमानन्दसन्दोहमया विश्वतो-मुखप्रतिभातिशय्यतो विविधरसभावादिसमन्वितां काव्यकलां विविधांश्च ग्रन्थान् निर्म्माय प्रभूतकीर्त्तिशालिनः सुखं स्वसमयं यापयामासुरमरा इव निवसन्त्यधुनापि च सज्ज्ञानजपूतपुष्पोद्याने, वर्त्तिष्यन्ते चाप्रलयकालम्।

इयं हि काव्यकला, "गद्यं पद्यञ्च मिश्रञ्च तत्त्रिधैव व्यवस्थित"-मित्यालङ्कारिकोक्तितस्त्रिधा व्यवस्थापितम्। तत्र बहुभिस्तावत् पद्यजातसर्गबन्धादियुतमहाकाव्यनिर्म्माणे, कैश्चिद्गद्यपद्यात्मक-मिश्ररचनायाम् अपरैश्च कैश्चिद्गद्यकृतौ पद्यकृतौ च, अन्यैश्च मितसंख्यकैः केवलं गद्ययोजनायां यत्नः कृतः।

तत्रभवतां प्रवरपुरुषाणां मध्येऽस्मिन् प्रबन्धे तावदालोचनीयोऽस्माभिः श्रीहर्षकविस्तत्काव्यञ्च। तत् यथाशक्ति संक्षेपतो दर्श्यते। अस्य किल महात्मनो जीवनवृत्तान्तोऽपि यथाश्रुतमुप-निबध्यते।

आसीत् पुरा कान्यकुब्जाधिपस्य राज्ञो गोविन्दचन्द्रस्य पुत्रो विजय-चन्द्रो नाम। यः किल योग्यपुत्राय जयन्तचन्द्राय राज्यं विसृज्य योगेन परलोकं गतः। असौ हि तेजसा वैजयन्त इव जयन्तचन्द्रः स्वभुजविक्रमेण सप्तयोजनशतविस्तृतां गां विजित्य वाराणसी-

* परिषदो मासिकाधिवेशने पठितोऽयं प्रबन्धः।

मलञ्चकार। अस्य च महिमशालिनो लब्धकीर्त्तेः संसदि भूयांसो विद्वांस आसन्। तत्रैको मुख्यतमो हीरनामा विप्रः। अयञ्च कविराजकुलावतंसहीरकभूतः श्रीहीरः पतिव्रतायां मामल्लदेव्यां कुलतिलकममुं श्रीहर्षमुत्पादयामास। उक्तं हि अनेनैव महात्मना स्वकीये नैषधीयचरिते -"श्रीहर्षं कविराजराजिमुकुटालङ्कारहीरः सुतं, श्रीहीरः सुषुवे जितेन्द्रियचयं मामल्लदेवी च यम्।" इत्यादि।

अयं किल बाल्य एव तीक्ष्णबुद्धिशाली आसीत्, कैशोरे च विवेकी। अस्मिन्नेव काले श्रीहीरो राजसभायां राजकीयेनैकेन पूर्व्वपक्षकारिणा विदुषा राजमल्लं पराजितः सन् जीवन्मृतवत् कालमनैषीत्। अन्तिमे काले इममेव भविष्यत्प्राज्ञचक्रवर्त्तिनं श्रीहर्षमाहूयाह—"तात, अमुकेन विदुषाहं विग्रह्य पराजितः। अपूर्णा च मे सा विजिगीषा। यदि मत्पुत्रोऽसि तर्हि भूपमल्लं तं जित्वा विजिगीषा मे त्वया पूरणीयेति।" श्रुत्वा पितुः गिरं श्रीहर्षेणापि बाढ़मिति प्रतिज्ञातम्। श्रीहीरोऽपि सुखं स्वर्ययौ।

अथ जिष्णुरिव दृढ़प्रतिज्ञोऽसौ महात्मा. पित्रादेशपालनतत्परो योग्ये स्वात्मीये भरणं नियोज्य प्रवासी विविधाचार्य्यपार्श्वादचिरेणैव कालेन सुगृहीतसर्व्वविद्यः प्राप्य च प्रसन्नगुरुदत्तं चिन्तामणिमन्त्रं वर्षसममाराधयामास। उक्तं हि नैषधीयचरिते—"तच्चिन्तामणिमन्त्रचिन्तनफले तस्य प्रबन्धे महाकाव्य" इत्यादि। तेन च प्रत्यक्षायास्त्रिपुरायाः प्रसादमोघादेशत्वाद्दिवरो राजन्यपरिषत्सु निचयप्रतिहताग्रः सीमातिगप्रतिभाबलेन कूटोक्तिसम्पन्नो न कापुरुषतिपक्षे जात इति खिन्नमनाः पुनः प्रत्यक्षीकृत्य वागदेवीं प्राह —"अम्ब! प्रज्ञातिशय्यमपि मे दोषाय जातम्। तस्मात् जनसाधारणोपकृत्यै सृज।" तया चोक्तम् "तदर्धरात्रे सलिलसिक्तशिरा दधि पीत्वा स्वपिहि, तेन च कफांशसंयोगाज्जड़तामाप्स्यसि।" श्रीहर्षोऽपि यथादिष्टमारब्धवान्। क्रमेणासौ कृतकृत्यो जातः। अथानेन महात्मना विविधाः ग्रन्था

विरचिताः। तेषु बहव एव अप्रचलिताः। एतत्कृतनैषधीयचरिते महाकाव्ये स्थैर्यविचारणप्रकरणविजयप्रशस्तिखण्डनखण्डखाद्यगौडोर्व्वीशकुलप्रशस्त्यर्णववर्णनच्छिन्दप्रशस्तिशिवशक्तिसिद्धिसाहसाङ्कचरितानामुल्लेखाः सन्ति। अन्येषान्तु नामापि न ज्ञायते।

इत्थं कृतकृत्योऽसौ वाराणसीं गत्वा राजानं जयन्तचन्द्रं दूरत एव विज्ञापयामास। कृतविद्यः सन् प्रत्यावृत्तोऽस्मीति। श्रुत्वैवासौ गुणवत्सलो राजा श्रीहर्षमानयितुमादिदेश। ततः श्रीहर्षमुपगम्य नमस्कृतवान्। सोऽपि तान् यथायथमभिवाद्य भूपालमेवं बभाण—

"गोविन्दनन्दनतया च वपुःश्रिया च
मास्मिन् नृपे कुरुत कामधियं तरुण्यः।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्रीजनः पुनरनेन विधीयते स्त्री॥" इति

प्राह च पश्चात् स्वोदन्तमानुपूर्व्विकम्। ततस्तमेव पितृवैरिणं समवलोक्य साहङ्कारमाह—भोः—

"साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले
तर्के वा मयि संविधातरि समं लीलायते भारती।
शय्या वास्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरावृता
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम्॥" इति

श्रुत्वैतत् वादिनोक्तम् महात्मन्! सूरिश्रेष्ठ! वाणीवरपुत्र! अद्वितीयोऽसि जगति। भवता प्रतिद्वन्द्विता का। किंवा बहुब्रूमहे—

"हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्धता-
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम्।
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः
संहर्षो महिषैश्च यस्य मुमुचे साहङ्कृते हुङ्कृते॥"

इत्येवं स्वयंनते तेनं न विधेयमिति मन्यमानोऽसौ क्षोभं तत्याज

किल। ततः सन्तुष्टेन राज्ञा एवमेव वक्तुमुचितमत्रभवति कवीन्द्रे प्रतिवादिनामित्युक्त्वा अन्योऽन्यमालिङ्गनं कारयामास। ददिरे चास्मै लक्षसंख्यकानि सुवर्णानि। कृतश्चायं सभासन्मुख्यतमः।

अथैकदा स्वस्थममुं कवीन्द्रं राजा प्राह—"कवीश! किञ्चित् प्रबन्धरत्नं कुरु" इत्युक्ते तानेन श्रीहर्षकविनेदं नैषधीयचरितमुपादेयं महाकाव्यं निबध्य भूपालाय प्रदर्शितम्। दृष्ट्वेदमदृष्टपूर्व्वं राज्ञा बहु प्रशस्योक्तं—"कवीश! काश्मीरान् गत्वा तत्रत्यकोविदसमक्षं श्रीपीठे प्रत्यक्षस्थिताया वाण्या हस्ते समर्प्य बहुलप्रचारायास्य साधुत्वं विज्ञापनीयम्। सा खलु असत्यं प्रबन्धं दूरं परित्यजति, सत्यन्तु शिरःसञ्चालनसम्मत्या साध्विति विज्ञापयति।" एवं प्राप्तराजदत्तप्रशाणोपयोगिवस्तुजातः सन् काश्मीरान् गत्वा यथायथं राजोक्तं निःसंशयञ्चकार। भारत्या तु दूरमिदं निक्षिप्तम्। तद्दृष्ट्वा श्रीहर्षेणापि—"किं वाग्देवि विकलासि! यस्मात्कृतिमकृतिकृतामिवावमन्यसे।" भारती प्राह—"भोः परमधर्म्मभापक! न स्मरसि यत् त्वयैकादशे सर्गे चतुःषष्ठितमे श्लोके 'देवीपवित्रितचतुर्भुजवामभागा, इत्यादुक्त्वा विष्णुलीलाख्यानेन लोकप्रसिद्धं मे कन्यात्वं लुप्तम्! अतो मयेदं प्रक्षिप्तमिति" तथाहि—

"यावको वञ्चको व्याधिः पद्वत्वं मर्म्मभापकः।
योगिनामप्यमी पञ्च प्रायेणोद्वेगकारकाः॥" इति

श्रीहर्षस्तु इत्यमाकर्ण्य प्राह—अयि भोः कथं त्वं एकस्मिन्नवतारे विष्णुं वृतवती; कथं वा पुराणेष्वपि विष्णुपत्नीति कीर्त्त्यसे? तत् सत्येऽप्यस्मिन् विषये क्रुद्धा सती किमधुना—निष्कलङ्कास्मीति मन्यसे।" इत्युक्त्वा स्वयमेव उद्धृतोऽयं ग्रन्थः तत्रत्यैः सर्व्वैः सम्मानितश्च। ततोऽसौ तान् पण्डितान् व्यजिज्ञपत्—'ग्रन्थमिमं राज्ञे माधवदेवाय दर्शयत ग्रन्थोऽयं विशुद्ध इति प्रशस्तिलिपिश्च जयन्तचन्द्राय

प्रेषयत इति। तैस्तु पण्डितमानिभिः क्रूरप्रकृतिभिरखिलमुदासीनैः संवृत्तम्।

एवमनन्यपरोऽयं गुणाकरः भवनरापेक्षी तत्रैव सुचिरमुवास। एवमात्मभरणार्थं विगतपाथेयो विक्रीतसामग्रीकश्च सन् एकस्मिन् कूपासन्नदेवायतने रहसि बहु जपन् एकदा कयोश्चिद् स्त्रीगोलोकमार्थवादानुवादं शुश्राव, ददर्श च अचिरेणैव ते घातप्रतिघातैः स्फुटितमस्तके। ततश्च गते ते राजद्वारम्। राज्ञा तु तदनुयोगं श्रुत्वा कमपि प्रत्यक्षदर्शिनमानयतमित्युक्तम्। ताभ्यां चोक्तम्—"देव, तदैको जपनिरतो द्विजस्तत्र दृष्टः।" अथ राजकीयैरानीतः श्रीहर्षः पृष्टः सन् गीर्व्वाणगिरा प्राह—"राजन्। वैदेशिकोऽस्मीति अनयोर्भाषा मे नाभ्यस्ता, किन्तु चरितानुरूपमेव कथयामि, श्रूयतामित्युक्त्वा यथायथमुक्तवान्। निरतिशयविस्मितेन तु राज्ञा व्यवहारं समाप्य वत्स्व प्राज्ञशिरोमणे एहि अलङ्क्रियतामिदमासनमिति सादरमुपवेशितोऽयं स्वनामधन्यः श्रीहर्षं आमूलतो वृत्तान्तं निवेदयामास। एवं पण्डितदौर्जन्यं ज्ञात्वासौ गुणमुग्धो राजा तानाहूय धिङ्मूढाः ईदृशे रत्ने न खिद्यथ। क्रूरा यूयम्। एवं बहु तिरस्कृत्याह—नदेनमनुनीय प्रतिष्ठां नीत्वा सत्कुरुत इत्यादिष्टास्ते तथैव चक्रुः। पश्चात् राजापि सत्कृतेरनं "काव्यमिदं चतुर्दशतयीं विद्यां विद्वद्भिः पण्डितैः प्रदर्शितं श्रेष्ठतमस्त्विति" प्रशस्तिलिपिञ्च दत्त्वा विससर्ज्ज। उक्तस्थानेनैव नैषधीयचरितस्य दशसर्गसमाप्तौ "काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महाकाव्ये" इत्यादि।

अथ कृतकृत्योऽयं श्रीहर्षो वाराणसीं प्रत्यावृत्तो जयन्तचन्द्राय सर्व्वं न्यवेदयत्। राजा परां प्रीतिमुपागतः। ततो विख्यातमिदं नैषधीयचरितम् लोके। अहो अस्य महिमा येन राजेश्वरोऽप्यस्य गुणमुग्धः। अहो अस्य प्रज्ञावत्ता यया च चतुर्दशतयीं विद्यां वशीकारिकोऽपि वशीकृताः। नास्माकं तादृग्वाग्विभवो येनासौ सम्यक्

स्तूयते। किंवा बहुना अयं हि महात्मा भारस्वामिवत् नरभारतीति कीर्त्तितः। अस्ति चात्रैषा किंवदन्ती।

आसीत् किल अस्य राज्ञो जयन्तचन्द्रस्य सुहवदेवी नाम्नी काचिन्मनोरमा पद्मिनी भोगिनी, यस्याः किल विधौतायामपि शाटिकायां पद्मगन्धान्धा मधुपनिकरा निलीयन्ते स्म। अनया च श्रीहर्षस्य नरभारतीतिख्यातिमसहमानया एकदा श्रीहर्षः ससम्मानमाकारितः पृष्टश्च "कस्त्वं भो"? एतेन चोक्तम् "कलासर्व्वज्ञोऽहमिति' गर्व्वितयानया च प्रत्युक्तम् तर्हि उपानहौ परिधापयेति।" तच्छ्रुत्वासौ चिन्तयामास, यदि नाहमेतज्जानामीति कथ्यते, तर्हि 'असर्व्वज्ञोऽस्मीति मन्यते" इत्यनन्योपायस्तदैव स्वीकृत्य तद्वस्त्रे चर्म्मकारविधिना निर्म्माय उपानहौ यथारीति परिधापयामास। अभ्युक्षणं विनिक्षिपत इति च व्याहरन् राजानं तां कुवृत्तिं ज्ञापयित्वा खिन्नो गङ्गातीरे सन्न्यासमग्रहीत्। अहो अस्याः प्रगल्भता, आश्चर्य्यरूपा चास्य निर्गतिः। यतः ईदृशस्य विद्याविशारदस्य स्त्रीजनकृता एतादृशी परिणतिः। अतः सत्यमुक्तं केनापि—

"स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवा न जानन्ति कुतो मनुष्याः" इति। इत्यनया किंवदन्त्या एवमस्य परिणतिर्निरूपिता मया; अतःपरं न प्रापि काचिदस्य प्रवृत्तिः।

(क्रमशः।)

## कौतुककथाः।

(१)

सत्स्वपि कविसहस्रेषु भवभूतिं शिरसि कृत्वा नर्त्तितुमुत्सहे, यतोऽयमेव कविकुलतिलकः प्रचलितकविजनप्रियसरणिमुल्लङ्घ्य

बहुल स्वतन्त्रत्वं प्रदर्शयामास। भवभूतिः सारवद्वाक्यराजिषु "वाग-वशेरिवानुवर्त्तते" इति सारवत्त्वमतो देदीप्यते। तथाच सर्व्व एव जनाः मातः सरस्वति। मातः सरस्वती"ति रवेण तारं सुतारं चोत्क्रम्य गगनमण्डलं विदारयन्ति। परं न पश्यामो वयं भारत्याः कञ्चित्—पुत्रं वरपुत्रं वा। पुराणेषु तस्याः सन्ततीनां नामोल्लेखो न दृश्यते। अपिच श्रूयते "कविशार्दूलः श्रीहर्षो नैषधीयचरितं विरचय्य भारती-हस्ते दत्त्वा "कथं कुमारीमपि मां विष्णुपत्नीत्वेन वर्णितवान् भवानि"ति गर्हणां लेभे। कुमार्य्याः कथं—मातृत्वेऽधिकारः ? "कवितारसमाधुर्य्यं कविर्व्वेत्ति न तत्कविः। भवानीभ्रुकुटीभङ्गीं भवो वेत्ति न भूधरः॥" इत्यादि प्रौढकविवाक्यकदम्बकं तथा "अपारे काव्यसंसारे कविरेव प्रजापतिः। यथा वै रोचते विश्वं तथेदं परिवर्त्तते॥" इत्यादिव्यासवाक्यं सर्व्वथा कवीनां वाङ्मय्याः भारत्याः जनकत्वं रसज्ञपाठककवेश्च तस्याः पतित्वमङ्गीकरोति। भवतु विरचयितास्याः जनकः रसज्ञपाठकश्च पतिरेव। ततः समा-लोचकाः ? अलमालप्य तेषां पामराणां कथाः। ते खलु पाषण्डाः कवेर्म्मनोहारिणीं दुहितरं पाठककवेश्च रूपवतीं वराङ्गनां भार्य्यां वाङ्मयीं मुक्तिमार्गे वहिष्कृत्य तस्या नग्नमूर्त्तिमुद्घाट्य अस्याः शोभनमिदमङ्गमशोभनमिदमिति ब्रुवाणाः तस्याः सौन्दर्य्यविशेषञ्च कराङ्गुलिसङ्केतद्वारेण निर्द्दिशन्तः सरस्वतीं वाराङ्गनामिव व्यवहरन्ति।

( २ )

खेदपत्रकम्।

रमानाथः। अपि गौरीनाथ ! भद्रं ते सर्व्वत्र ! कथं संसार-यात्रा निर्व्वाह्यते ?

गौरीनाथः। परमकठोरा दिवसाः। अतिमहता कष्टेनैव संसारयात्रा निर्व्वाह्यते।

रमानाथः। कथं नामातिमहता कष्टेन? आदौ खलु प्रथमे वयसि पञ्चमुद्रामात्रं वर्त्तनन्ते आसीत्। अधुना पञ्चाशन्मुद्राः लभसे, आदौ सुनिर्व्वाहितासीत्ते संसारयात्रा, कथमिदानीमन्यथा वर्त्तते?

गौरीनाथः। भ्रातः केवलं पञ्चाशन्मुद्राः पश्यसि, नान्यत् किञ्चिदपि ते दृष्टिं समाकर्षति। पश्य यदादौ पञ्चमुद्रामात्रं मे वर्त्तनमासीत्, तदा सार्षपस्नेहेनैव प्रदीपप्रज्वलनं भक्षणमभ्यङ्गश्च सर्व्वमेव निष्पाद्यन्ते स्म। अपिच शरूसि स्वेशकव्येऽनुभूते तथाहूनं भेषजकार्य्यमपि निष्पादयति स्म। अधुना तु, भक्षणार्थं सार्षपस्नेहः, गृहिण्या अभ्यङ्गार्थं नारिकेलस्नेहः, स्नुषाया अभ्यङ्गार्थे गन्धतैलं, प्रदीपप्रज्वलनार्थञ्च केरोसिनाख्याकरजस्नेहः, वृद्धस्य च शिरःपीडा-ग्रस्तस्य मे वैद्यशास्त्रीयमहानारायणतैलं एतत् सर्व्वमेव प्रयोजनमनु-बध्नाति। आदिमसार्षपस्नेहस्थाने अधुनातनस्नेहपञ्चकम्! मूल्य-मपि सर्व्वस्यैव वस्तुनः प्राक्कालाच्चतुर्गुणम्। तत्कथं—पञ्चाशन्मु-द्रामात्रवर्त्तनेनापि अधुना पूर्व्ववत् संसारयात्रा सुखं निर्व्वाह्यते?

( ३ )

कविरत्नः, बि, ए, ( B. A ) पाठी छात्रश्च।

कविरत्नः। भवतु धीरेन्द्र, अपि संस्कृतकाव्यादि पठ्यते युष्माभिः!

धीरेन्द्रः। बाढं, बहून्येव काव्यानि यथारीत्यध्याप्यन्तेऽस्माकं विद्यालये, तद्यथा—रघुवंशम्, कुमारसम्भवम्, शाकुन्तलम्, रत्नावली, भारविः।

कविरत्नः। पर्य्याप्तं नाम कृतम्, भवतु अभिज्ञानशकुन्तलस्य प्रथमाङ्के शकुन्तलायाः गतिप्रकाराः कथं रोचन्ते युष्मभ्यम्?

धीरेन्द्रः। Graceful movements ( मनोहरगतिभङ्गाः ) beautiful ( सुन्दरं ) charming ( मोहनीयं ) संस्कृतप्रतिशब्दः शिक्षाये लभ्यते एव।

कविरत्नः। यातु—प्रथमाङ्के "स्रस्तांसावतिमात्रलोहिततलौ" इत्यादिश्लोकः कथम् रोचते युष्मभ्यम्?

धीरेन्द्रः। अयं Indecent, obscene—अश्लीलतयास्य न पठितोऽस्माभिः। सुतरामेव Indelicate (अश्लीलः) अयं श्लोकः।

कविरत्नः। कथम् ?

धीरेन्द्रः। तत्र "स्तनवेपथु"रिति शब्दद्वयो घटते।

कविरत्नः। तव मनसि वर्त्तते च।

धीरेन्द्रः। कथं नाम न वर्त्तते च।

कविरत्नः। तत् किं पठ्यते युष्माभिः ?

धीरेन्द्रः। Criticism ( समालोचनं ) criticism of the characters ( चरित्रसमालोचनं ) poets, life, and the date of composition and many things besides ( कविजीवनं, ग्रन्थप्रणयनकालः अन्ये च विषयाः ) ग्रन्थप्रणयनसमयोऽन्ये च बहवो विषयाः।

कविरत्नः। सर्व्वं ग्रन्थमपठित्वैव।

धीरेन्द्रः। ग्रन्थस्य व्याख्यातारः सर्व्वं ग्रन्थं पठन्ति समालोचनानि च लिखन्ति, वयन्तदेव गलाधःकृतं रोमन्थयामः।

कविरत्नः। अधुना कुत्र गम्यते ?

धीरेन्द्रः। वैद्यकाटङ्के। ज्येष्ठो मे पुत्रः सर्व्वदैवोदरपीड़या पीड्यते, मध्यमस्याद्य वृक्षात् पतितस्य हस्तो भग्नो जातः। कनिष्ठश्च ज्वराक्रान्तः। गृहिण्याः गर्भः सञ्जातः अयं नवमो मासः—तदुपरि hemorrage ( रजःस्रावः ) उपस्थितः।

कविरत्नः। गण्डस्योपरि विस्फोटकः संवृत्तः। वयस्ते पुत्राः, गृहिण्याः पुनर्गर्भः सञ्जातः—तथापि विद्यालये युष्माकं स्तनवेपथु शब्दाद्वेपथुरुत्पद्यते।

धीरेन्द्रः। माभूत् तिरस्कारः, नायमस्माकं दोषः। विश्वविद्यालयप्रभूणामेवायं विधिर्यत् शिक्षतो वयं न सर्व्वमस्माभिः पठितव्यम्। वयन्तु किं नाम स्तनवेपथुभीरवः—

कविरत्नः। जानामि।

---

# * न्यायशास्त्रीयजातिबाधकविचारः ।

## मङ्गलाचरणम् ।

( लेखकः—श्रीकालीपदतर्काचार्य्यः । )

तर्कार्कसम्पर्कविभासितान्तरं, सदा भवानीपतिभावनापरम् ।
तथापि लोके हरिदाससंज्ञितं, समाश्रये तातमलौकिकश्रियम् ॥
शिष्येषु पुत्रेष्विव यस्य भावना, तर्केषु सम्यक् प्रतिभा जनातिगा ।
जयत्यसौ कोऽपि स मे गुरुः स्वयम् शशाङ्कमौलेरिव मूर्त्तिरुत्तमा ॥
पूर्व्वालोचितवस्तुतत्त्वविषया भूयो ह्यथालोचना,
पूर्व्वोपेक्षितवस्तुतत्त्वविषया तद्वत् फलैर्वञ्चिता ।
पूर्व्वैः सूक्ष्ममविस्तृतं यदुचितं तद्विस्तृतं वक्ष्यते,
कालेनाद्य मतिप्रभा प्रशिथिला जाता जनानां यतः ॥
जातिबाधकविधां विशेषतो नैव पूर्व्वविबुधा व्यजिज्ञपन् ।
तेन तां कलयितुं सुविस्तरादेष कश्चन गतः समुद्यमम् ॥
अल्पमात्रविषयं विजानतो धृष्टतैव गुरुतत्त्वशोधनम् ।
तामयं यदधुना समाश्रितस्तत्र तातकरुणैव सम्बलम् ॥
दोषराशिमपहाय सूरयो लेशमात्रमपि सङ्गतं गुणम् ।
मानसे कुरुत हंसवृत्तयः प्रार्थनीयमिह किं ममापरम् ॥

अथ द्रव्यमित्याद्यनुगतप्रतीत्या संयोगसमवायिकारणतावच्छेदकत्वादिना च सिद्धा द्रव्यत्वादय इव गगनमिति प्रतीत्या शब्दसमवायिकारणतावच्छेदकत्वादिना च सिद्धो गगनत्वादिरपि जातिर्न वा इत्याशङ्कायां प्राचीनानुमता जातिबाधका निरूप्यन्ते। यथोक्तं किरणावल्यामुदयनाचार्य्यैः—"व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः। रूपहानिरसम्बन्धो जातिबाधकसंग्रहः" इति। निरुक्तव्यक्त्यभेदादीनां षण्णां प्रत्येकमेव जातिबाधकतया गगनत्वादिकं न जातिरिति व्यवतिष्ठते।

तत्रादौ व्यक्तेरभेदो विविच्यते—अथ कोऽयं व्यक्तेरभेदो नाम? व्यक्तेरिति षष्ठ्या आधेयत्वार्थकतया व्यक्तिनिष्ठो भेदा-

* अयं परिषदधिवेशने पठितः ।

भावो वा व्यक्तिनिष्ठं तादात्म्यं वा ? नाद्यः सर्व्वस्या एव व्यक्तेः किञ्चित् किञ्चित् भेदाश्रयतया भेदत्वावच्छिन्नाधिकरणतायाः केवलान्वयितया विरोधिमत्त्वेन कुत्रापि भेदाभावस्य प्रसक्त्यसम्भवेन भेदाभावस्यैवासिद्धेः, तेन गगनत्वादेर्जातित्वबाधनायाः सुतरामनुपपत्त्या साध्यसिद्धिव्याघातात्। नापि द्वितीयः, व्यक्तिशब्दस्य "शब्दस्य जाती शक्तिर्न तु व्यक्तौ" इत्यादिनानास्थानपर्य्यालोचनया आश्रयरूपार्थलाभेन तस्य कल्पस्य आश्रयतादात्म्यपर्य्यवसानेन आश्रयतादात्म्यस्य जातिबाधकतायां कल्पितायां गगनप्रभृतिषु सर्व्वत्रैव व्यभिचारः। जात्याश्रयेषु सर्व्वेष्वेव आश्रयतादात्म्यस्य सुतरां स्वीकर्त्तव्यतया जातिमत्त्वाभावरूपसाध्यस्य विरहेण तदनुसारात्। यदि च जातिबाधकतापदस्य धर्म्मपरतया निर्द्देशात् जातित्वबाधकतेति अर्थः परिकल्प्यते आश्रयशरीरे स्वस्वप्रवेशेन च स्वाश्रयतादात्म्यस्य स्वस्मिन् जातित्वबाधकता समभ्युपेयते, तथापि स्वरूपासिद्धिः, स्वाश्रयतादात्म्यस्य स्वरूपेण स्वाश्रयमात्रे सत्त्वेन स्वस्मिन् अभावात् तत्र जातित्वबाधस्तेन सुतरामशक्य एव समापतेत्। स्वाश्रयवृत्तित्वसंसर्गेण बाधकताया अभ्युपगमे तु स्वपदेन सर्व्वेषां द्रव्यत्वादीनां परिग्रहीतुं शक्यतया स्वाश्रयतादात्म्यस्य स्वाश्रयवृत्तित्वसंसर्गेण जातिभूते द्रव्यत्वादावपि बाधकसत्त्वाद्व्यभिचारस्य जागरूकत्वात्। न च स्वाश्रयतादात्म्यघटकीभूतस्य स्वाश्रयत्वस्य स्वाश्रयनिरूपितवृत्तित्वस्य वा स्वरूपसम्बन्धावच्छिन्नस्य निवेशे न द्रव्यत्वादिकमादाय व्यभिचारप्रसक्तिरिति वाच्यम्। गगनत्वादेर्व्यवृत्तिपदार्थस्य जातित्वसंशये वर्त्तमाने स्वरूपेण वृत्तितायां विवादात्। किञ्च नित्यज्ञानादेरपि जातित्वस्य नित्यत्वबाधकेन बाधनीयतया अभिमतत्वेन तत्र स्वरूपासिद्धिदोषस्य अपरिहार्यत्वात्। अतः स्वाश्रयवृत्तिभेदाप्रतियोगिस्वाश्रयकत्वमेवं वाच्यः, अत्र स्वाश्रयत्वं स्वरूपसमवायान्यतरसम्बन्धेन, अतो गगनत्वस्यापि कालिकेन स्वाश्रयकालवृत्तिभेदप्रतियोगिस्वाश्रयक-

तया न स्वरूपासिद्धिः। स्वरूपेण मतान्तरे समवायेन वा आरोपितेन गगनत्वस्य गगनमात्र एव वृत्त्या तद्वृत्तिभेदस्य प्रतियोगितायाः स्वाश्रये गगने अवर्त्तमानत्वात्। स्वाश्रयवृत्तिभेदाप्रतियोगित्वञ्च तादृशप्रतियोगित्वसामान्याभावो ग्राह्यः, तेन स्वपदेन द्रव्यत्वमादाय स्वाश्रयतद्घटवृत्तिभेदाप्रतियोगित्वस्य तद्घटे स्वाश्रये विद्यमानतया द्रव्यत्वादावपि तादृशबाधकसम्बलनात् न व्यभिचारः। नापि स्वाश्रयवृत्तिभेदविशेषमादाय प्रतियोगित्वविशेषञ्चादाय तथैव व्यभिचारसम्भावना। वस्तुतस्तु निरुक्तबाधकस्य स्वत्वघटिततया अननुगमात् भेदविशिष्टान्यत्वं जातित्वे बाधकं वाच्यम्, वैशिष्ट्यञ्च स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वे तदुभयसम्बन्धेन। इत्थञ्च स्वभेदस्य अभिन्नसत्त्वेन एकमात्रगगनमात्रवृत्तिगगनत्वस्य तादृशोभयसम्बन्धेन भेदविशिष्टान्यतावत्त्वेन जातित्वबाधो घटते, द्रव्यत्वादीनाञ्च एकमात्रवृत्तित्वविरहेण स्वाश्रयप्रतियोगिकतत्तद्व्यक्तिभेदमादाय भेदविशिष्टतया न व्यभिचारशङ्कापीति। गगनत्वस्य गगनभेदप्रतियोगिगगनवृत्तितया स्वरूपासिद्धिमाशङ्क्य स्वानुयोगिवृत्तित्वदलं, तस्यैव पुनर्घटादिभेदानुयोगिगगनवृत्तित्वेन स्वरूपासिद्धितादवस्थ्यमाशङ्क्य प्रथमदलम्। अथ एकदेशमात्रवृत्तिधर्म्मावच्छिन्नानुयोगिताकस्य व्यासज्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकस्य अभावस्य "घटो न घटपटोभयं एको न द्वौ" इत्यादि प्रामाणिकप्रतीत्यनुरोधेन स्वीकर्त्तव्यतया गगने घटगगनोभयं न इत्याद्याकारकाणां गगनप्रतियोगिकभेदानां सत्त्वेन निरुक्तोभयसम्बन्धेन गगनत्वस्य भेदविशिष्टतया स्वरूपासिद्धेः परिहर्त्तुमशक्यत्वात् कया दिशा समाधिः प्रवर्त्तनीयः स्यादिति चेदत्र केचित्-भेदविशिष्टान्यत्वप्रतियोगितावच्छेदककुक्षिविशिष्टे भेदे व्यासज्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकान्यत्वं वाच्यं तेन घटगगनोभयं न इत्यादिभेदानां व्यासज्यवृत्तिधर्म्मावच्छिन्नप्रतियोगिताकतया तदन्यत्वविरहेण न स्वरूपासिद्धिः। भेदान्तरमादाय

यथा न दोषावतारस्तथोक्तमधस्तात्। परे तु भेदे पुनस्तादृशान्यत्वः प्रवेशे गौरवात् भेदवैशिष्ट्यघटकीभूतसम्बन्धान्तर्गतस्वप्रतियोगितायां व्यासज्यवृत्तिधर्म्मानवच्छिन्नत्वं निवेशनीयम्, तेन स्वपदेन घटगगनोभयं न इत्यादिभेदमादाय न गगनत्वादेर्भेदविशिष्टता तादृशभेदीयप्रतियोगितायां व्यासज्यवृत्तिधर्म्मोभयत्वावच्छिन्नत्वात् इति वदन्ति। वस्तुतस्तु एकत्वानवच्छिन्नपर्य्याप्तिकान्यत्वादिरूपव्यासज्यवृत्तित्वमपि गौरवग्रस्तमिति तत्परित्यागेन भेदे प्रतियोगिताविशिष्टान्यत्वं निवेश्यते, तथा च प्रतियोगिताविशिष्टान्यभेदविशिष्टान्यत्वं जातित्वबाधकं वक्तव्यम्। प्रतियोगितावैशिष्ट्यञ्च स्वनिरूपकत्वस्वसामानाधिकरण्योभयसम्बन्धेन, प्रकृते घटगगनोभयत्वावच्छिन्नप्रतियोगिताकभेदस्य गगनवृत्तेस्तादृशप्रतियोगितानिरूपकत्वात् तादृशप्रतियोगिताधिकरणगगनवृत्तित्वाच्च तादृशप्रतियोगिताविशिष्टतया न स्वरूपासिद्धिः। भेदमात्रस्यैव यत्किञ्चित्प्रतियोगितासामानाधिकरण्यात् प्रतियोगिताविशिष्टान्यत्वं, भेदे दुर्घटमिति सम्बन्धघटकस्वनिरूपकत्वदलम्, सर्व्वस्यैव च भेदस्य किञ्चित् प्रतियोगितानिरूपकताया आवश्यकत्वेन तथैवाप्रसिद्धिनिराकरणाय सम्बन्धघटकस्वसामानाधिकरण्यदलम् इति ध्येयम्। तदत्र परार्थानुमानप्रयोजकन्यायप्रयोगो यथा—गगनपदप्रवृत्तिनिमित्तादिकं न जातिः प्रतियोगिताविशिष्टान्यभेदविशिष्टान्यत्वात्, यत् यत् प्रतियोगिताविशिष्टान्यभेदविशिष्टान्यत्ववत् तत्तत्जातित्वाभाववत् यथा गगनत्वावच्छिन्नप्रतियोगित्वादि तथा चायं तस्मात्तथा इति। अनन्तरञ्च न्यायवाक्यार्थज्ञानात् समुत्पन्नेन जातित्वाभावव्याप्यप्रतियोगिताविशिष्टान्यतावत्त्वमानसपरामर्शेन गगनपदप्रवृत्तिनिमित्तं न जातिरित्यनुमितिर्जायते। एवं दिकत्वकालत्वादीनामपि एकमात्रव्यक्तिवृत्तितया तादृशबाधकवत्त्वेन जातित्वाभावः साधनीयः, आत्मनान्तु आनन्त्येन आत्मत्वस्य एकमात्रव्यक्तिवृत्तिताविरहेण तादृशबाधकशून्यतया न जातित्वबाध इत्यादि बहुतरमूहनीयम्।

इति व्यक्त्यभेदजातिबाधकताप्रकरणम्। ( सावशेषः )

# शिशुवैचित्र्यम् ।

मल्लीवल्लीमतल्लीप्रचिततरुगणाकीर्णपल्लीविभागे
बालः कश्चिद्विपश्चित्सरणिविरचितो देवनाथश्चकाशे ।
वृक्षे वृक्षे विचिन्वन् विहगकुलमसौ वासरं सर्व्वमेव,
क्रीडां व्रीडाविहीनो व्यरचयदभयं दैन्यशून्यान्तरात्मा ।

एवं कालेन बालो वनमनु विचरन् पादपस्कन्धदेशे
कीरं कञ्चित् प्रपन्नो मधुमयवचनं पर्णवर्णं कदाचित् ।
आनीय स्वीयगेहं तदनु सुखकरे पिञ्जरे न्यस्य यत्नात्
भोज्यं पानञ्च तस्मै व्यतरदनुदिनं तद्गतेनात्मनासौ ।

शय्योत्थायं प्रभाते शुकविषयमसौ प्रत्यहं चिन्तयित्वा
हस्तेन स्वेन शस्यं वितरति सलिलञ्चापि तत्पोषणार्थम् ।
तत्प्रीतिं पूर्णमात्रां घटयितुमनिशं चेष्टमानः स बालः,
पूर्व्वाभ्यासात् खगानां चितिरुहवलये संग्रहं न प्रपेदे ॥

गच्छंस्तिष्ठन् शयानो विविधविधिविधौ कल्पमानस्तदानीं
नान्यत् किञ्चित् प्रपश्ये हृदि विहगमयं भावयामास भूयः ।
यावद्यावद्विहङ्गो वदति मृदुपदं तावदेवास्य हर्ष
यावत् सूक्तिस्तदीया प्रचरति हृदये तस्य तावत्तमिस्रम ।

तत्कायात् कीटकूटव्रतिमभिभवितुं पिष्टकाविद्रुनीरैः
सिक्त्वा तस्याङ्गमङ्गं प्रतिदिनमनघः पक्षिणां दक्षिणोऽसौ ।
वाचाम् नानाविधानामनुकरणकृते शिक्षयामास वाढं
गाढप्रेमा तदीयं वचनमतितरां सारभूतं विजज्ञे ॥

पक्षी शिक्षामवाप्तस्तदनु ननु तथा यावताभ्यागतानां
तस्मिन् मानुष्यमोहो भवति समुदितः शृण्वतां वाचमेवम् ।
आगच्छागच्छ कामं श्रय निलयमिमं विष्टरेऽस्मिन् निषद्य
पाद्यञ्चेदं प्रपद्य व्यपनय कलुषं स्वागतं तेऽस्य कच्चित् ?

एवं सेवाप्रपुष्टो विहगमणिरयं सञ्चयोऽभूद्गुणानां
बालोऽसौ देवनाथः सकलमिह जहत् केवलं तत्र रेमे ।
तत्पित्रोस्तत्र कामं प्रियमथ च खगस्यास्य नानागुणत्वात्
काञ्चित् प्रीतिं प्रचक्रे क्व नु मधुरनयो नैव तोषं विधत्ते ।

काले दूरं व्यतीते कियति शुकमयेनान्तरेण प्रभाते,
शय्योत्थायं कदाचिद्व्यपगतकलुषो देवनाथस्त्वराशान्।
यावद्भोज्यादि दातुं शुकमनु समया पिञ्जरं सन्नतस्थे
तावद्ध्वस्तं तदीयं हृदयमतिघनैरन्धकारैः समन्तात्।

अन्यस्मिन् वासरादाविव नहि विहगो वाक्प्रपञ्चं विधत्ते,
नो भोज्यं भिक्षते वा विलिखति न तथा पिञ्जरं भोज्यकाङ्क्षी
नो वा पीठे निषण्णो भवति विहरते नापि वा पिञ्जरान्तः
शीर्णग्रीवः स दीनो विषविकृततमः पिञ्जराधः पपात।

दृष्ट्वा वैक्लव्यमेवं प्रतिहतहृदयो देवनाथस्तदानीं
सोत्कण्ठं कण्ठनादं गगनतलगतं सम्प्रचक्रे शुचार्त्तः।
हा मातस्तात सर्व्वं विघटितमधुना रत्नभूतं मदीयं
ह्यस्मच्छेददुःखं सपदि परिसृतं सह्यतां नैव यत्ते॥

प्रातः प्रारभ्य सर्व्वं दिवसमतितरामाग्रहेणास्य सेवां
कुर्व्वाणः पूर्व्वभावैः सपदि विरहितो मत्तनोऽस्मि प्रशान्तः।
अस्मादूर्द्ध्वं नु को मे सहचरपदवीमाश्रितः प्रातिशायी
श्रावं श्रावं सुधास्यन्दवचनमनुगदं कस्य शान्तिं व्रजेयम्।

तस्मिन्नेवं शुचार्त्ते नयनजलभरान् मुञ्चति क्षौणिपृष्ठे,
प्राप्तस्तत्र प्रसन्नः शिशुरतिललितः सोदरस्तत्कनीयान्।
आर्य्ये प्राप्तोऽस्मि गाढं विलपसि किमथो मामिहाङ्के गृहाण
भूयासं ते सहायः सुचिरमनुगतो मुग्धवाचो ब्रुवाणः।

भोज्यं मे देहि नीरं वितर परिचर क्षुत्पिपासावसन्नं
आज्ञां भिक्षपकारं कुरु ननु करुणाकौमुदीधौतचेताः।
एह्येहि द्वारदेशं दिश पुनरभयं दीनसत्त्वेषु कामं
वामं वैक्लव्यकामं परिहर सदयं मामिहाङ्के दधीथाः॥

दृष्ट्वा बालं विलोलं सुरसमयवचस्तस्य कर्णेन पीत्वा,
कृत्वा तं क्रोडदेशे विहगविरहजां शोचनामुत्ससर्ज।
तस्मादूर्द्ध्वं सहायं तमयमुपगतो दीनदुःखप्रशान्त्यै
शान्तिं हित्वा प्रयत्नं व्यरचयदनिशं शोकराशिर्व्यनश्यत्॥

---

भर्तुर्निदेशात् जननिचयां तां वाराणसीं गन्तुमथाद्रिजाया ।
वाष्पप्रवाहावलिरुद्धकण्ठा प्रोवाच चिन्ताभरलोलनेत्रा ॥

( झपतालतुड़ीयरागेण गीयते । )

नयननिमीलनजनितं विरहम् ।
नैव पुरा तव सुमुखि सहेऽहम् ॥
अयि वत्से जीवामि कथं तव विरहे ।
मुखशशिस्रुतममृतं मातेति ।
का नु मम श्रवणचकोरी पिबति ॥
तव वदनाम्बुजमधुवलदङ्गः ।
जीवति किं मम लोचनभृङ्गः ॥
केरपराधैर्मामतिदीनाम् ।
परिहरसि जननि शरणविहीनाम् ॥
तव विरहानलविकलितपौराः ।
संप्रति मुक्तभवनपरिचाराः ॥
कलयति हंसकुलं विमकवनम् ।
न च शिखिकुलमपि नृत्यति विकलम् ॥
शिशुकुलमधुना मातुरुरोजम् ।
पिबति न मलिनितवदनसरोजम् ॥
कोऽपि न सहजविषयमाचरति ।
चित्रितमिव पुरमिदमाभाति ॥
श्रीजयनारायणकविभणितिः ।
बुधहृदि विहरतु मृदुपदविततिः ॥
वरमहो विरहोऽग्निरहर्निशम्
दहतु शैलसुते त्वदृते भृशम् ।
इदमसह्यमतीव च कोऽपि मां
न हि जगज्जननीजननीं वदेत् ॥

बहुजन्मार्ज्जितैः पुण्यपण्यैः क्रीतमिदं धनम्।
दुर्व्वारकर्मचौरेण हा हन्ताऽपहृतं क्षणात्॥
शैलाङ्गनामित्यनुशोचुचानां विवेकहीनां प्रशमोक्षय दीनाम्।
विष्णुर्न माता करुणार्द्रचेतः प्रसन्नयामास सुधान्तवादैः॥
( तेयोटतालकाफिरागेण गीयते। )
समयविभवादिविषयं नियतनश्वरम्॥
विद्धि जलफेनमिव भज सततमीश्वरम्॥
जननि विचिन्तय तत्त्वं विभावय भावमनित्यम्॥ ध्रुवम्॥
विभ्रमतिमोहमिदमेति मम मायया।
मां स्मरत इह तु हृदि शान्तिमति क्लिन्तया॥
यावदुदयति हृदि तत्त्वमयभास्करः।
तावदभिभवति जगदविद्यान्धकारः॥
अथ मयि भक्तिकरवालनखरधारया।
छिन्धि ममताविषयनिगडमतिहेलया॥
आत्मनि विवर्त्तय च चित्तमतिभासुरे।
मज्ज सततं परम-नित्यसुखसागरे॥
शिष्टगणमानससुतोषमशेषेण।
भणितमिदमावहतु जयनारायणेन॥
इत्थं मनः पर्व्वतराजपत्न्या निर्ज्जित्य मायामलमच्छभावम्।
शान्तोपदेशेन समापदस्याश्चन्द्रोदयेनेव नभस्तमिस्रम्॥
स्वान्ते सन्ततमस्तु वः समुदितं वालारुणश्रीयुतम्।
देव्या अभ्यपदं पदं तदमलं विभ्राजमानं परम्
यन्मुक्ताफलजालनिर्म्मलतरे वक्षःस्थले शूलिनः
शोणाब्जं समलञ्जयद्विकसितं क्षीरोदनीरोदरे॥
इति श्रीश्रीगङ्गरीसङ्कीर्ते चतुर्थः सर्गः॥

---

अत्रान्तरे निजकुलाचरणैकनिष्ठाः
प्रेमातिरेकपुलकाचितचारुगात्राः।

तां तत्र पौरवनिता अभितः समेताः
नानाविधं शुभसमाचरणं प्रचक्रुः ॥
( छोटचौतालपुरवीरागेण गीयते । )
शङ्खनिनदपरिपूरितगगना ।
मुहुरभिवर्त्तितनटशिखिनटना ॥
कापि युवतिः शिव शिव शिव इति गानपरा ॥ ध्रुवम् ॥
विकिरति कापि च मङ्गललाजान् ।
नवनवकुसुमसमाजान् ॥
कापि च धेनुगणानपसव्ये ।
न्यस्यति पूर्णकलसमपि सव्ये ॥
कापि च विप्रपदाम्बुजरजसा ।
विकिरति मस्तं तस्याः सहसा ॥
तामभिषिञ्चति कापि च सलिलैः ।
तीर्थभवैरतिशीतलविमलैः ॥
नीलनिचोलं तां वासयति ।
घनवलयिततडितं कलयति ॥
शशधरधवपूजननिर्माल्यं
तस्याः शिरसि दधाति च माल्यम् ॥
श्रीजयनारायणभणितानि
दधतु त्रिभुवनतोषमिमानि ॥

अतःपरं दुष्करमम्बुजाक्षा मयैव नेपथ्यविधानमस्याः ।
इतीव चित्ते विनिधाय राज्ञी यथेप्सितं सा विदधे ततस्तत् ॥

( मूलतानगौरीरागेण गीयते । )

जितनवतपने मृदुतरचरणे तलरुचिचयनिर्ज्जितम् ।
गतमिव शरणं यावकभरणं जनयति लघु राजितम् ॥
कुरुते हिमगिरिवनिता सुतां विविधभूषणभूषिताम् ॥ ध्रुवम् ॥

सुविमलसुघने विपुलजघने सा वसनमतिपीने ।
स्मररिपुमनसो विकिरति बहुशो दृढ़गुणमिव बन्धने ॥
विशदमुदारं वक्षसि हारं घटयति कनकानने ।
निन्दितहारं गङ्गासारं परमिव विबुधाचले ॥
रक्तकरतलं मृदुभुजयुगलं ततमरकतकङ्कणम् ।
अब्दवलयितं दिनकृतमुदितं रचयत इव नूतनम् ॥
मरकतनिर्म्मितकुण्डलमण्डितममलकपोलदेशम् ।
मधुकरचुम्बितमभिनवविकसितमिव जनयति सारसम् ॥
स्फुरति विशाले विलिखति भाले सुरुचिररुचिशोभने ।
सुललिततिलकं मृगमदकृतकं मृगमिव मृगलाञ्छने ॥
जितघनमाले कुन्तलजाले विकलितमृगचामरे ।
वितरति विमलां चम्पकमालां तड़ितमिव घनोदरे ॥
इदमतिरुचिरं कथयति सुचिरं कुरु पदयुगचारणे ।
करुणां तारिणि विपदभिवारिणि कविजयनारायणे ॥
यस्मै भर्त्तृकृतं कुलप्रमदया स्यादप्रियं वा प्रियम्
श्रेयःसम्मतया सुमर्षणमपि कर्त्तव्यमेतच्चिरम् ।
भर्त्तारं वशमानयामरवरं गङ्गाधरं सादरम्
मेनेतुग्रस्रवतो विहाय तनयां मेने हृतं जीवितम् ॥
नित्या सर्व्वगता द्वितीयरहिताप्याकारसंवर्ज्जिता
सावित्रीति रमेति कल्पिततनू राधेति वाणीति च ।
माता चेति गणे धियः श्रुतिचयैर्या स्तूयतेऽनेकधा
तां सृष्टिस्थितिसंहृतिप्रणयिनीं दुर्गां भजध्वं जनाः ॥

इति श्रीश्रीमङ्गलीसङ्गीते पञ्चमः सर्गः ॥

---

ततो मृगेन्द्रं विजयाजयाभ्यामारुह्य काशीनगरीमुदाराम् ।
उपागमत् सा हृतवर्त्मखेदा गङ्गाम्बुजारक्तजमन्दवारैः ॥

( तेयोटतालवसन्तरागेण गीयते । )

भ्रमरकदम्बविचुम्बितमल्लीवल्ली ( नि- ) चितनिकुञ्जम् ।
रमणीमञ्जनमानविखण्डनपण्डितपरभृतकुञ्जम् ॥
विलसति विरहितजनकृततापम् ।
मधुसमये हरनगरवनं परमुन्मुदमिथुनकपालम् ॥ ध्रुवम् ॥
मनसि नृपतिकलसहस्रनवविकसितशतपत्रम् ।
सुमधुरनिनदपतगवरमागधविपठितमदनचरित्रम् ।
मारुतचलितचामररुचिरशिरीषकुसुमसुखिकाग्रम् ।
विचित्रविमलध्वजवरसुन्दर केशरनिकरविलासम् ॥
सरलपयोलमशीतपवनदरकम्पितविकसितवकुलम् ।
युवजनभेदनलोहितसूचितशरनिभकिंशुकमुकुलम् ॥
पुष्पितसुललितनवमल्लीपरिरम्भिततरुणतमालम् ।
स्तवकपयोधरसुमनोहरनवकाशोकसुमालम् ॥
कुड्मलपुलकितचूतविलोकनमाधविकाकृतहासम् ।
पथिकहृदयतटपाटनपटुतरकेतकगणकीर्णाग्रम् ॥
अभिमोहितमितञ्जयनारायणकविना परमरहस्यम् ।
कुरुतां मुदितं परमविरामं बुधगणहृदयमवश्यम् ॥

ततो दृष्ट्वा दूरादमरपुरतो दुर्लभतरे
पुरे वाराणस्यामुपवनगतं मन्मथरिपुम् ।
उवाचेदं कापि प्रियतमसखी शैलतनयाम्
स्मितज्योत्स्नाजालस्नपितविलसद्दान्तवसना ॥

( खयेराढीतालरागेण गीयते । )

इह सततमन्तसमये निखिलदेहिनां श्रवणपुटकेषु भवभावम् ।
नाम तव तत्त्वमयमादधतमुत्तमं विकसदभिनवपुलकभावम् ॥
कुरु शिवे रम्यरूपे कृपय पुरान्तकमुदारं
तव विरहसभयं सखि मदनकेतनाहतमिव दहनमभिभावम्
ध्रुवम् ॥

तव वदनरुचिररुचिनिचयपरिचोरकं चन्द्रमपि तापनिदानम्।
धरणिधराङ्गनातिलकपृथिवि विनिविभ्रतं स्वीयशिरसि च निरवसानम्॥
श्रवणतटसीमसञ्चारिचललोचने लोचयितुमिव नयनसाम्यम्।
तव विमलपाणिकमले च मृगशावकं संप्रति वहसमतिकाम्यम्।
सजलघनकिरणचयनिन्दिनववेणिकाभ्रमत इव ते मदनुरागम्।
स्वहृदि भृगविस्तृते मणिनिकरकोचिते तदवधान(?)मयि वासुकिनागं।
त्वामृते विफलमिदमामनति काशीनगरमयममरसुदुरापम्॥
त्वमधुनार्हसि स्वजनमनुरागिणं कर्त्तुमपनुन्नपरितापम्॥
इदमचलतनयालिजनभाषितं भक्तजनमानसविहारम्।
शृणुत जयपूर्व्व-नारायणविवर्णितं सन्त इह दोषपरिहारम्॥
संफुल्लचम्पकदलामलगौरगात्री कुन्दालिनिन्दिरुचिना गिरिशेन गौरी।
रेजे ततः समुपगम्य तदासनार्द्धं वर्षात्यये जलधरेण तडिल्लतेव॥

अन्योऽन्यप्रतिबिम्बितं सुविमलानन्यासनासीनयो-
र्यत्संमार्ज्जितरत्ननिर्म्मितनवादर्शाभिरामच्छवि।
पित्रोर्व्विश्वजनस्य रूपमनघं गाढ़ानुरागात् स्फुटा-
मन्योऽन्यान्तरगामितामिव सदा कुर्व्वज्जगत् पातु तत्॥

इति श्रीश्रीशङ्करीसङ्गीते षष्ठः सर्गः।

---

अथ सान्द्रभवानन्दसमुल्लसिततनूरुहः।
जगाद पार्व्वतीं शम्भुः प्रेमगद्गदया गिरा॥

( मूलतानकानोड़ारागेण गीयते। )

सन्निधिमित्य तवाहं गुणमयि सकलं कर्म्म चरामि।
प्राणमयि तद्विरहित इव मृत ईहनमपि न भजामि॥
मुग्धे मम देहे जीवनमधुनायातं॥ ध्रुवम्॥
श्रुतिरसि मतिरसि दृष्टिरसि त्वं प्रेयसि समवकाशि।
पुष्टिस्तुष्टिरथापि च भूषा स्मृतिरसि गन्धवहासि॥

विकलितसुरकुलविषमगैरलचयपाने यातु भवानि ।
सकल जगतीजनमोहननिपुणा शक्तिरमानि ॥
तव विरहजनितमतुलं सुन्दरि दुःखं यदनुभवामि ।
सुखमपि दर्शनजं तत् किञ्चन पञ्चमुखः कथयामि ।
काशी धन्या क्षतकृतिपुण्या त्रिदशनगरसुदुरापम् ।
यदियमुपैति तवातुलपदकमलाङ्क (न) मपहृतपापम् ॥
श्रीजयनारायणकविकथितं काव्यमिदन्तु न कस्य ।
परमां सम्मदलहरीं चेतसि जनयति जगति जनस्य ॥
इति व्रुवन्तं निजवल्लभं ततः समुल्लसत्प्रेमरसार्द्रचेतसम् ।
श्रुतिप्रमोदप्रतिपत्तिपेशला जगाद गौरी मधुराक्षरा गिरः ॥

( तेयोटतालखमोटारागेण गीयते । )

विरहकृशां तव मुखशशिदर्शनतोषविफुल्लकलेवराम् ।
नवजलधरजलधारापल्लवितां लतामिव तपविकलतराम् ॥
जानीहि मामिदानीमधिगतसकलमनोरथाम् ॥ ध्रुवम् ।
त्वामधिगम्य परमसुखसागरमग्नां चिरमभियाचितम् ।
दुर्गतिनीमिव निधिचयरत्नं सम्भवतः सहसागतम् ॥
जीवननाथ विना भवतासून् क्षणमपि धर्तुमविशक्ताम् ।
चन्द्रतिलकामिव मलयाचलगिरिणानन्यानुरक्ताम् ॥
ध्यानवशादधिगम्य भवन्तं कथमपि रक्षितजीवभाम् ।
प्रागिव वर्षासमयाज्जलदं पिपासितचातकाङ्गनाम् ॥
क्षीणतरां तामधुनावाप्य प्रतिमामयमागतशान्तिम् ।
शशधरलेखामिव तिथिभेदं बिभ्रतीमभिनवकान्तिम् ॥
श्रीजयनारायणकविकृतमिति गीतं श्रुतिसुखकारणम् ।
शैलसुताचरणचारणानां निदिशतु भवतो वारणम् ॥
देवानां प्रणिपातनम्रशिरसां निर्भीतिसम्भाषणम्
भक्तानाञ्च परेतराजविजयेष्वाज्ञापनं वैरिणाम् ।
स्तम्भे क्षोभणमोहनप्रमथने संसिद्धमन्त्रोपमम्
पायाद्वो युधि हृष्टकृत्तगिरिजामञ्जीरसंशिञ्जितम् ॥
इति श्रीश्रीगङ्करीसङ्गीते सप्तमः सर्गः ॥

---

पतुरः कदाचिदथ सा रहसि स्थितस्य
संप्रार्थितस्य गुरुहर्षसमृद्धचेताः।
आज्ञामवाप्य किलयोगिगणावकीर्ण-
मेकाम्रनाम···विपिनं प्रतस्थे ॥
ततो धृताभीरसुतासुवेशा
निजप्रभाजालविकाशिताशा।
अलक्ष्यकारेश्वरपालितं तत्
वनं प्रसूनैः परिपूरितं सा ॥
तैयोटतालधानश्रीरागेण गीयते।—
मृदुलसमीरणशीतलसुललिततीपतले कृतचारा।
शिवगुणकीर्त्तनपरमामोदनविगलितलोचनधारा ॥
विहरति विपिनेऽखिलभुवनेशा धृतनवगल्लवतनयावेशा ॥ ध्रुवम् ॥
दोहनपात्रकवेत्रकवेणुविशोभितकरशतपत्रा।
नीलनवीननिचोलवरा हरिचन्दनचर्च्चितगात्रा ॥
अभिनवकुसुमविनिर्म्मिततमालवलयितकवरीभारा।
निन्दितमुक्ताफलगललम्बितमल्लीकुट्मलहारा ॥
अधरितनतनपद्मरागरुचिविलसदशोकवतंसा।
तत्प्रतिबिम्बविचिक्किनचारुद्युतिभवसमूहदंशा।
परिणतबिम्बविडम्बनदशनच्छदगतसुविशदहासा।
विनिहितश्यारकखचितसुविद्रुमकनककमलतुलितास्या ॥
साद्र।लक्तकसुचरणविहरणसुरुचिरचिह्नचयेन।
निचितं स्थलमिव तज्ज्वलयन्ती लोहिततामरसेन ॥
अभिनवबिसवलयावलिभूषितबाहुयुगाम्रतभाषा।
खगपतिचञ्चूकीर्त्तिविगर्हणमनोहरनासा ॥
श्रीजयनारायणकविभाषितमिति नवरूपमुमया।
ध्यायत भक्तजनाः सततं हृदि पापचयापहरायाः ॥
तत्रोदञ्चन्मृदुमधुरवैर्वारिताशेषविघ्न-
ध्वान्तस्थैर्य्यं नवनवलसद्ग्रामसार्थं ततः सा।
पीयूषोन्नावयत उदधेर्ध्यानविज्ञानबीजं
वक्त्राम्भोजं प्रसृतपवनैः पूरयामास वेणुम् ॥

———

# दुर्गेशनन्दिनी ।

( पूर्व्वतोऽनुवृत्ता )

## अष्टमः परिच्छेदः ।

### आरोग्यम् ।

दिवसो यास्यति । यथाभिलषितं विदधत्यपि त्वयि, दिनं गमिष्यति—नैव स्थास्यति । पथिक, महादारुणप्रभञ्जनवर्षणप्रबाधितस्त्वम् ? उच्चैः शिरसि किं घनो गर्ज्जति ? अपि वर्षणप्लावितदेहोऽसि ? बारकाभिहतशरीरोऽसि किम् ? किं नाम निराश्रयोऽसि ? क्षणमवलम्बस्व धैर्य्यम् । एतद्दिनं यास्यति, नैव स्थास्यति । क्षणमपेक्षस्व—दुर्द्दिनं गमिष्यति, सुदिनमागमिष्यति । सूर्य्योदयो भविता श्वो यावदपेक्षस्व । कस्य दिनं न गच्छति ? कस्य वा दुःखाय दिवसश्चिरं तिष्ठति ? कथं नाम तर्हि रुद्यते ?

कस्य वा दिनं न गतम् ? धूलिपतितायास्तिलोत्तमाया अपि दिनं गच्छत्येव । हृदयनिहितप्रतिहिंसाकालसर्पाया विमलायाः सर्व्वशरीरं विषजर्ज्जरितम् । विषज्वाला मुहूर्त्तमपि असहनीया । एकस्मिंश्च दिवसे कति तावन्मुहूर्त्ताः । तथापि तस्या दिनं किं न गतम् ?

परन्तपः कतलुखानश्च सिंहासनमधितिष्ठति । सम्प्रति सुखेन तस्य दिवसो गच्छति । दिनं गच्छत्येव—न तावत् तिष्ठति ।

रोगशयनशयानो जगत्सिंहः । को वा न जानाति व्याधितस्य दिवसदैर्घ्यम् ? तथापि तस्यापि दिनं गतम् ।

दिवसोऽगमत् । अनुदिनञ्च जगत्सिंह आरोग्यमध्यगमत् । आयशाप्रसादेव मुक्तिमधिगम्य प्रतिदिनं निरापत्तामभावीत् । पूर्व्वं तावत् शारीरिकग्लानिर्दूरं गता । ततश्च सह भोजनशक्त्या बलं समजातम् । पश्चात् चिन्ता आगता ।

कुत्र तावत् तिलोत्तमेति प्रथमा तावत् तस्य चिन्ता समजायत। यथा यथा आरोग्यमलभत, तथा तथा संवर्द्धितव्याकुलतया सर्व्वानेव एतदपृच्छत् राजपुत्रः। न तु ददौ कोऽपि सन्तोषजनकं किमपि उत्तरम्। न जानातीतरदार्येषा; न वा ब्रवीति घोषमानः। परिजनेष न वा घायते—उत वा मोच्यते सङ्केतानुसारेण। राजपुत्रः कण्टकशयितशयान इव चञ्चलो बभूव।

कस्तीयं भवितव्यमन्तरेणैव तस्य द्वितीया चिन्ता। को वा प्रश्नमस्य उत्तरं दातुं समर्थः? ज्ञातो राजपुत्रेण तस्य कारावरोधः। करुणहृदयस्य घोषमानस्य आर्येषायाश्चानुकम्पया अधिवसति तावत् स सुसज्जितं सुवासितं शयनकक्षम् कारागारस्य स्थाने। सेवन्ते तं निरन्तरं परिजनाः। यदा येनैव प्रयोजनं भवति, तदा तस्य अभिप्रायप्रकाशनात् पूर्व्वमेव तल्लभ्यते। आर्येषा सहोदरोचितस्नेहेन तं सेवते। तथापि वर्त्तते प्रतिहारो द्वारदेशे सुवर्णपिञ्जरस्थो सुरसपानीयपरिवृतो विहङ्गम इव वर्त्तते सोऽवरुद्धः। कदा खलु मुक्तिमवाप्स्यति? किं सम्भवति तस्य मुक्तिः? कुतो वा तस्य सेना? नायकविहीनाया वा तस्या जाता का नाम दुर्दशा।

आर्येषामधिकृत्य तावत् तृतीया तस्य चिन्ता। कथमेषा आश्चर्यकारिणी मूर्त्तिमती कल्याणी देवी मर्त्त्यलोकेऽस्मिन् अवतीर्णा? इदं जगत्सिद्धेः—नास्ति आर्येषाया विरामः श्रान्तिबोध उपेक्षा वा। नक्तन्दिनमेव एषा शुश्रूषमाणा तिष्ठति। आरोग्यं यावत् प्रतिदिनमेवावलोकिता सा प्रभातसूर्य्यरूपिणी कुसुमदामहस्ता सलीलपादविक्षेपेण निःशब्दमागच्छन्ती। अनुदिनमेव विलोकितं—सा यामनिशातिक्रममविधाय कदापि तं न त्यक्तवतीति। प्रत्यहमेव निरूपितं—मुहूर्त्तेन प्रत्यागता सा अतिमात्रप्रयोजनवशादेव गच्छति। यावत् जननी देवी किङ्करीं न प्रेषयति, तावदेव शुश्रूषाकर्म्मणो न विरमति।

को वा न जनो रोगशय्यामधिशयितः ? स एव रोगेऽपि सुख-मनुभवति, यस्य रोगशय्यायां शिरोदेशे समासीना मनोमोहिनी रमणी व्यजनपरायणा वर्त्तते।

पाठक, किमिच्छसि जगत्सिंहस्य अवस्थां प्रत्यक्षीकर्त्तुम् ? तदा कल्पनासाहाय्येन अधिशेष्व तां शय्याम्। अनुभूयतां शरीरे व्याधियन्त्रणा। स्मर्य्यतां शत्रुमध्ये वन्दित्वम्। ततः पश्य तां सुवासितां सुसज्जितां शयनकक्षाम्। शयनमधिशयानस्त्वं सिंहद्वारं प्रति दत्तदृष्टिः। अकस्मात् वदनं ते प्रफुल्लं सञ्जातम्। आगच्छति स एव जनो यस्त्वामस्मिन् अरातिपुरे पोषयति। सोऽपि पुनर्जनो विकसितनलिनमिव युवती रमणी। तामपश्यन्नेव शयानोऽनिमेषलोचनो दृष्टिं निदधासि। दृश्यतां तावत् कीदृशी मूर्त्तिरिति। ईषद्दीर्घशरीरयष्टिर्महामहिमदेवीप्रतिमाप्रतिमा प्रकृति-नियमितराज्ञीस्वरूपैषा। पश्य तावत् ललितपादविक्षेपम्। किं श्रुतं गजेन्द्रगमनमिति ? किं नाम तत् ? का नाम मराल-गतिः ? दृश्यताम् एष पादविक्षेपः। वादित्रयन्त्रे खलु स्वरस्य लयो ध्वन्यते। अस्य तु चरणविक्षेपस्य लयः प्रतिध्वनति तव हृदयमध्ये। पश्य तावत् हस्तस्थं कुसुमदाम। किमवलोकितं करप्रभया कुसु-मानि मलिनतां गतानीति ? किं दृष्टः कण्ठप्रभया कर्णाभरणे देदीप्यमानः ? कथं नास्ति निमेषस्तव नयनयोः ? किं नयन-पथिकतां गता मनोहारिणी ग्रीवाभङ्गिः ? किं दृष्टो घनकृष्णो ग्रीवायां पतितो घनकुञ्चितकेशकलापः ? तत्पार्श्वयोश्च दोदुल्यमानं कुण्डलयुगलम् ? मस्तकस्य ईषत् ईषदेव वक्रताभङ्गिः ? एतत्तु केवलम् ईषद्धैर्य्यस्य फलम्। कथमकस्माद्दृष्टिर्दृष्टिं व्यापादयसि ? किं संस्कृती तावदायेषा ?

यावदेवासीत् जगत्सिंहस्य शुश्रूषया प्रयोजनम्, तावदेव आयेषा प्रतिदिनमेव निरन्तरं शुश्रूषानिरताभवत्। क्रमशश्च राजपुत्रश्च

रोगोपशमेन सह तस्या आगमनमेव विरलतां प्राप। राजपुत्रे सर्व्वथा नीरोगतां गते आर्येषा प्रायेण आगमनादपि विरता बभूव। कदाचित् सकृत्, द्विर्व्वा आजगाम। यथा शीतान्तस्य पश्चात् हिमापगमे आतपः क्रमशोऽपसरति, तथैवारोग्यकाले आर्येषापि क्रमशो जगत्सिंहादपससार।

एकदा तु अपराह्णसमये जगत्सिंहो गवाक्षस्थो दुर्गाद्बहिर्दत्त-दृष्टिरवर्त्तत। कति नाम जना निर्ब्बाधं स्वेप्सितं स्थानं गच्छन्ति। राजपुत्रः सञ्जातदुःखस्तैः सह आत्मनोऽवस्थां तुलयति स्म। कुत्रचित् केचित् मण्डलशः कमपि जनं किमपि द्रव्यं वा वेष्टयित्वा तस्थुः। राजपुत्रस्तत्र दृष्टिं ददौ। विज्ञातं तेन प्रमोदरता जना अवधानेन किमपि शृण्वन्तीति। कोऽयं मध्यवर्त्ती जनः, किं वा तत् वस्तु? तत्तु कुमारेण नैवालोकितम्। जातं तस्य कौतूहलम्। क्षणान्तरे गतेषु केषुचन श्रोतृषु कौतूहलं तस्य परितृप्तिं गतम्। दृष्टं तेन मण्डलमध्ये कश्चित् जनः पुस्तकस्य कानिचित् पत्राण्यादाय वाचयं-स्तिष्ठति। जातं कुमारस्य कौतूहलं तस्य आकृतिदर्शनेनैव। स मानवो वा भवेद्वा वज्रपातेन भ्रष्टपत्रो मध्यमाकारः कश्चित् तालवृक्षः। प्रायेण तादृगेव दीर्घस्तादृगेवायतः। तालवृक्षः खलु न कदापि अयस्तादृग्गुरुनासिकाभारो भवति। आकारे तु उभावेव सदृशौ। पुस्तकं पठतस्तस्य हस्तसञ्चालनं मस्तककम्पनञ्च राजकुमारः सावधानं ददर्श।

अत्रान्तरे ओसमानः समागतो गृहमध्यम्। परस्पराभिवादना-दनन्तरम् ओसमानः प्रोवाच—"अवहितः किं भवान् अद्राक्षीत् गवाक्षपथेन?"

जगत्सिंहः प्रत्यभाषत—"सरलः कश्चित् काष्ठखण्डविशेषः। द्रक्ष्यति चेत् पश्यतु भवान्।"

ओसमानः प्राह—"राजपुत्रः कदापि किमेनं न दृष्टवान्?"

राजपुत्रः प्रत्युवाच—"नैव ।"

ओसमानः प्रोवाच—"असौ खलु भवतां ब्राह्मण एव । संलापकुशलश्चासौ मया मन्दारणदुर्गे दृष्टपूर्व्वः ।"

राजकुमारश्चिन्तयामास—"आसीदसौ मन्दारणदुर्गे ? तत् किं न शक्नुयादयं वक्तुं तिलोत्तमासन्देशम् ?

व्याकुलयानया चिन्तया स प्राह—"भद्र, किं नामधेयोऽसौ ?"

ओसमानश्चिन्तयन्नाह—"नामास्य दुरुच्चार्य्यम् !" सहसा न स्मर्य्यते । किं गणपतः ? न हि न हि गजपतः । किं गजपतः ?

"गजपतः ? न खलु गजपतो वङ्गीयानां नामधेयम् । अयं तु वङ्गीय इव दृश्यते ?"

"वङ्गीय एव । भट्टाचार्य्योऽयम् । अस्य कश्चिदुपाधिरपि वर्त्तते । किं तावत् "एलेम" इत्यनेन बुध्यते ?"

"भद्र, न खलु वङ्गीयानामुपाधिषु 'एलेम' इति शब्दो व्यवह्रियते । तत्र तु वङ्गभाषायां 'विद्येति' कथ्यते । विद्याभूषणो विद्यावागीशो वा भविष्यति ।"

"अथ किम्, अथ किम्, विद्या—तदनन्तरं किम् ?"

"किं नाम हस्तीत्यस्य अपरं नामधेयम् ?"

"करी, दन्ती, वारणः, नागः, गजः—".

"अथ किम्, अथ किम् स्मरामि भोः । अस्य नामधेयं गजपतिविद्यादिग्गज इति ।"

"विद्यादिग्गज इति शोभनस्तावदुपाधिः ।"

"नामधेयसदृश एव उपाधिः । जातं मे कौतूहलं अनेन सह आलपनाय ।"

ओसमानश्च गजपतेः प्रलापभाषितं शुश्राव । विवेचितं तेन—मानेन सह संवादे कश्चित् हानिः सम्भवति । उवाच च—"का

हानिः ?" उभावेव समीपस्थं बाह्यं स्वं मत्वा शीघ्रतया रक्षयति-माहूय आनीतवन्तौ।" (क्रमशः)

## विविधकथा।

श्रीश्रीकालीपूजामहोत्सवे विपत्तिः—प्रतिवर्षमेव कलिकातादिस्थानेषु श्रीश्रीकालीपूजामहोत्सवमुपलक्ष्य धूपसन्धुक्षण-प्रस्तावे बहूनामेव बालकानां तरुणानां तथा तरुणवृत्तिमातिष्ठतां स्थविराणां किं बहुना स्त्रीणामपि महान्ति दाहजनितान्यनिष्टानि सम्पद्यन्ते। वर्त्तमाने वत्सरेऽपि न तथाविधान्यनिष्टानि विरलता-मापेदिरे। तथाहि विदितमस्माभिः सामयिकसन्देशपत्रादिद्वारेण यदस्मिन् वर्षे श्रीश्रीकालीपूजामहोत्सववासरे "बेलेघाटा"ख्य-स्थाने द्वौ जनौ स्वधूपनिर्म्माणनिरतौ दैवदोषात् स्वीयप्रमादेन विदीर्य्यमाणात् स्वधूपविशेषात् "पटका" इत्याख्यात् निर्गतैर्विस्फोरकपदार्थैः सुतरा-माहतौ जातौ। श्यामबाजाररथ्यायां कश्चिद् बालकः स्वधूपदाहप्रस-ङ्गेन वसनलग्नवह्निसम्पर्कात् सर्व्वेष्वङ्गेषु दग्धः समजनि। एवं भवानीपुरे चत्वारः, श्रीरामपुरे चत्वारः, जोड़ासाँकोराजपुरुषगुप्त-स्थानाधिकाराधीने मथुरसेनगार्डेनवर्त्मनि एकः इत्येते अपरे च केचन महोत्सवप्रियाः महोत्सवविशेषमनुभवन्तो दुःसहं कष्टमनुभवन्तिस्म तेषु केषाञ्चन जीवितमेव संशयितमनुश्रूयते।

अथात्र वयं पृच्छामः—अपि धर्म्मबुद्ध्या श्रीश्रीश्यामापूजनावसरे स्वधूपसन्धुक्षणमिदं प्रस्तूयते श्रीमद्भिः, यदि धर्म्मबुद्ध्या तदा कुत्र शास्त्रे स्वधूपसन्धुक्षणविधिः समीक्ष्यते, अस्ति हि दीपमालाप्रदान-मेव विहितं शास्त्रे, न जातु भवद्भिरङ्गीकृतं स्वधूपसन्धुक्षणमिदं, तदेतत् परिहाय स्वधूपसन्धुक्षणनिमित्तं व्ययितव्यानां प्रभूतानामर्थानां दरिद्रेभ्यो वितरणेन शास्त्रविहितकर्म्मानुष्ठानमयुक्तं परमापूर्व्वं यदि

सम्पादयन्ति, तदेव सुष्ठु स्यात्। अथ व्ययमेवार्थदाहो मनोरथ-विषयः कौतुककारस्य तदा भूयसा द्रव्येण विपणिगतान् विविधवर्णान् वसनभारान् संग्रह्य तैरतिरम्यवसनमयतरणीप्रभृतिकं निर्म्माय वह्नि-संयोगेन दाह्यमानं स्रोतोऽभिमुखं परिचालयन्तु, तेनैवाभिप्रेतवस्तुचयो विधिबोधितालोकदानं कौतुकचेत्येतानि सर्व्वाण्येव सम्भवेयुः।

## मस्कोनगरे विश्वविद्यालयः।

—भारतीयप्राचीननालान्दाविश्वविद्यालयः सुविदित एव साम्प्रतन्तनानां विदुषां, तत्र यथा शिष्याणामाहारं वासस्थानञ्च वितीर्य्य विद्याग्रहणप्रथा समवर्त्तत, तथैव रुशियावासिनो वलशेभिकजातीयाः सुप्रसिद्धमस्कोनगर्य्यां शिष्याणां आहारस्य वासस्थानस्य च प्रदानेन शिक्षणार्थं कञ्चन विश्वविद्यालयं स्थापितवन्तः। अस्य विश्वविद्यालयस्य तावदभिधानं "पश्चिमविश्वविद्यालय" इति। अत्र सम्प्रति वलशेभिकानां षट्शती शिक्षां लभते। शिक्षार्थिनः तत्र आहारं वासस्थानं स्वीयव्ययान्तर-निर्व्वाहाय द्रव्याणि च समुपलभन्ते। (सम्मिलनीतः)

मन्तव्यम् :—शिक्षार्थिनामाहारवासस्थानादिप्रदानेन शिक्षा-दानं भारतेषु सुतरां पुरातनमपि पाश्चात्त्यानामतिनूतनमित्यत्र नास्ति सन्देहलेशोऽपि। यदि अद्यापि समन्विष्यते भारतवर्षे, तदा किमु संस्कृतशास्त्राध्ययनविद्यालयेषु नोपलभ्येरन् दीयमानाहारवासस्थानाः परःसहस्राः शिक्षार्थिनः समक्षं, तदिदं भारतवर्षे पुरातनमिति नास्माकं दृष्टिमाकर्षति, अत एव दुर्लभेषु वैदेशिकप्रयत्नेषु दृष्टिरारोप्यते।

## समीरणे स्वर्णान्वेषणम्।

—"निउइयर्क" नामक-नगरस्य रूप्यकशालाध्यक्षाणां लिपिवेदिनां विदितं यत् तदीयरूप्यक-शालायां समीरणात् सुवर्णसंग्रहप्रचेष्टा प्रचलति कृतार्थता च जाता भूयसानां प्रचेष्टानाम्। मुद्रानिर्म्माणणाय विद्रावितानां स्वर्णानां ये

वाष्पधारा वर्तमभि समुत्सर्पन्ति, तत एव यन्त्रसाहाय्येन सुवर्णानि संगृह्यन्ते। अनेनोपायेन सम्राट्कोषस्य प्रचुरसुवर्णापचयनिराकरणं भवेदित्यत्र नास्ति सन्देहः। ( सङ्कलनीतः )

मन्तव्यम्।—नेदमस्माकमत्यानन्दकरमिव प्रतिभाति, यदेतावतः परिवत्सरान् सत्स्वपि प्रवोणप्रवोणेषु वैज्ञानिकलोकाचतुरेषु न तादृशः कश्चनोपायः समुद्भावितो नापि तथा कृतमन्वेषणं वायौ स्वर्णसम्पर्कस्य। क्षुद्रमतिष्वपि अस्मद्देशीयस्वर्णकारेषु द्रावितसुवर्णकणसंग्रहाय दृश्यते स्वर्णदाहहेतुभूतानाम् अङ्गाराणां क्रयादिकमपि। घ्राणेनार्द्धभोजनमिति नियमस्यापि वायादिमार्गेण तत्तद्वस्तुपरमाण्वादिसम्पर्क एव निदानमिति सूक्ष्ममोचणीयम्।

———

## समालोचना।

सामवेदसंहिता। ( आग्नेयपर्व्वमात्रम् ) श्रीसत्यचरणदेवशर्म्मकृतव्याख्यादिभिरलङ्कृता। पद्द तचरणमल्लिकवर्म्मनः। श्रीव्रजेन्द्ररायमहाशयेन प्रकाशिता।

अधिगतमस्माभिरेतत् पुस्तकम्। वैदेशिकानां तथा वैदेशिकभावविमुग्धमानवानां स्वदेशीयानामपव्याख्याविषमूर्च्छिते समस्ते वेदशास्त्रे सर्व्व एव वेदसद्व्याख्याप्रकाशनप्रयत्ना नितरामेव समादरमर्हन्तीति एतादृशानि पुस्तकानि सर्व्वथैव समालोचनीयानि सुधीजनानामिति मन्यामहे।

सामवेदसंहिता। ( आग्नेयपर्व्व ) श्रीसत्यचरणदेवशर्म्मकृतवङ्गानुवादगुम्फिता। पद्द तचरणमल्लिकवर्म्मनः श्रीव्रजेन्द्ररायमहाशयेन प्रकाशं नीता।

पूर्व्वालोचितस्य पुस्तकस्य वङ्गानुवादरूपेयं अनधिगतसंस्कृतानां सुमहते उपकाराय कल्पिष्यते इत्याशास्महे वयम्।

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

१८४५ शकीय—पौषे, ५म वर्षस्य ८म संख्या।

## शुभदृष्टिः।

विशुद्धविप्रान्वयलब्धजन्मा, युवा विनीतः सुरनाथनामा।
ग्रामोश्चिरेणाध्ययने रतात्मा, विशिष्य नित्योज्ज्वलनित्यकर्मा।
स प्रत्यहं प्रातरुपैति गङ्गां पूतप्रवाहामवगाहनार्थम्।
स्नानावसाने समुपास्य सन्ध्यां पुण्यान्तरः स्वीयगृहं प्रयाति।
ततस्तरामध्ययनादिकृत्ये सद्भाववित्ते प्रणिधाय चित्तम्।
तथा तथा काम्यफलं वृणीते यथा यथा नान्यजनेन लभ्यम्।
एवं चिरं नित्यविधौ यतात्मा, क्रमेण सर्व्वत्र गतः प्रकर्षम्।
हर्षः सदैवास्य चचार चित्ते, मालिन्यशून्यः सुतरां चकाशे।
अथास्य काले कुहचित् प्रभाते गङ्गावतारं समुपाश्रितस्य।
प्राप्ता दृग्गोचरतां सुरम्या बाला स्वयं मूर्त्तिमतीव लक्ष्मीः॥
भात्रा समं सा सलिलावतीर्णा, पवित्रतेवावभृथे बभासे।
लावण्यधाराप्रसरेण तस्याः, [illegible]ऽपि नीराकरतां दधार॥
सा बाल्यकौमारवयःप्र[illegible]ोः सन्धिं समाश्रित्य सुरम्यरूपा।
असम्यगुन्मीलितमालतीवत् कस्यान्तरे नैव तनोति शान्तिम्॥
समं तयोर्लोचनतारकाणां परस्परं यावदपादि योगः।
तयोर्द्वयोरेव हृदन्तराले, कामाङ्कुरस्याजनि कामचारः।

विना निमेषं क्षणमेव दृष्ट्वा परस्परं कामकृतत्रपत्वात् ।
नतिं क्रमेणाप तदक्षिपत्रम् मनोजसर्वं वहते स्म दन्तः ।
अपूर्व्वरागाभिभवादकस्मात् द्वयोरभूदन्तरमुत्तरङ्गम् ।
तथापि कौमारवयःस्वभावात् अन्येन केनापि न तद्विजज्ञे ॥
निबध्यमाने नयने कदा वा, परस्परं द्रष्टुमिते विनीते ।
तयोस्तदा तत्प्रतिपत्तिगन्धि लुप्ताभवत् कामकलाकुलत्वात् ॥
इत्थं प्रभूते समये व्यतीते, चित्ते तयोः प्रेमभराभिभूते ।
अतश्चमन्तःकरणं निगूढ्य, द्वाभ्यां कृतो गाङ्गजलाभिषेकः ॥
यथागतं मातरमन्वयासीत् सा पूतगङ्गासलिलावकीर्णा ।
युवा पुनः प्रार्थितवस्तुनाशात् दुःखानुविद्धः स्वगृहं प्रतस्थे ॥
तदा प्रभृत्येव तदीयचेतस्तस्यां कुमार्य्यामनुरक्तमासीत् ।
दुःखं पुनः प्रत्यहमेव गङ्गां गत्वापि नातःपरमाप बालाम् ॥
चित्तं विकारोपहितं तदीयं तदान्यकृत्येषु रतिं न लेभे ।
विद्याधिकारे न परं ससज्जे तद्भावनायां सुतरां ललज्जे ॥
पुरोपचारे प्रियबान्धवानां यस्याभवद्भूरितरः प्रमोदः ।
तदा स दूरे विजहत् समाजं अयन्यहा निर्जनभूमिभागम् ॥
बालापि सा तद्दिवसात्तथैव प्रसाधनादौ सुतरां विरक्ता ।
तच्चिन्तया कालकलां नयन्ती लावण्यसारा तनुतां जगाहे ॥
गतेऽथ काले सुरनाथतातः, पुत्रं विकारोपगतं विदित्वा ।
निश्चित्य कौमारकृतं व्यलीकं, मनो दधे तस्य विवाहकृत्ये ॥
कन्या कुलीना कनकावदाता विनिश्चिता स्वल्पतरश्रमेण ।
सम्पत्स्यते नातिचिरं विवाहः श्रुत्वा न शान्तिः सुरनाथचित्ते ।
संक्रान्तमेकत्र मनस्तदीयं सेवास्य चिन्ताविषयो जगत्याम् ।
कथं स भार्य्यामपरां दधानः प्राणद्वयीं दुःखमयीं विधत्ताम् ॥
तथापि सौजन्यविनाशशङ्का, तत्सम्प्रकाशे प्रतिबन्धिकाभूत् ।
एकान्ततो मुग्धतयास्य चिन्ता, हृदन्तरे दाहविधिं व्यतानीत् ॥

समीपमाणात् क्रमशो विवाहः, समाहृतं मङ्गलवस्तुजातम् ।
आचारसिद्धैः परतस्तदानीं, शुभे क्षणे मङ्गलदृष्टिरासीत् ॥
यावच्चतुर्लोचनसङ्गदृष्टिः तावद् व्यतीयाय विषादभारः ।
सोऽयं युवानं चकमे यमेषा सेयं यया मानसमस्य मुष्टम् ॥
पूर्वं क्षणाद् यत्र वसुन्धरायां तयोरभूत्तारकदुःखभोगः
तत्रैव तस्मात् समयात् परस्मिन् ब्राह्मात्मकानन्दविशेषलाभः ॥
वधूवरं लीनमनोव्यलीकं विवाहकृत्ये विनिवृत्तिमाप्ते
रहस्यथो कौतुकपूर्णवाचा परस्परं प्रेमरसं व्यजानात् ।
इत्थं विरामेण विना वचस्तौ कृत्वा निशाया विरतिं विधाय ।
चिराय नानाविधपूतभावान् आसादयन्तौ सुखमादधाति ॥

## जातिबाधकविचारः ।

( लेखकः—श्रीकालीपदतर्काचार्यः । )

( पूर्वतोऽनुवृत्तः । )

अथ तुल्यत्वस्य जातिबाधकता विचार्य्यते । तथाहि व्यक्त्यभेदवत् तुल्यत्वमपि जातिबाधकं तेन घटत्वात् कलसत्वं न जात्यन्तरम् ।

अथ किमिदं जातिबाधकत्वेनाभिमतं तुल्यत्वं नाम ? सादृश्यं वा सदृशरूपवत्त्वं वा सदृशाधिकरणत्वं वा ? नाद्यः, पृथिवीत्वादिकमादाय सर्व्वेषां पृथिव्यादीनां सादृश्यस्य अनपायेन पृथिवीत्वादिजातिमत्त्वेन च स्वरूपसदृशामपि व्यभिचारस्य प्रतिभानात् । जातिबाधकतेत्यस्य धर्म्मपरतया पर्य्यवसानपक्षसमादरेऽपि जातित्वमादाय द्रव्यत्वपृथिवीत्वादीनां मिथः सादृश्यस्यातिरोधानेन व्यभिचारापातात् । नित्यत्वमादाय गोत्वाश्वत्वादीनां परस्परं सादृश्यस्य सिद्धान्तमुक्तावल्यादौ विश्वनाथादिभिः "यथा गोत्वं नित्यं तथा अश्वत्वमपी"

त्यादिना परिदर्शितत्वाच्च। किञ्च कारणान्तरेण उपपिपादयिषितस्य जातित्वस्य प्रतिबन्धकवशादसम्भवेन जातित्वस्य एकान्ततः समुच्छेदापत्तेश्च। नापि द्वितीयः, रूपगतस्य साहश्यस्य विचारेण तथैव दोषावतारप्रसङ्गात्, साहश्यापेक्षया प्रकृते कल्पे विशेषतो वैलक्षण्याभावात्। नापि तृतीयः, तथाहि सहशाधिकरणत्वमित्यत्र किमिदमधिकरणगतं साहश्यं, यदि तद्‌भिन्नत्वे सति तद्‌गतभूयोधर्म्मवत्त्वरूपं तत्, तदा भूतलवृत्तिघटपटादीनामधिकरणभूतलादिव्यक्तीनां भूतलत्वादिकमादाय साहश्यस्य सर्व्ववादिसिद्धतया घटपटादीनां जातिमत्तया च दुष्परिहरो व्यभिचारः, जातित्वबाधकतापत्तेऽपि द्रव्यत्वपृथिवीत्वाधिकरणयोः द्रव्यत्वपृथिवीत्वादिरूपधर्म्मेणैव साहश्यस्य मव्याहततया व्यभिचारदोषादनिस्तारात्। सिद्धो हि द्रव्यत्वादिजातिविशेषः संयोगविभागसमवायिकारणतावच्छेदकत्वादिना शास्त्रदृशाम्। तदिदं तुल्यत्वं अन्यूनानतिरिक्तवृत्तित्वमेव प्रोच्यनिरुक्तदोषस्य वारयितुं शक्यत्वेऽपि स्वान्यूनानतिरिक्तवृत्तित्वस्य स्वभिन्नघतत्वेन द्रव्यत्वादौ व्यभिचारस्य तावतापि परिहर्त्तुमशक्यत्वात्, नहि द्रव्यत्वं द्रव्यत्वसमानाधिकरणभेदप्रतियोगितावच्छेदकं द्रव्यत्वाभाववद्‌वृत्ति वेति परमेशोऽपि सम्पादयितुमीष्टे। यदि च स्वभिन्नधर्म्मान्यूनानतिरिक्तवृत्तित्वं तदा स्वभिन्नधर्म्मपदेन द्रव्यत्वाधिकरणत्वादीनामपि समादातुं योग्यतया तदन्यूनानतिरिक्तवृत्तित्वस्य द्रव्यत्वादौ निराबाधतया व्यभिचारस्य तथापि सुतराम् प्रसङ्गात्। अत एव स्वभिन्नधर्म्मस्य स्वभिन्नधर्म्मत्वेन निवेशनमकृत्वा स्वभिन्नजातित्वेन निवेशनं क्रियते, तेन द्रव्यत्वाधिकरणत्वादीनां द्रव्यत्वभिन्नधर्म्मपदेन धर्त्तुं योग्यत्वेऽपि तेषां जातित्वविरहस्य सर्व्ववादिजनानुमतत्वेन स्वभिन्नजातिसमनियतत्वस्य न व्यभिचारः। न च स्वभिन्नधर्म्मवृत्तिव्यापकताया व्याप्यतायाश्च अवच्छेदकसंसर्गतया समवायस्य प्रवेशेनैव प्रकृताभिप्रायस्य उपपत्तौ अलं जातित्वेन रूपेण जातिं प्रवेश्य

इति वाच्यं, स्वपदेन घाकाशत्वमुपादाय स्वभिन्नधर्म्माशानत्वावच्छिन्नसम-नियतत्वस्य घाकाशत्वे सत्त्वेन व्यभिचारस्य स्पष्टत्वात्। एतेन स्वभिन्न-धर्म्मत्वावच्छिन्नव्यापकतया मेयत्वादौ सौलभेऽपि स्वभिन्नधर्म्मत्वा-वच्छिन्नस्य केवलान्वयितया तदभावघटितव्याप्यतया अप्रसिद्धा न हेत्वप्रसिद्धिरित्यादिकमपि परास्तम्।

अत्र जात्यंशे स्वभिन्नत्वविशेषणानुपादाने केचिदेवं विचारयन्ति यथा—घटत्वस्य जातित्वविरहे न घटत्वे जातिसमनियतत्वहेतोर्व्यभि-चारः, परन्तु घटत्वावच्छिन्नं प्रति कपालत्वादिना कारणत्वे सिद्धे तन्निष्ठकारणतानिरूपितकार्य्यतावच्छेदकतया घटत्वादिजातेः सिद्धतया जातिसमनियतत्वरूपस्य जातित्वविरोधिनस्तत्र सत्त्वेन उभयत आक्रम्यमाणमिदं जातिरजातिर्वा किमपि न स्यादित्यलौकप्रति-यागिकत्वतीयप्रकारवस्त्वापत्तिरभूदेति, अतस्तन्निराकरणाय स्वभिन्नत्वविशेषणमावश्यकमेव। तथाहि तदुपादाने घटत्वादीनां घटत्वादिसमनैयत्येऽपि स्वभिन्नत्वस्य स्वस्मिन् विरहेण न क्षतिः, यदि कलसत्वादिकं घटत्वादितो भिन्नमभ्युपेयते, तदा कलसत्वभिन्न-घटत्वसमनियतत्वस्य हेतोस्तत्र परामर्शात् जातित्वबाधः, कपालत्वा-वच्छिन्नकारणतानिरूपितकार्य्यतावच्छेदकत्वादिना कलसत्वादे-र्जातित्वसिद्धौ तु घटत्वादौ तादृशबाधकधर्म्मपरामर्शाद्धा जातित्वबाध-प्रसङ्गः, न हि एकस्याः कार्य्यतायाः अवच्छेदकत्वावलानुरोधेन शक्यं घटत्वकलसत्वोभये जातित्वं सम्पादयितुम्, अत एव घटत्वादनतिरिक्त-मेव कलसत्वं जातिरिति सुतरां प्रतिपत्तव्यम्। स्वभिन्नजातिसम-नियतप्रसिद्धिस्तु घटत्वाधिकरणत्वादौ कर्त्तव्या इति। तत्समनियत-पदार्थद्वयस्थले एकस्यैव जातित्वस्वीकारो न द्वयोरित्येव निष्कर्षः प्रतिपत्तव्यः।

अथात्र समनियतत्वं अन्यूनानतिरिक्तवृत्तित्वं व्यापकत्वे सति व्याप्यत्वमिति यावत्, तत्र व्यापकत्वं स्वाधिकरणवृत्तिभेदप्रतियोगितान-

वच्छेदकत्वं, तद्‌घटकं स्वाधिकरणत्वञ्च समवायसम्बन्धेन विवक्षणीयम्, अन्यथा कालिकेन सम्बन्धेन घटत्वाधिकरणे स्कन्दादौ समवायसम्बन्धावच्छिन्नावच्छेदकताकभेदप्रतियोगितावच्छेदकत्वस्य कलसत्वे सत्त्वेन निरुक्तस्वभिन्नजातिव्यापकताया: कलसत्वे असम्भवेन स्वरूपासिद्धेरवतारात्। सम्बन्धविशेषसन्निवेशे च समवायेन घटत्वाधिकरणं न स्कन्दादि:, किन्तु घट एव,तत्र च कलसत्ववान् न इति भेदस्य अलब्धपदत्वात् न क्षति:। भेदनिष्ठं वृत्तित्वमपि स्वरूपसम्बन्धेन विवक्षणीयम्, तेन कलसत्वावच्छिन्नभेदस्यापि कालिकेन सम्बन्धेन जन्यतया कालोपाधौ घटत्वाधिकरणे वर्त्तमानतया कलसत्वे स्वभिन्नजातिव्यापकत्वासम्भवेन न स्वरूपासिद्धितादवस्थ्यम्, प्रतियोगितावच्छेदकताघटकसम्बन्धे प्रतियोगितावच्छेदकवति स्वरूपेण भेदस्य अवर्त्तमानत्वात् कलसत्ववति घटे कलसत्वावच्छिन्नप्रतियोगिताकभेदस्य अवृत्ततया निरुक्तव्यापकत्वानपायात्। प्रतियोगितानवच्छेदकत्वं प्रतियोगितावच्छेदकत्वाभाव:, प्रतियोतावच्छेदकभेदो वा। तत्र प्रथमे कल्पे स्वरूपसम्बन्धेन प्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकाभावोऽर्थ:, अन्यथा स्वपदेन घटत्वादिकमुपादाय स्वभिन्नपृथिवीत्वादिजातिसमानाधिकरणभेदप्रतियोगितावच्छेदकत्वस्य स्वरूपेण घटत्वादौ सतोऽपि संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकतादृशाभावस्य सत्त्वेन पटत्वादिवृत्तितादृशप्रतियोगितावच्छेदकत्वव्यक्तीनां तत्तद्व्यक्तित्वादिना चालनीयन्यायेन स्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य सत्त्वेन च व्यभिचारापत्ते:।

अथ तथापि पटत्ववृत्तित्वविशिष्टतादृशप्रतियोगितावच्छेदकत्वं नास्ति, तादृशप्रतियोगितावच्छेकत्वघटोभयं नास्ति इत्यादि प्रतीतिसिद्धानां स्वरूपसम्बन्धावच्छिन्नतादृशप्रतियोगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकाभावानां घटत्वादौ दुरपह्नवतया न शक्यस्तावतापि व्यभिचारो वारयितुम; न च विशिष्टाभावप्रतियोगितायां वैशिष्ट्य-

मात्रं, उभयाभावप्रतियोगितायाञ्च उभयत्वमात्रमेवावच्छेदककोटि-मवगाहते, न तु धर्म्मान्तरमपीति विशिष्टाभावोभयाभावयोस्ताद्दशप्रति-योगितावच्छेदकत्वावच्छिन्नप्रतियोगिताकत्वविरहादेव प्रश्नो व्यभि-चार: प्रत्याख्यातुमिति वाच्यम्, विशिष्टाभावप्रतियोगितावच्छेदकताया वैशिष्ट्यमात्रवृत्तित्वाभ्युपगमे प्रतियोगितावच्छेदकावच्छिन्नवत्ताबुद्धिं प्रति प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिताकाभाववत्तानिश्चयस्य विरोधिताया आनुभविकत्वेन घटवृत्तित्वविशिष्टरूपाभाववान् इति ज्ञानमिव घटवृत्तित्वविशिष्टजातिमान् इत्यादि ज्ञानं प्रत्यपि प्रतिबन्ध-कत्वप्रसङ्गात्, वैशिष्ट्यस्य उभयत्रैव तुल्यतया भानात्।

किञ्च प्रतियोगितावच्छेदकादिभेदेन विलक्षणाया: प्रतियोगि-ताया निरूपकत्वेनेव अभावा भिद्यन्ते, नान्यथा, तथाहि घटो नास्ति, पटो नास्ति, द्रव्यं नास्ति इत्याद्यभावानां सत्यपि द्रव्यनिष्ठप्रति-योगिताकत्वे समाने नाभेद:, किन्तु परस्परं वैलक्षण्यमेव, अन्यथा यथा घटानधिकरणे पटाधिकरणे भूतले घटो नास्तीत्यभाव: प्रमीयते, प्रमीयतां तद्वैव पटो नास्तीत्यभावोऽपि, घटो नास्तीत्यभावात् पटो नास्तीत्यभावस्य भेदविरहे घटाभावसत्त्वेनेव पटाभावस्य सत्त्वात्; अतो घटो नास्तीत्यभावत: पटो नास्तीत्याद्यभावानां कोऽपि विशेष: सुतरामङ्गीकर्त्तव्य एव, येन घटाधिकरणे पटाभाव इव न घटाभाव:, पटाधिकरणे च घटाभाव इव न पटाभावोऽपि प्रमीयेत इति। स च विशेषो यदि घटादिनिष्ठप्रतियोगिताकत्वमात्रेणाभ्युपगम्यते, तदा घटानधिकरणे पटादिरूपद्रव्याधिकरणे घटो नास्तीत्यभाव इव द्रव्यं नास्तीत्यभावोऽपि प्रमीयताम्, घटो नास्तीत्यभावस्येव द्रव्यं नास्तीत्यभावस्यापि घटनिष्ठप्रतियोगिताकत्वेन समानत्वात्, अतएव तत्तदभावविशेषार्थं स्वस्वनिरूपितप्रतियोगिताया अवच्छेदकधर्म्मा, स्वीक्रियन्ते, इत्यञ्च घटो नास्तीति प्रतीतिसिद्धेन अभावेन निरूपिता या प्रतियोगिता घटे भासते, तत्समानाधिकरण: प्रतियोग्यंशे भास-

मानो घटत्वरूपो धर्म्मस्तदवच्छेदक इत्याम्नायते, प्रतियोगिता चासौ तदवच्छिन्ना, यो यदवच्छेदकः स तदवच्छिन्न इति सामान्यनियमस्य सर्व्वैरङ्गीकारात्

( क्रमशः )

## स्मार्त्तकेशरी काशीचन्द्रः।

( लेखकः—श्रीदक्षिणारञ्जनभट्टाचार्य्यः एम्, ए। )

बाल्ये क्रीड़ाप्रसङ्गान् जयति विपुलधैर्य्यः सतीर्थान् किशोरे
शास्त्रज्ञान् यौवनादौ तदनु च रमावाप्यादिदेशान्तरस्थान्।
तर्क्के, कुल्लूकभट्टं जयति प्रतिभया यो हि मेधातिथिञ्च
विद्यारत्नो हि सोऽयं ज्वलतु चिरभया काशिचन्द्रो द्विजेन्द्रः॥
ढाकाप्रदेशस्थवशिष्ठगोत्रे, ग्रामे पुनर्मेदिनीमण्डलाख्ये।
जातो हि यः सर्व्वशास्त्रार्थदर्शी स्मार्त्तप्रवीणः सुविशालबुद्धिः॥
पार्व्वती जननी यस्य शाखा यस्य च याजुषी।
कृष्णहरिसुतः काशीचन्द्रो विजयतेतराम्॥

स्मार्त्तकेशरी काशीचन्द्रः १७७४ शकाब्दस्य फाल्गुने मासि विक्रमपुरान्तर्गतमेदिनीमण्डलनामधेयं ग्रामं जन्मना अलङ्कृतवान्। तस्य पिता कृष्णहरिभट्टाचार्य्यः, माता च पार्व्वती देवी। गोत्रेण स वशिष्ठ एवासीत्। बालकः काशीचन्द्रो दशमवर्षे वयसि पितृहीनः; संवत्सरे व्यतीते तु मातृहीनश्च सञ्जातः। पितृवियोगात् परम् दशाहाभ्यन्तरमेव तस्य द्वौ भ्रातरौ कैलासानन्दनामानौ विसूचिकया कालकरालकवलं प्राप्तवन्तौ। तस्य जन्मपत्रिकां शोकविह्वला जननी गङ्गाजले निक्षिप्तवती। अतस्तस्य महात्मनो विद्यारत्नमहोदयस्य कापि जन्मपत्रिका न विद्यते। मातृपितृवियोगानन्तरमेव ज्येष्ठ-भ्राता कालीचन्द्रभट्टाचार्य्यः विवाहितः सन् मुर्शिदावादान्तर्गत-

खागरानामधेयस्थाने श्रीनाथतर्कालङ्कारनामधेयस्य मध्यो भ्राता तत्रैव नूतनगञ्जनामधेये स्थाने प्रतिवसति स्म । मध्यमभ्रातुः श्रीयुक्त-रूपचन्द्रशिरोमणिमहोदयस्य अकृत्रिमभ्रातृस्नेहेन आनुकूल्येन च सर्व्वकनिष्ठः काशीचन्द्रः स्वगृहे मातामह्या कथं कथमपि क्लेशेन लालितः पालितः वर्द्धितश्च बभूव ।

बालकः काशीचन्द्रश्चातीव चञ्चल आसीत् । सर्व्वदैव क्रीड़ारतः । अध्ययने चासक्तिर्नैवासीत् । किन्तु तत्रापि चैतदुल्लेख्यं तत् क्रीड़नेऽपि तं पराजेतुं कोऽपि समर्थो न बभूव । शैशवसमयादारभ्य एव तस्य विजिगीषा बलवती आसीत् । शैशवे क्रीड़नशीलान् बालकान् यौवने शास्त्ररतान् सतीर्थ्यान् तदनन्तरञ्च विभिन्नदेशीयान् विरुद्ध-मतावलम्बिनश्चाभियुक्तान् सामाजिकांश्च स सर्व्वान् एव पराजित-वान् । कुत्रापि कस्मिन्नपि विषये कोऽपि तं पराजेतुं न समर्थो बभूव, बाल्ये च क्रीड़नदशायां पुराणशास्त्रपाठकानां पाठानुकरणमेव तस्य प्रधानं खेलनमासीत् । अनेन चाभ्यासेन प्राप्ते वयसि स महात्मा वाग्मिश्रेष्ठो बभूव । शैशवात् प्रभृत्येव संस्कृतं नाम दैवो वाक् तं वश्येवानुवर्त्तते स्म । बाल्ये वयस्येवैकदा सुधारामप्रदेशान्तर्गत-भुलास्थे राज्ञ्याः कात्यायन्या राजस्वसंग्रहस्थाने भागवतं पठितवान् । श्रुत्वा च बालकस्यास्य काशीचन्द्रस्य सुललितं विशुद्धं रसभावादि-युक्तं पाठं सर्व्व एव श्रोतृवर्गास्तं भूयोभूयः प्रशंसितवन्तः । अर्थेन च बालकं सन्तोषितवन्तः । नोयाखालिप्रदेशे अद्यापि तस्य भागवतपाठविषयिणी कीर्त्तिः समं विराजते एव । दृढ़प्रतिज्ञता एव तस्य उन्नतेर्मूलम् । पञ्चदशवर्षे षोड़शे वर्षे वा वयसि एकदा सांतरापाड़ा ( ढाका ) निवासिना गोपालविद्याभूषणेन तिरस्कृतः सन् स पठितुमारब्धवान् । अष्टादशवर्षे वयसि च वर्षद्वयेन सुविस्तृ-तस्य कलापव्याकरणस्य पाठं सम्पूर्णमकरोत् । व्याकरणपाठसमये च स एव विद्याभूषणमहोदयस्तस्य अध्यापक आसीत् । स च

काशीचन्द्रस्य अनन्यसदृशीं प्रतिभामवलोक्य भूयोभूयः प्रशंसति स्म। अनन्तरञ्च स्मृतिशास्त्राध्ययनसमये तस्य छात्रिभ्राता पण्डितप्रवर-राममाणिक्यविद्यालङ्कारमहाशयः स्मार्त्ताग्रगण्यः महेशचन्द्रन्यायरत्न-महोदयश्च तस्य अध्यापक आसीत्। त्रिवेणीनिवासिनश्च वङ्गप्रान्त-राजकीयसंस्कृतविद्यालयाध्यापकात् व्रजनाथविद्यारत्नमहोदयात् वर्षचतुष्टयेन न्यायशास्त्रं पठितवान्। इदन्तु कथनीयमेव यत् सर्व्व एवाध्यापकास्तं छात्रमासाद्य आत्मानं बहु मन्यन्ते स्म। विद्यारत्न महोदयश्च न केवलं स्मृतिशास्त्रे व्याकरणशास्त्रे न्यायशास्त्रे च प्रवीण आसीत्। काव्यालङ्कार-वेदान्त-सांख्यदर्शनादौ अपि तस्य कुशलता सममेवासीत्। कदा कुत्र कस्मात् स एतानि शास्त्राणि पठितवान्, तत्र कोऽपि जानाति। तस्य च कुशलता सर्व्वेषु शास्त्रेष्वासीदित्यत्र सर्व्वेषामेकमत्यम्।

"अतश्च मन्ये तं हंसमालाः शरदीव गङ्गां
महौषधिं नक्तमिवात्मभासः।
स्थिरोपदेशमुपदेशकाले
प्रपेदिरे प्राक्तनजन्मविद्याः॥"

यद्भवतु सर्व्वत्र एतावन्मात्रं विद्यारत्नमहोदयस्तत्र नास्ति वितर्कलेशोऽपि।

पाठदशायां तस्य अर्थाभावश्च निरतिशय एवासीत्। तथापि बहुतराध्यवसायेन पठित्वा स व्रजनाथविद्यारत्नात् "विद्यारत्न" इत्युपाधिं प्राप्तवान्। अनेन च उपाधिना काशीचन्द्रस्य कापि शोभा नावर्द्धत। किन्तु अस्यैव उपाधेः शोभा वर्द्धिताभूत्। 'विद्यासागर' इत्यनेन यथा ईश्वरचन्द्र एव बुध्यते 'विद्यारत्न' इत्यनेन च तथैव काशीचन्द्र एव बुध्यते।

अनन्तरञ्च स महात्मा विक्रमपुरमागत्य शास्त्रानुशीलनमारब्ध-

वान्। तदानीञ्च तद्गृहे बहवो विद्यार्थिनः स्मृत्यादिनानाशास्त्राणि पठितवन्तः। तस्मिन्नेव समये "रमाबाई" नामधेया काचिद् विदुषी भारतवर्षस्थनानाप्रदेशे स्वकीयाखण्डं पाण्डित्यं विस्तार्य्य विक्रमपुरं समायाता। सर्व्वे च तत्रत्याः पण्डिताः तस्याः आगमनवार्त्तां श्रुत्वैव भीताश्चकिताश्चासन्। एकत्र मिलिताश्च सन्तः कः कोऽत्र भोः उपायः, गता वयम्, विक्रमपुरस्य कीर्त्तिरद्य विलुप्ता भविष्यति। भारतवर्षस्य सर्व्वान् पण्डितान् विजित्य 'रमाबाई' अस्मान् जेतुमत्र समायाता। कोऽद्य विक्रमपुरस्य कीर्त्तिं रक्षिष्यति? हन्त भोः न कोऽप्यस्ति इति कथयन्तः सर्व्वे रोदितुमारब्धाः। काशीचन्द्रस्तदा रोगशय्याशायी क्षीणो जीर्णश्च। पण्डितानां तादृगार्त्तनादं श्रुत्वा पण्डितकेशरी विद्यारत्नमहोदयः स्वकीयं जर्ज्जरं कलेवरं तृणवन्मन्यमानः सहसा उत्थाय सर्व्वान् अकथयत् "न भेतव्यं, न भेतव्यम्, अद्यापि काशीचन्द्रो जीवित एव। तस्मिन् जीवति बृहस्पतिरपि विक्रमपुरस्य कीर्त्तिविलोपं कर्त्तुं न समर्था भविष्यति। रमाबाई तु काचिदगण्यमाना नारी मात्र।" साधारणतः क्षीणतनुः ब्राह्मणो विद्यारत्नमहोदयः ज्वरेण क्षीणतरः सञ्जातः कम्पमानकलेवरश्च अभिरूपभूयिष्ठाः पण्डितैः सार्द्धं तां विदुषीमनायासेनैव पराजित्य सर्व्वेषामादरणीयो बभूव। सा पराजितापि विदुषी तं भूयोभूयः प्रशंसितवती कथितवती च—"अस्मिन् भारतवर्षे एतादृशः कोऽपि विद्वान् न विद्यते। अद्य मे सफलं जन्म! सफलं जीवितं मम यदेतादृशं महात्मानं पश्यामि।" एतादृशी चासीत् तस्य विजिगीषा स्वदेशप्रीतिश्च। वङ्गीया वयं बुद्धिबलेन सर्व्वेषां ग्रामणीभूताः। सिंहा वयं न तु शृगालाः। वशिष्ठगौतमपराशरप्रभृतीनां वंशे समुत्पन्ना वयं कथमपि न हेया इतरेषामात्तस्य प्रवचनम्। किन्तु सा तेजस्विता अद्य गता। तदात्माभिमानं यन्मनुष्यं प्रकृतमनुष्यं करोति, तदपि गतप्रायमेव। अद्यापि हि काश्यपभरद्वाजशाण्डिल्य-

प्रभृतीनां महात्मनां कुले सञ्जाताः ब्राह्मणाः जरतां विहाय विद्यारत्न महाशयस्य आदर्शदेवं मत्वा के वयमिति चिन्तयताम्।

अयञ्च महात्मा कालवशात् कार्य्यवशाच्च कर्म्मक्षेत्रं कलिकाता-नगरीं समासाद्य कर्म्मणि मनोनिवेशं कृतवान्। मन्वत्रिविष्णुहारीत-प्रभृतीनां विंशतिसंहिताग्रन्थान् सम्यगालोच्यास्मिन्नेव समये स सर्व्वजनमनोमोहिनीं प्रकृतार्थां टीकां प्रतिरकस्यैव विरचितवान्। तस्य च मनुसंहितायाः चिरप्रभानाम्नी टीका अधुना प्रकाशिता। चिर-प्रभाञ्च महामहोपाध्यायः श्रीयुक्तप्रमथनाथतर्कभूषणमहोदयस्तथा महामहोपाध्यायश्रीयुक्तकामाख्यानाथतर्कवागशौ: अत्यर्थं प्रशंसित-वान्। तस्य च अपरो ग्रन्थः कायस्थवर्णविवेकः,अपरश्च उद्धारचन्द्रिका नाम। तस्य च वङ्गभाषया लिखितः कश्चिद्वसन्ततिलका नाम काव्यग्रन्थो विद्यते। ग्रन्थस्यास्य भाषा मधुरा ओजस्विनी च। बाल्ये वयसि च विद्यारत्नमहोदयः कानिचिद्गीतानि रचितवान्, तानि चाद्यापि पूर्व्ववङ्गप्रदेशे गीतानि भवन्ति।

तस्य च अपरा कीर्त्तिर्विद्यते—स खलु महात्मा निखिलवङ्गदेशस्थ-पण्डितानां प्रतिनिधिरूपेण मुम्बइनगरीं गत्वा स्वकीयप्रतिभाबलेन वाग्मितया च सर्व्वेषामभियुक्तानां मनांसि रञ्जयति स्म। महात्मा लोकमान्यस्तिलकः तस्य संस्कृतभाषायां ज्ञानगाम्भीर्य्यं वक्तृता-कौशलञ्च समवलोक्य तं भूयोभूयः प्रशंसितवान्। एवञ्च श्रूयते यदयं स्वाधीनचेताः ब्राह्मणः स्वाधीनतारक्षार्थं कलिकाता राजकीयसंस्कृतविद्यालयाध्यापकपदम् महामहोपाध्यायाख्योपाधि-रूपं राजकीयसम्मानञ्च सुलभमपि न ग्रहीतुमैच्छत्।

विद्योत्साही महात्मा विद्यारत्नमहाशयः संस्कृताध्यायिच्छात्रान् प्रोत्साहयितुं पूर्व्ववङ्गप्रदेशीयसारस्वतसमाजनामधेयशिक्षाकेन्द्रस्य परिचालनविषये वर्षकतिपयं यावत् साहाय्यं कृतवान्। प्रतिवर्षं शिक्षार्थिनः प्रशंसापत्राणि पुरस्कारांश्च प्राप्तवन्तः। तस्य च भ्रातु-

प्युतः श्रीमान् कृष्णविहारितर्कतीर्थश्च तस्मादेवोपदेशं लब्ध्वा शिक्षा-विस्तारार्थमार्य्यप्रभानामधेयं संस्कृतपत्रिकां सम्पादितवान्। सर्व्वथायं महात्मा विद्यारत्नमहोदयः शिक्षाप्रसारार्थे स्वकीयं जीवनमुत्सर्गीकृतवान्।

ब्राह्मणो विद्यारत्नमहोदयो यथार्थ एव ब्राह्मण आसीत्। येन च विश्वदहनसमर्थेन ब्राह्मण्यवीर्य्येणास्माकं पूर्व्वतना आचार्य्या राज्यसुखमपि तृणवन्मन्यमाना अरण्यं समाश्रितवन्तस्तद्धि वीर्य्यम् अस्मिन्नपि युगे ब्राह्मणे विद्यारत्ने विराजते स्म। तादृशो तेजस्वितात्र कुत्रापि न दृश्यते।

हन्त भोः सोऽयं ब्राह्मणः कलिकातास्थ ७लक्ष्मीनारायणदत्तमहोदयवर्त्मनि आश्रमं निर्म्माय कतिपयवर्षाणि च तत्र शास्त्रानुशीलनं कृत्वा १८३८ शकाब्दे चैत्रे मासि कृष्णे पक्षे प्रतिपदि तिथौ दिवाभागे नश्वरकलेवरं तत्याज। तत्पूर्व्वदिने च स्वर्गीयलक्ष्मीनारायणदत्तमहोदयस्य निवासे प्रायेण शताधिकाः ब्राह्मणपण्डिताः पदधूलिप्रदानार्थं समाहूता बभूवुः। सर्व्वेऽपि ते विद्यारत्नमहोदयस्य रोगवार्त्तामाकर्ण्य तं द्रष्टुं गतवन्तः। ब्राह्मणः खलु महात्मा सर्व्वेषामेव तेषां ब्राह्मणानां पदधूलिं मस्तके निधाय आर्त्तकेशरी शोकार्त्तं नाबालकपुत्रद्वयं परित्यज्य स्वर्लोकं गतवान्। गच्छ विद्यारत्नमहोदयः त्वदीयं कर्म्म सम्पूर्णं जातमतो गतोऽसि। तदनुभूयतामुग्रस्य तपसः फलम् :—

"यत्रानन्दाश्च मोदाश्च यत्र पुण्याश्च सम्पदः।
वैराजा नाम ते लोकास्तैजसाः सन्तु ते ध्रुवाः॥"

शमिति।

# श्रीहर्षकवेस्तत् काव्यस्य च समालोचना।

( लेखकः—श्रीकालीपदकाव्यविशारदकाव्यतीर्थः )

( पूर्व्वतोऽनुवृत्ता। )

आदर्शभूतस्यास्य महाकवेः श्रीहर्षस्य स्थितिकालनिरूपणे अभियुक्तानां बहुविसंवादोऽस्ति। अयन्तु राठोरवंशीयानां कान्यकुब्जाधिपानामन्तिमस्य जयचन्द्रापरनाम्नो जयन्तचन्द्रस्य सभासन्मुख्यतम आसीदिति सर्व्वसम्मतमेव, नात्र काचिद्विप्रतिपत्तिः। यत अनेनैव स्वकीयनैषधीयचरितप्रान्तिमश्लोके स्पष्टमुक्तम्—

"ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वरादिति।" पूर्व्वोक्त जीवनवृत्तान्तात् ज्ञायते अयं कान्यकुब्जाधिपजयन्तचन्द्राश्रित इति। जयचन्द्रराज्याभिषेकसमयस्तु प्राचीनलेखमालायां तदीयराज्यशासनपत्र एवं ज्ञायते त्रिचत्वारिंशदधिकद्वादशशतं अब्दादिति। खिष्टीयस्तु द्वादशशताब्द्याः समाप्तिसमये वर्षः। भारतीय इतिहासेऽपि दृश्यते अस्मिन्नेव काले पृथ्वीराजोऽपि दिल्लीश्वर आसीत्। अनयोश्च महाराजाधिराजपदाभिलाषिणोः पृथ्वीराजजयचन्द्रयोर्जयचन्द्र एव राजसूयवद्यज्ञानुष्ठानं चकार, तदन्ते आत्मजायाः संयुक्तायाः स्वयंवरो भवेदिति च घोषयामास। तदैव च घटनातो वैरमाश्रित्य महम्मद घोरीत्याख्ययवनसाहाय्येनापि जयचन्द्रः प्रबलप्रतापशालिना पृथ्वीराजेन विग्रहमारेभे। एतच्च द्वादशशताब्द्यां जयचन्द्रस्थिति निश्चयकमेव प्रमाणम्। एतच्च खिष्टद्वादशशताब्द्यां जयचन्द्रस्थितिनिश्चयात्तदाश्रितस्य नैषधीयचरितकर्त्तुः श्रीहर्षस्यापि तदैव स्थितिरुचिता।

राजशेखरकृतप्रबन्धकोषेऽपि दृश्यते—अयं श्रीहर्षः खिष्टद्वादशशताब्द्यान्तिमभागे बभूव इति।

केऽप्यभियुक्ताः श्रीहर्षस्य एकादशशताब्द्यां स्थितिरासीदिति स्व-स्वग्रन्थे स्वमतमाविश्चक्रुः तदस्माकं समीचीनतया न प्रतिभाति। बहुनान्तावन्मतं संगृह्य मुंबइमुद्रितनैषधचरितप्रस्तावनाकर्त्रा पण्डितेन शिवदत्तशर्म्मणा द्वादशशताब्दीविरुद्धवादिनां मतं युक्तितो निरस्य एवमेव सम्मतिः प्रकाशिता। तथाहि—"इत्थमभियुक्त-युक्तिभिरयमेव सिद्धान्तपक्षः प्रतिभाति यत्—श्रीहर्षः खृष्टद्वादश-शताब्द उत्तरार्द्धे बभूव इति।" अस्माभिरपि तत्तत्प्रमाणानुसारेण प्रबन्धविस्तरभयादुक्तकतिप्रमाणैश्च निश्चीयते—यदयं विविधशास्त्र पारगोऽशेषकलाकुशलो महाकविः श्रीहर्षः खृष्टद्वादशशताब्द उत्तर-भागे प्रादुर्भूय राज्ञो जयचन्द्रस्य कोविदसभामलञ्चकार। निरमा-सीच्च बहुषु शास्त्रेषु विविधान् ग्रन्थान्। तेषु च खण्डनखण्डनामको न्यायग्रन्थः केः पठ्यते किल, तत्र वयमुदासीनाः। नैषधीयचरितन्तु प्रायशः सर्व्वत्र एव सुप्रचलितम् महाकाव्यम्। तस्यात्र आलोचनीयम्।

काव्यं किं नाम रसात्मकं वाक्यम्। तत्र यद्धि साधु काव्यम् तदेव पठनीयम्। तत्फलञ्च चतुर्व्वर्गप्राप्तिः। उक्तञ्च "चतुर्वर्ग-फलप्राप्तिः सुखादल्पधियामपि काव्यादेव" इति अन्यत्र च "साधु काव्य-निषेवणात्" इति। सा च शब्दार्थज्ञानसाध्या। शब्दार्थज्ञानञ्च शक्तिग्रहसाध्यं शक्तिग्रहश्च—

"व्याकरणोपमानकोषाप्तवाक्याद्व्यवहारतश्च।
वाक्यस्य शेषाद्विवृतेर्वदन्ति सान्निध्यतः सिद्धपदस्य वृद्धाः॥" इति

अत इत्थं व्याकरणादियुक्तं गुणभूयिष्ठं काव्यं यशसे, अर्थकृते, व्यवहारविदे, शिवेतरक्षतये, सद्यः परनिर्वृतये, कान्तासम्मिततयोप-देशयुजे च काव्यकृद्भिर्विरचनीयमिति मन्यमानेनात्रभवता महा-कविना श्रीहर्षेण तत्तद्गुणफलाभिधायकमेवेदं नैषधीयचरितं महाकाव्यं निबद्धम्। निषधदेशाधिपस्य पुण्यश्लोकस्य नलस्य चरित्र-

मत्वलस्य्रा काव्यमिदं विरचितमित्यस्याख्या—"नैषधीयचरितम्" इति। महाभारतीयनलोपाख्यानमेवास्योपजीव्यम्। कल्पनात्र तुल्यानुरागयोर्योग्ययोर्नलदमयन्त्योस्तितो ऽकृत्रिमग्राहकरं मिलनम्। सर्गबन्धादियुक्तत्वेन इदं महाकाव्यम्। उक्तं हि "सर्गबन्धो महाकाव्यमिति"। धीरोदात्तश्चात्र नायकः। तथाहि—

"अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान् निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥" इति

विस्तरभिया नैतेषां समर्थनं कृतम्। रसोऽत्र शृङ्गारः। स च विप्रलम्भः सम्भोगश्चेति द्विविधः स्फुट एव। अन्ये च रसा यथायथमङ्गभूतात्र निवेशिताः स्युः। तथाहि—आदितः सप्तदशसर्गपर्य्यन्तं पूर्व्वराग-प्रवासकरुणरूपाः अष्टादशे च सम्भोगः। विंशसर्गे च मानरूपः। अङ्गभूता रसा विस्तरभिया नोदाहृताः। सञ्चारिभावविभावानुभावाश्चात्र प्राचुर्य्येण विद्यन्ते। ते च चतुर्थसर्गे विस्तरेण दृश्यन्ते; नावसरोऽत्र तदुल्लेखस्य। इतः काव्यस्यास्य कतिपयाकेषु कैंचिद्गुणाः प्रदर्श्यन्ते; येश्च उपादेयत्वं प्रतीयते। तथाहि—

"सितांशुवर्णै"रित्यादि,"पदे पदे सन्ति भटा" इत्यादि,"मनस्तु यं नोज्झति जातु यात्वि"त्यादि, "ईशानोमेखर्थ्यविवर्त्तमध्य", इत्यादि "निशाशशाङ्कं शिवया गिरीश"मित्यादि—"कल्याणि कल्याणि तवाङ्ककानो"त्यादि—"वागृजन्मदैफल्यमसह्यशल्यमित्यादि", पुनः सुरीणां भग केव मानवो न यत्र तास्तत्र तु ग्रामिकापि सा। अकिञ्चने किञ्चन नायिकाङ्के किमारकूटाभरणेन न स्त्रियः॥" इत्यादिषु निषेधवैषो विधिरेष तेथवेत्यादि प्रकारेषु च प्रथमतस्ता वच्छ्रुतिसुखावहं पदलालित्यम्। ईदृक्पदलालित्यं न कुत्रचिदन्यत्रतो वर्त्तते। अनेनेकेनैव गुणेन अस्येवं विख्यातिरधिगताऽस्माभिः। "नैषधे पदलालित्यमिति।" प्रथमोदाहरणतुल्येषु सितांशुवर्णैरित्यादिषु रुचिवैचित्र्य कवेर्नवीनकल्पनाकारित्वं प्रकटितम्।

उक्तस्थानेनैव कविना "कविकुलादृष्टाध्वपान्थे महाकाव्ये" इत्यादि। दृशामिमैश्वर्य्यविवर्त्तमध्य इत्यादिप्रकारेषु अणुमध्ये, तनुमध्ये कृशोदरीत्यादौ वा वक्तव्ये यद्व्यासेन रचनावैचित्र्यं विचित्रवृत्तेरस्य युगमेकस्मिन्नेव कवित्वपाण्डित्ययोः प्रकटनम्। किञ्चास्य त्रिविधविद्यालङ्कारशालिनः काव्यकलेयं यैरलङ्कारैरलङ्कृता, तेषु श्लेष एव अतुलोज्ज्वलतयास्य औज्ज्वल्यं वर्द्धयति सुमनसि च उज्ज्वलतामापादयति। तथाहि—"का नाम बाला द्विजराजपाणिग्रहाभिलाषं कथयेदलज्जा।" इत्यत्र "अधि लोकयुगं दृशावपि श्रुतदृष्टा रमणीगुणा अपि। श्रुतिगामितया दमस्वसुर्व्यतिभाते सुतरां धरापते"। इत्यस्मिन् "चेतो नलं कामयते मदीयं नान्यत्र कुत्रापि च साभिलाष"मित्यादिप्रकारेषु च सद्भावोऽस्य ज्ञातव्यः। तत्र च "कल्याणि कल्याणीत्यादौ वाग्जन्म वैफल्यमसह्यशल्यं गुणाद्भुते वस्तुनि मौनिता चेदित्यादौ, पदे विधातुं खलु युष्मदस्मदीत्यत्र—"अदृश्यमाना क्वचिदीक्षिता क्वचिन्ममानुयायी भवतः सरस्वती। क्वचित् प्रकाशां क्वचिदस्फुटाशंसां सरस्वतीं जेतुमनाः सरस्वतीम्" इत्यादिप्रकारेषु यादृग्वाग्वैचित्र्यबाहुल्यं काव्यस्यास्य नवीनतां उपादेयत्वञ्च सम्पादयति, मन्ये अन्यकृतिकृतौ तादृक् कृतित्वं न वर्त्तते। एवं न दृश्यते न श्रूयते च। यच्च सार्थकनाम्नानेनाप्रतिमेन महाकविना ललनाकुलललामभूताया दमयन्त्या अनुपमत्वप्रकटनाय "भुवनत्रयसुभ्रुवामसौ दमयन्ती कमनीयतामदम्। उदियाय यतस्तनुश्रिया दमयन्तीति तताभिधां दधौ।" इति येषा वाणी विनिर्म्मिता, यया च अष्टादशविद्याविशारदस्य धीरोदात्तस्य पुण्यश्लोकस्य नलस्य "यदि त्रिलोकी गणनापरा स्यात्तस्याः समाप्तिर्यदि नायुषः स्यात्। पारे परार्द्धं गणितं यदि स्याद्गणेयनिःशेषगुणोऽपि स स्यात्॥" इति माहात्म्यातिशय्यं प्रकटितम्, सन्मानसतोषिणी सा किमस्य काव्यस्य चारुत्वं नाङ्गीकृतवती।

एवञ्च नैषधीयचरितकारः श्रीहर्षः सुकविरपि नैयायिकमुख्यतम आसीदिति—"उदयति स्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत्। अनुमितोऽपि च बाष्पनिरीक्षणाद्व्यभिचचार न तापकरो नलः।" इत्यत्र—

"कलसे निजहेतुदण्डजः किमु चक्रभ्रमिकारितागुणः ।
स तदुच्चकुचौ भवन् प्रभाझरचक्रभ्रममातनोति यत् ॥"

इत्यस्मिन् अपरत्र च "काण्वं निदानाद्धि गुणानधीते" इत्यादिषु तार्किकता स्फुटं प्रतीयते।

अहो अस्य धीषणा। यया हि विरुद्धधर्म्मयोरपि एकत्र समावेशो दर्शितः। तेन च काव्यस्य उपादेयत्वं जातम्। एवमन्ये-षामपि बहूनां शास्त्राणामत्र आभासो दृश्यते। एवमस्य गवेषणया मनसुदेति यदेतद्बहुदर्शितापापकं प्राज्ञचक्रवर्त्तिकृतं वस्तु प्रज्ञा-वद्भिरेव समालोचनीयम्। न मादृशैरपक्वबुद्धिभिरिति। अतएवं खलु केचित् सिद्धान्तितमासीत् यत् कालिदासादिकृतरघुवंशकुमार-सम्भव-किरातार्ज्जुनीय-शिशुपालवधनैषधीयचरितेषु महाकाव्यजातेषु, बाहुल्येन पदलालित्यनवीनकल्पनाचातुर्य्यकवित्वपाण्डित्यसमावेशा-द्युत्कर्षाभिधायकगुणयुततया श्रीहर्षकृतनैषधीयचरितमुच्चैस्तरां पदवीमधिरोहतीति बहूनान्तावत् सम्मतम्। उक्तञ्च—"उदिते नैषधे काव्ये क्व माघः क्व च भारवि"रिति।

किन्तु भिन्नरुचिर्हि लोकः। अत्यत इत्थं गुणभूयिष्ठमप्येतत् काव्यं काव्येषु श्रेष्ठमिति न सर्व्वसम्मतम्। अत्र हि यं यतो दीर्घ-समास-धैर्य्यच्युतिकरवर्णनाबाहुल्यालङ्कारिकमतविरोधिविरक्तिकरसुदीर्घ-सर्गबन्धानुप्रासोत्प्रेक्षातिशयोक्त्यादय एव कारणं भवेत्। तथाहि—स्फुट एव दीर्घसमासः। दमयन्तीविरहवर्णनन्तु सुदीर्घत्वात् धैर्य्यच्युतिकरम्।

"अस्मान्मश्रुतिपाठपूतरसनाविर्भूतभूरिस्तवा-
जिह्मब्रह्ममुखौघविघ्नितनवस्वर्गक्रियाकेलिना।
पूर्व्वं गाधिसुतेन सामिघटिता मुक्ता नु मन्दाकिनी
यत्प्रासाददुकूलवल्लिरनिलान्दोलैरखेलद्दिवि॥
वैदर्भीकेलिशैले मरकतशिखरादुत्थितैरंशुदर्भै-
र्ब्रह्माण्डाघातभग्नस्यदजमदतया ह्रीधृतावाङ्मुखत्वैः।
कस्या नोत्तानगाया दिवि सुरसुरभेरास्यदेशं गताग्रै-
र्यद्गोग्रासप्रदानव्रतसुकृतमविश्रान्तमुज्जृम्भते स्म॥"
इत्यादितश्चोत्प्रेक्षातिशयोक्ती ज्ञातव्ये।

एवञ्च स्वेच्छाविजृम्भितं काव्यकरणं लोके वैमत्यकरमेव॥
इत्थन्ते हि अत्र उक्तप्रकारा दोषाः। एतैरत्र चारुत्वा-
धिक्यस्यान्तरायैर्जातम्। किन्त्वेते नापकर्षकरा इति मन्ये।
दोषविरचनं हि तत्रभवत आत्मतुष्टिकरं नत्वशक्तिकृतं बहुविजल्प-
नयाल्पभावप्रकटनमिति गुणग्राहिभिर्ग्राह्यम्। कुत्र वा सर्व्वगुणसम्पन्नं
वस्तु दृश्यते। उक्तं हि—

"शोभाधारे कुसुमनिकरे किंशुके नास्ति गन्धः
गन्धाधारे भुजगभवने चन्दने नास्ति पुष्पम्।
इक्षोर्वंशे न भवति फलं केतकी कण्टकाढ्या
एकाधारे सकलसुभगं दुर्लभं हि त्रिलोके॥"

तदत्र एवं मन्तव्यम् वैस्तैर्दोषैर्न तादृग्दुष्टमेतत्, येनास्य गुणा
अपकृष्यन्ते। प्रत्युत तैस्तैर्गुणैरेव एते दोषा आच्छादिताः। एवञ्च
कविरपि कृतकृत्यो यशस्वी चेति नात्र विचारणा।

इत्यलं परिपद्दिरक्तिकरेण पल्लवितेन।
अज्ञानध्वान्तभिज्ज्योतिरनादिनिधनो हि सः।
साहित्यपरिषच्छ्रेयः करोतु भगवान् हरिः॥

स्वे ताम्भोजनिवासिनी परिलसद्वंसासनोशोभिता
वीणापुस्तकधारिणी हरिरता सन्तानशान्तिप्रदा ।
ज्ञानानन्दविधायिनी मुनिगणैर्या पूजिता सर्व्वदा
तां वन्दे भवभारतीं शिवकरीं धर्म्मार्थकामप्रदाम् ॥

## चन्द्रालोकी ।

### तृतीयोऽङ्कः ।

( पूर्व्वतोऽनुवृत्तम् । )

( लेखकः— श्रीधूर्ज्जटिप्रसादकाव्यतीर्थः । )

गङ्गातीरम् ।

( ततः प्रविशन्ति वीभत्सवेशाः पिशाचाः )

उदरप्रियः…

हदजन्दुशदसोणिदेहिं गलिदमिदमंसगन्धेहिं
कढ़िनकङ्कालचर्व्वणेहिं बहुदिनाइं कट्ठेण गदाइं ॥

अज्ज दु जइ कहं वि एकं नलमंमखण्डं पाविमि ता इदो तदो अस्सिस्सं । ( दृष्ट्वा ) अले कक्कड़मत्थअ ! इदो तदो किं पेक्खसि कुदो यासि ? इध एहि प्पणअं कलेमि ।

कर्कटमस्तका—अले कुदो से भग्गाणं सह प्पणओ (अपसरति)

उदर—कोणु क्खु मे दोसो जेण एव्वं ओसलेसि ।

कर्कट—कहं दाणीं ण ओसलेम्ह, जदो अवन्दोसुज्झे तुमं एक्कओ गदा ।

उदर—कक्कड़मत्थअ ! तहिं गदेण मया अप्पना वञ्चिदं ; जदो तहिं केअलं कड़ कक्कसपसुमंसं ।

कर्कट—( नरमुण्डमादाय दृष्ट्वा च ) को तुमं ले को तुमं; उदलप्पिम ! णं पेक्ख पेक्ख केरिसे एसे सुललिदे मंसे। (भास्वाद्य) भले तिक्ते निलसे भ। ( निष्ठीवति )

उदर—किं किं ( दृष्ट्वा ) भले निक्खिवेहि दूले निक्खिवेहि पाविट्ठं णं।

कर्कट—कधं विभ।

उदर—सुनाहि एसे क्खु पाविट्ठे मज्जमंसप्पहुदिपावकज्जसदेहिं उदलं भाजिभण पलिपुलिभ पच्चा इध गङ्गागब्भे निमग्गो।

कर्कट—भले भदो क्ख तिक्ते जादे।

उदर—तदो दाणीं णं गेह्निभ सदजोभणदूले निक्खिवेहि।

कर्कट—भध इं ( निक्षिपति )

उदर—( मध्यतो गृहीत्वा ) इगे ईंधि खाए ह्मि ( हसति )

कर्कट—भले च्छल ! उदलप्पिभ ! चिट्ठ चिट्ठ ( इत्याक्रामति )

उदर—(तदृदृष्ट्वा दूरे निक्षिपति)

मृतसेवकः—( प्रविश्य मध्यतो गृहीत्वा च गङ्गागर्भे पतितः ) भले कक्षाड़मत्यभ ! भले उदलप्पिभ ! णं पेक्ख पेक्ख मं गललमंस सुहालसतिक्ते, भहवा तुह्मे णं पाविट्ठं कहिभ क्कहं खाइस्सधत्ति। भदो मा क्ख तुह्माणं कोवो होदु। भवि भ किंण मन्देसि उदलप्पिभ ! गङ्गाकधिदं।

उभौ—किं किं।

मृत—तत्तभोदोए इगे भादिट्ठो, जधा तुमं ज्जेव पावि, वा पसुं वा खाइस्ससित्ति। भवि सुमलेसि ले सुमलेसि; भदो जइ तुह्मे मए सह कलहं ण कलेध तदो गच्छेमि।

उभौ—एहि ले एहि मड़सेवभ ! ( कर्ह्मवलोक्य ) ता मड़-सेवभ ! कहं इदो तदो पिसाचा लक्खसा गिद्धा ककोला भ हलहलां कदुभ पलिब्भमन्दि दाणीं भाभासदले।

सूत—पुच्छह्मि दाव णं। ( आभाषे ) अज्जआ ! कहं दाणीं इध भअन्दा मिलिदा ? ( नेपथ्ये विकटं विहसन्ति )

उभौ—( श्रुत्वा दृष्ट्वा च ) इदो पेक्ख सिआला विआ कुक्कुला अ पक्खिणो उच्छुआ विअ पलिचलन्दि ।

( ततः प्रविशन्ति विकृतवेशा राक्षसाः )

स्थूलकेशी—प्पिअ ! हत्थिमुह ! किं तं ज्जेव एदं हाणं ?

हस्तिमुखः—थूलकेसि ! हुं हुं इध चिट्ठ, इमे वि अवलाम् आआलेमि ( अग्रे गत्वा ) अले व्वग्घणाह ! इदो इदो।

( नेपथ्ये ) गच्छह्म, चिट्ठध, चिट्ठध।

( ततः प्रविशतो व्याघ्रनखः शूर्पणखा च )

मृतसेवकादयः—( दृष्ट्वा ) अज्जआ ! कहं तुह्मे इध मिलिदा।

हस्तिमुखः—भणवृभिस्सा ! कौ तुह्मे णवागदा ; सुणुध ।

मृतसेवकादयः—अवहिदाह्म ।

हस्तिमुखः—भद्दआ ! जं सुणिदपुलुव्वं जं किल दक्खिद्देओ मिअअत्थं गदो वने उव्वसीं लेहेन्ति सुणिअ असूआपरवसे पिअ यदुवंसवीले तां गेह्निदुं णअलीं अवलुब्भवं अवन्दोलाओ वि सुलङ्ग- मग्गेण घोडओसणाहे पलाइदे। इदो वि तहिं दक्खिद्देअस्स सेणाणीहिं सह महाजुज्झे अजनि।

मृतसेवकादयः—हुं जानिदे ; तहिं मारिसाणं आमन्तणे आसी । तदो तदो।

स्थूलकेशी—किसु सव्वं कख हत्थिघोडआण मांससोणिदं ; णलमंसं दुल्लहं आसी।

हस्तिमुखः—एत्थ एक्कं कालणं विज्जइ ।

सर्व्वे—किं किं

हस्तिमुखः—तहिं उहाणं ज्जेव समले भिक्खा आसी; जदो एदं हि सव्वं जदुवीलस्स चादुज्जे ।

सर्व्वे—कहं एव्वं।

हस्तिमुखः—अले मुक्ख! एत्थ केवलं उव्वसो देइए सावोज्झालणं ज्जेव कालणं न उण दण्डदेपस्स लज्जणासे।

सर्व्वे—हा कहं; तालिसा अवि महन्दो अप्पकालणेन अत्तलाणं मिच्छाकहं देन्दि।

हस्तिमुखः—तदो सुलङ्गदुवालएण पलाइदो दण्डरामो अमलावि-हुविअ इध आअच्छदि, तदो णत्थइ—अणिसुक्खप्पइन्दपुत्तआ जदुवेणा-वइणो पत्थाणुपत्थिआए तं अणुसलन्दा ज्जेव आअच्छन्दि।

सर्व्वे—णं एक्कस्स दण्डदेपस्स ताणं कहं जअं त्ति।

हस्तिमुखः—सुणुध, सुणुध, पाण्डवसंबन्धेण एक्को वि सो दण्ड-रामो सदमक्खमो हुविस्सदि।

सर्व्वे—अह्मो अच्चरिअं क्खु एदं!

हस्तिमुखः—कहं णाम?

भृतसेवकः--जदो दे उण पाण्डवा वासुदेअभत्तिमन्दो वि भविअ उज्झन्दि त्ति।

सर्व्वे—अह्मो जिदं अह्मो जिदं (विहस्य) ता एधक्खणं थे लह्म।

स्थूलकेशो···(दृष्ट्वा) अले कधं खंलिस्सध दाणों प्पहादे संवुत्ते।

उदरप्रियः—(दृष्ट्वा) अले पेक्खध, पेक्खध, को वि राआ पूत्ता-गमणेन परिस्सन्दो विअ घोड्णां आरोहिअ उव्विग्गमाणसो इध आअच्छदि।

हस्तिमुखः—सो क्खु अअं दण्डो, ता एध तं अनुसरेह्म।

भृतसेवकः—(नेपथ्यमवलोक्य) अले कहं दानीं गङ्गातडे जणसंमहोहोदि; के विमिणाअन्ति, के वि हलसनामत्थवं पढन्दि त्ति

कर्कटमस्तकः—(निरूप्य) अज्ज किम्मि सुहदिणं भवे।

उदरप्रियः—एव, भत्यकुटुम्बिणो संवादेम्ह।

( निष्क्रान्ताः )

[ प्रवेशकः ]

( ततः प्रविशति सुभद्रा शोभना च )

सुभद्रा—हञ्जे! अज्ज ज्जेव सुहजोए पवित्तभाइरहीण्हाणं करिस्संति केरिसो मे आनन्दो होदित्ति कहं तुमं विण्णवेमि।

शोभना—देइ! एदु एदु इदो तदो भाइरहीतीरे सुहेण सञ्चरिम्ह, पक्कम्बमोदले अ तीरतरुमूले उवविसेम्ह।

सुभद्रा—भअवदि! जन्हुतनये! पदिदोद्धारिणि! गङ्गे! णमो दे णमो दे। ( प्रणमति )

शोभना—देइ! एकं वत्तुकामा म्हि।

सुभद्रा—हञ्जे! कधेहि।

शोभना—इअं भइरही कहं णाम पुण्णदमा, कहं देवा अवि णं पत्थावेन्दि ता आमूलादो सुणिदुं इच्छेमि।

सुभद्रा—पुरा हि सअरो णाम दिवाणाधवंसे जादो राआ एक्कोणसदं अस्समेधजण्णं कदुअ सददमं कादुं प्पउत्तो, तदो सदक्कदू णिअर-ज्जणासमङ्किदो तं अस्सं चोरिअ पादाले तावसादो महेसिणो कवि-लस्स अस्समसमिवे संठाविदवं।

शोभना—( सविस्मयं ) हन्त हन्त देवा वि पुण्णविग्घआरिणो जादा, तदो तदो।

सुभद्रा—तदो अस्सरक्खआ सअररामस्स सहिसहस्सा तणआ इदो तदो अण्णिस्सन्तो सदक्कदुणो पलाअणमग्गं पेक्खिअ खणिदुं आरद्धवन्तो।

( क्रमशः

# श्रीश्रीशङ्करीसङ्गीतम् ।

माधुर्य्यैररवधोरितामृतरसं तं वेणुनादं मुहुः
श्रुत्वा कर्णयुगं निहन्ति पशवो व्यग्रास्ततो मानवाः ।
धातारं श्रवणद्वयं विदधतं निन्दन्ति वाञ्छन्ति च
व्याला नेत्रसहस्रताञ्च चरमे चक्षुःश्रवस्त्वं द्रुतम् ॥
जगन्मातुर्लीलारसभरसमालोलमनसो
मनोवृत्तिं ज्ञात्वा सुरभिरथ पातालपुरतः ।
पदं द्रष्टुं ध्यातं विधिहरिहराद्यैः सुरगणै-
रुपागच्छत्तत्र स्वगणनिचयैः सम्परिवृता ॥
सा गोपतनयारूपधरां विश्वसवित्रीम् ।
नत्वा जगाद तामेतत् प्रेम्णोत्फुल्लकलेवरा ॥

( सुरफाकृतालतुङ्गरागेण गीयते । )

निन्दितनूतनमिहिरावभासे ।
भक्तहृदयतट तिमिरविनाशे ॥
शैलसुते मम मतिरास्तां तव चरणे ॥ ध्रुवम् ॥
किल्बिषदहनहुताशनजाते ।
तापविनाशामृतसंपाते ॥
नतसुरपतिमुकुटासितमणिना ।
तुलयति कमलं चुम्बितमलिना ॥
वाञ्छाधिकफलवितरणचतुरे ।
समरमहोदद्‌मानन्दिकुदुरे ॥
घोरभवार्णवतारणतरणी ।
त्रिभुवननिःश्रेयसैकसरणी ॥
विदधति शङ्करवचसि परमाम् ।
पद्मरागमणिवरयुगसुषमाम् ॥

लोहितभासिनखरवरनिचिते।
शोणकमल इव हिमकणललिते॥
जयनारायणभणितं गीतम्।
सुखयतु जगतीं श्रवणनिपीतम्॥
घोरान्तःकरणप्रघर्षणतमःस्तोमापहारामलः-
वर्ष्मालोकमहौषधं त्रिजगतां पक्षौघपोषणः।
श्रीदुर्गाचरणोरुणस्फुटजवापुष्पाभिरामद्युति-
र्युष्माकं हृदयाम्बरे समुदितो भूयाद्दिपद्दारणः॥

---

इति श्रीश्रीगङ्करीसङ्गीते एकाम्बवनगमनं नाम अष्टमः सर्गः।

तत्र सा कतिदिनानि लीलया।
धेनुपालनपरायणा सती।
अध्युवास जगदीश्वरी वने
सिद्धचारणगणैः समाकुले॥

( मध्यमानतालसारङ्गरागेण गीयते। )

क्षधिताश्चवल्लणकवलेरवति पिपासून् शीतजलेन।
आमन्त्रयति विपथमनुयातान् सुमधुर वेणुरवेण॥
सा विपिने शिवजाया धेनुगणान् परिचारयति
त्रिभुवनजनमोहनमाया॥ ध्रुवम्॥

वत्सतरप्रतिबिम्बविचिह्नितममलं मृदुलशरीरम्।
लिहतो विनिवारयति करेण रणझनवेन गभीरम्॥
सम्मुखगतनिजवत्सतरानपहाय विहस्य च तुष्टा।
लोकयतो मुहुरास्यविधुं सुखयन्ती सकरुणदृष्टा॥
मञ्जुलवल्लकिसलयबुद्ध्या कवलयतः पदयुगलम्।
लालयते निजकरकमलेन च तेषां वपुरतिमृदुलम्॥
दोहं दोहं विमलपयांसि च तैस्त्रिपुरान्तकलिङ्गम्।
अभिषिञ्चति परिफुल्लहृदयनलिना भुवनेश्वरसंज्ञम्॥

श्रीजयनारायणभणितेषा गीतिर्भक्तजनानाम्।
हृदयतटं प्रतिवसतु सदा शिवजायागुणमुदितानाम्॥
निःसाराश्चपलेन्द्रजालसदृशाद् दुष्टकष्टाकरात्।
संसारादिहनिहृत्य नित्यपरमप्रीतिप्रदे सम्पदाम्॥
सर्व्वासां कुलमन्दिरे त्रिजगतां सारे सुरैर्वाञ्छिते।
भूयाद्वः शिवसुन्दरीपदयुगाम्भोजे मतिर्निश्चला॥
इति श्रीश्रीगङ्करीसङ्गीते गोष्ठवर्णनं नाम नवमः सर्गः॥

---

स्नेहेन देहार्द्धहरं हरप्रिया हरं समुद्दिश्य विलोलमानसा।
कामप्यसौ दुःखसुखांशभागिनीमथाब्रवीदिन्दुमुखी सखीमिति॥
( खम्बेरावापौमालहामीररागेण गीयते। )
सकलकलापरिपूर्णसुधाकरदर्पदलनमुखकान्तिम्।
विकचकमलरुचिलोचनवलनविधूतयुवतिजनशान्तिम्॥
त्रिभुवनहृदयानन्दनिधानं स्मरति सदा मम मन ईशानम्॥
ध्रुवम्॥
अभिनवभवदमृतनिकरमधुरिमगरिमविलोपनभाषम्।
परिहृततरुणीमानतिमिरभरतरुणाधरगतहासम्॥
सुविशदपृष्ठतटावविलम्बिनिबद्धजटापरिवारम्।
स्फटिकशिलोच्चयतटमिव कूटाद्विगलितधातुजधारम्॥
अवधीरितकरिवरकरजानुविलम्बिललितभुजदण्डम्।
दशनवसनपरिलसदतिशोणिमनिन्दितविद्रुमखण्डम्॥
अमलस्थलकमलद्युतिचयविनिगह्वनचरणविकासम्।
सुरतटिनीसलिलोर्म्मिपटलनिभसुवलीत्रितयविलासम्॥
दधतं विततललाटतटोपरि शिशिरकरांशमुदारम्।
विजयकलितमिव रतिपतिशायकमर्द्धशशाङ्काकारम्॥
भणितमिदं जयनारायणकविना परमेश्वररूपम्।
गिरितनयोदितमादिशतु शुभं भक्तिमतामनुरूपम्॥

बाणानपाङ्गलसितानि शरासनञ्च
भ्रूयुग्मकं च वशपाशमथास्यमौर्वीम्।
कामं विजित्य जयसाधनमस्त्रजातम्
तस्यैव मन्मथरिपुः स्वयमाजहार ॥
प्रौढाङ्गनामृदुलकाङ्गमपाङ्गवङ्कि-
मंशीकरोतु सखि कामरिपोर्न चित्तम्।
भङ्गीकृतं कुलवधूवधकन्दनङ्ग-
मङ्गीकरोतु पुनरेव ममेति चित्तम् ॥
त्वं याहि काशीनगरीनिवासिनं
समानय क्षिप्रमिहेन्दुशेखरम्।
इति प्रयुक्ता गिरिजातया तया
सखी समेत्य त्रिपुरारिमब्रवीत् ॥
( मध्यमानतालदमनरागेण गीयते। )
शिव शिव इति तव नाम सकामम्।
जपति यथेष्टफलदमविरामम् ॥
शङ्करी शङ्कर तव विरहे ॥ ध्रुवम् ॥
दिक्षु विदिक्षु विलक्षणरूपम्।
कलयति त्वां जीवनभूपम् ॥
स्रस्तं स्रस्तं विधृतनवलयम्।
धरति सखीलम्भितनिजनिलयम् ॥
कानुभवामि भवं भवसारम्।
इति पृच्छति परिजनमनुवारम् ॥
विलिखति धरणीं नतमुखकमला।
श्वसितमलयमिव विसृजति विकला ॥
विकवति परभृतयूथे सुकलम्।
समपिदधाति श्रुतिपटयुगलम् ॥

निन्दति मञ्जु लवङ्ग लकुञ्जम् ।
कलयति मलयजमिव विषपुञ्जम् ॥
श्रीजयनारायणकविभणितम् ।
जगतामपहरतु सकलदुरितम् ॥

पीयूषद्युतिरप्यहो विसृजति चेऽद्योग्रयं रश्मिभिः
प्राणानन्तमिव प्रसर्पति जगत् प्राणोऽप्यसौ संप्रति ।
तस्या वाड़वहेतिकां वितनुते दुर्द्धर्षणीयं हिमं
नास्त्यन्यो भवता विना स्मररिपो प्राणप्रदानप्रभुः ॥
स्नानानन्दनरूपिका शिवमनःसन्तोषिका शोषिका
पापानामथ पोषिका श्रीजगतामुत्पादिका हारिका ।
भक्ते मुक्तिविधायिका रिपुकुलप्रोन्माथिका दीपिका
या मोहप्रवलान्धकारहरणी सा पातु वश्चण्डिका ॥
इति श्रीश्रीशङ्करीसङ्गीते विरहवर्णनं नाम दशमः सर्गः ॥

---

लीलारसोल्लासितमानसाया: प्राणप्रियाया अथ विश्वनाथः
सखीजनव्याहृतमर्थविज्ञः श्रुत्वा द्रुतं तद्विपिनं जगाम ॥
निवसामि निकुञ्जेऽस्मिन् समानय मम प्रियाम् ।
इत्युक्ता सा शिवेनाथ गौरीमित्याब्रवीदिदम् ॥

( मध्यमानतालभाभानरागेण गीयते । )
रतिमलयजपवने प्रेमभरालसः ।
ध्यायति तव गमनं विकलितमानसः ॥
सीदति विरही कुञ्जे सखि शशिमौलिः ॥ ध्रुवम् ॥
उदयति शिशिरकिरणे तापभरमेति ।
विकसति कुसुमचये स्मरशरतो बिभेति ॥
स्वनति कोकिलकुले हृदिशल्यमुपैति ।
सुनिनदहंसकुले सकाममवैति ॥
स्वपिति धरणीतले निन्दति कुसुमदाम ।

हृदये विरहविधुरे प्रलपति तव नाम ॥
दिशतु करुणामुमा निजपदचारणे।
कथयति गीतमिदं जयनारायणे ॥
नान्यद्ध्यायति संशृणोति वदति प्रत्येति पश्यत्यपि
तद्विच्छेदनखेदकुण्ठकरणग्रामः सदा शङ्करः।
मन्ये कुञ्जगृहोदरे सखि जपंस्त्वन्नामतत्त्वं मुहुः
सर्व्वाभीप्सितदं तपः प्रचरति त्वत्प्राप्तिकामोऽनिशम् ॥
( तेयोटतालविहागरागेण गीयते। )
मृदुलसमीरे कुञ्जकुटीरे युवतिविमोहनवेशम्।
अधिगतमिन्दुविमलमुखि सत्वरमनुवर तं परमेशम् ॥
विकसति कुसुमे राजति विपिने चिन्तितश्रीभुवनेशम् ॥ ध्रुवम्
त्वदुपगमनपरमाकुलहृदयो दिशि दिशि विकिरति नेत्रम्।
दिग्वनिताजनललितवतंसनमिव विकसितशतपत्रम् ॥
कुञ्जं प्रविशति मुहुरपि विचरति बहिरतिचञ्चलनयनः।
ध्वनति समदने मधुकरमिथुने शङ्कितनूपुररवणः ॥
चिरविरहैरतितापितमानसमर्हसि रचितुमेतम्।
सखि निजवल्लभमशरणमनुगतमुपसर कुञ्जनिकेतम् ॥
श्रीजयनारायण इति गीतं भणति सतामभिरामम्।
हिमगिरितनया दुःखितसदया शमयतु भवमविरामम् ॥
ततः प्रियप्रेमरसानुरागिणी चिरादवालोकनलुब्धलोचना।
प्रफुल्लपुष्पं भ्रमरावगुञ्जितं जगाम कुञ्जं गजमञ्जुगामिनी ॥
( तेयोटतालजयन्तीरागेण गीयते। )
शिव जय शिव जय भाषणशीला।
गमनतिरस्कृतकुरङ्गलीला ॥
प्रविशति भुवनत्रयजननीशा।
शिवयुतकुञ्जं प्रेमवशा ॥ ध्रुवम् ॥

निजकरविधृतसखीकरकमला ।
किरणचयैरवधीरितचपला ॥
मुखशशधरगलितामृतहासा ।
दलितहराक्षिचकोरपिपासा ॥
मुखमारुतसुरभितसकलाशा ।
बाधितमधुकरकमलयाशा ॥
जयनारायण इदमभिभणति ।
तारा करुणां कुरुतां नमति ॥
या बुद्धिः प्रतिभा दया क्षतभया माया च मैत्री क्षुधा
तुष्टिः पुष्टिरपि क्षमा च विकृतिः शान्तिस्तृषा भक्तिदा ।
भक्तिर्भ्रान्तिरथोक्तिराकृतिरपि श्रद्धा च विद्या त्रपा
निद्रा सर्व्वशरीरिणामवतु सा विश्वं सदा शङ्करी ॥
इति श्रीश्रीशङ्करीसङ्गीते दूतीसंवादो नाम एकादशः सर्गः ।

अत्रान्तरे तत्र पवित्रवेशा शिवेन सार्द्धं गिरिराजपुत्री ।
विश्वत्रयामोदनमादधानां प्रकाशयामास च रासलीलाम् ॥
( तेयोटतालकेदाररागेण गीयते । )
विलुलितवेणीशोभितया शिवया जितशुचिशशिखण्डः ।
तप्तकनकरुचिरोचितया रुचिनिन्दितहीरकखण्डः ॥
विराजति रासमण्डले शिवया शिव एकाम्रवने ॥ ध्रुवम् ॥
सुललितमुखमण्डलचारुदृगञ्चलया विकचेन्दीवरधरनेत्रः ।
सुविशदहारविभूषितया वनमालावलयितगात्रः ॥
नीलनवीनाम्बरधरया नवपीतनिचोलवसानः ।
करतालविलोलकराम्बुजया स्वरपूरितसुललितगानः ॥
त्रिभुवनपित्रो रूपमिदं सुरनिकरैश्चिरमभिलषितम् ।
श्रीजयनारायणकविना परिचिन्त्य हृदये भणितम् ॥

अष्टाभिर्म्मियुनैः सुचारुरचितं तत्स्वद्रदेहोद्भवे-
स्तत्तद्रूपमनोहरैरनुपमश्रीरासचक्रमण्डलम्।
तत्तद्दे शधरौ त्रिलोकपितरौ लोलोल्लसन्मानसौ
श्रीदुर्गागिरिशौ तदन्तरगतौ संगीभयाञ्चक्रतुः॥
ततो बहुविधे तत्र रासलीलामहोत्सवे।
पार्व्वती परमप्रीत्या जगाद जगदीश्वरम्॥

( मध्यमानतालपरेजरागेण गोयते। )

जगदनुरञ्जनमनुपममलिकं पूरय मृगमदतिलकेन।
शारदमतिरुचिरं परिमिलितं शशधरमिव शशकेन॥
शशिशेखर कुरु कृपया मामभिनिर्चितां भूषया॥ ध्रुवम्॥
विरचय गण्डयुग' मम पुरहर सुललितमृगमदपत्रकम्।
उपरि विलसितमधुव्रतनिकर' विकसितमिव पत्रकम्॥
जनय चिकुरनिचयं कमलेक्षणनिचितं कुरवकमालया।
स्फुरदतिनीलकिरणमिव नीरदमभिनवस्थिरचञ्चलया।
अनुरञ्जय मम जीवननाथ विलोचनमञ्जनलेखया।
नूतनकमलोदरपरिखेलितमदिर' लञ्जयहेलया॥
कटितटमीश विधेहि मनोहररसनावल्लिपरिवलयितम्।
उरसि समर्पय निर्म्मलहार' कुरु करमपि कटकाचितम्॥
वक्ति तमिति जयनारायणकविना विदधातु भुवनानाम्।
कलुषविषमविषनाशनमनिशं कलिविषधरकवलितानाम्।
ततो भूधरराजस्य सुतया प्रार्थितो यथा।
प्रोल्लसत्परमप्रीतिः शङ्करोऽपि तथाकारोत्॥
विद्याधरीकिन्नरसुन्दरीणां गणो गुणग्रामवदग्रगण्यः।
शुश्रूषयाऽतोऽदयादाशु तत्र सुखासनस्थावथ दम्पती तौ॥

( बेश्रोटतालखाम्बाजरागे णगीयते। )

कापि च तावनु चालयते मृदु चामरमतिशयगौरम्।
आतपवारणमुपरि दधाति च काचन शशिकरचौरम्॥
गायति सुललितगानं काचन पूरितपञ्चमरागां खण्डितपिककुल-
मानम्॥ ध्रुवम्॥

# दुर्गेशनन्दिनी।

(पूर्व्वतोऽनुवृत्ता।)

## नवमः परिच्छेदः।

### दिग्गजसंवादः।

सह भृत्येन कक्षप्रविष्टं विद्यादिग्गजं पप्रच्छ राजकुमारः—"किं ब्राह्मणो भवान्?"

दिग्गजः सहस्तभङ्गिरुवाच—

"यावन्मेरौ स्थिता देवा यावद्गङ्गा महीतले।
असारे खलु संसारे सारं श्वशुरमन्दिरम्॥"

जगत्सिंहः कथमपि हास्यं निरुध्य तं प्रणनाम। गजपतिरपि "खोदा (ईश्वरः) खानमहोदयस्य मङ्गलं विदध्यादित्या"शिषा तम् आनर्च्च।

राजपुत्रः प्रोवाच—"भद्र, नाहं मुसलमानः। अहं खलु हिन्दुः।"

दिग्गजश्चिन्तयामास 'यवनकृतकोऽयं वञ्चयते माम्। किमप्यस्य मनोगतं विद्यते। अन्यथा कथमनेन अहमाहूतः।' भयेन विवर्ण-वदनश्च प्रत्यभाषत—"जानामि तावदहम् भवन्तं खानमहोदय, भवदन्नपालितोऽहम्। क्षम्यतां तावद्भवच्चरणदासजनोऽयम्।"

जगत्सिंहेनानुभूत एव विप्रसन्तापः। प्रोक्तं च,—"देव, ब्राह्मणो भवान्। अहञ्च राजन्यः। न खलु भवता एवं वक्तव्यम्। अपि भवान् गजपतिविद्यादिग्गजो नाम?"

दिग्गजेन चिन्तितम्—अयं तावत् नामापि मे जानाति। न

जाने किमनभिमतं दर्शयिष्यति ? प्राञ्जलिश्च उवाच—"भवतः शरणं याचे, सेखमहोदय, अहं दरिद्रः। भवतः पादयोर्निपतामि।"

दृष्टं जगत्सिंहेन ब्राह्मणो यथा भयं गतस्तस्मादस्मात् स्फुटतः कार्य्यसिद्धिर्न भविष्यति। अतो विषयान्तरे कथां प्रवर्त्तयन् उवाच —"किमेतत् पुस्तकं तव हस्ते ?"

"एतत् तावत् माणिकपीरोपाख्यानम्" "कथं ब्राह्मणहस्ते माणिकपीरोपाख्यानम् ?"

"आसम्, पुराहं ब्राह्मणः। नाहमधुना पुनर्ब्राह्मणः।"

विषण्णो विरक्तश्च राजकुमारः प्राह—"किमेतत् ? किं न भवान् मन्दारणदुर्गे अवात्सीत् ?"

दिग्गजेन चिन्तितं मनसि उपस्थितस्तावत् मे सर्व्वनाशः। आतममेन यवनया वीरेन्द्रसिंहस्य दुर्गं स्थितमिति। या खलु दशा वीरेन्द्रसिंहस्य जाता, तथैव मे भविष्यति। ब्राह्मणस्तासात् क्रन्दितु मारेभे। राजकुमारः—"पप्रच्छ किमेतत् ?"

दिग्गजः कृतकरसंपुटः अवोचत्—"शरणं ते गतोऽहं। त्वमसि मम पिता। न मां जहि तात, अहं तव दासजनः।"

"किं भवान् वातुलः ?"

"न हि तात। अहं तवैव दासजनः।"

जगत्सिंहः ब्राह्मणस्य स्थैर्य्यसम्पादनाय अवदत्—"नास्ति ते कापि चिन्ता। वाचय तावत् माणिकपीरस्य उपाख्यानं, श्रूयते।"

ब्राह्मणस्तत्पुस्तकमादाय सरागं वाचयति स्म। यथा यात्राभिनये बालकः सूत्रधारात् ( अधिकारिणः ) कर्णविमर्द्दनं लब्ध्वा गायति तथैव दशा सञ्जाता दिग्गजपण्डितस्य।

अथान्तरे राजकुमारः पुनरपि पप्रच्छ—"ब्राह्मणेन भवता कथम् अपाठि माणिकपीराख्यानम् ?"

ब्राह्मणः वीणस्वरेणावदत्—"जातोऽहं मुसलमानः।"

राजपुत्र उवाच—"कथम् ?"

गजपतिरुवाच—दुर्गमागता महम्मदीयाः प्रभवः मामभाषन्त आगच्छ ब्राह्मणजातिं ते नाशयिष्यामः। इत्युक्त्वा ते बलात् मां कुक्कुटपलावमाशयामासुः।"

"किमेतत् कुक्कुटपलावं नाम ?"

दिग्गजः प्रोवाच—"घृतेन सह आतपतण्डुलस्य पाकविशेषः।"

ज्ञातं राजपुत्रेण किमेतदिति। ततः प्रोवाच—"कथय तावत् ततः किं जातम् ?"

ततो मामवदत् त्वं मुसलमानः सञ्जातः। ततः प्रभृति अहं मुसलमानः।"

अत्रान्तरे राजपुत्रः पप्रच्छ—"किं तावत् वृत्तम् अन्येषाम् ?"

"अन्ये तावत् बहव एव एत्र मुसलमानाः सञ्जाताः।"

राजपुत्रः ओसमानं प्रति दृष्टिं व्यापारयामास। ओसमानश्च राजपुत्रकृतं वाक्यहीनं तिरस्कारं परिज्ञाय अवादीत्—"राजपुत्र, को नामात्र दोषः। मुसलमानानां मतेन महम्मदीयो धर्म्म एव सत्यो धर्म्मः। छलेन बलेन वा सत्यधर्म्मप्रचारे नास्ति पापं परं, पुण्यमेव वर्त्तते।"

अकृतप्रत्युत्तरो राजकुमारो विद्यादिग्गजं पुनरपि पप्रच्छ—"विद्यादिग्गजमहोदय।"

"अधुनाहं सेखदिग्गजः।" "अस्त्वेवम्। सेखश्रेष्ठ, किं न ज्ञायते भवता दुर्गस्य अपरः कश्चित् सन्देशः ?"

ओसमानस्तावत् समवगतराजपुत्राभिप्रायः समुद्विग्नः सञ्जातः।

दिग्गजः प्रत्यभाषत—"अभिरामस्वामी तावत् पलायितः।"

वृद्धं राजपुत्रेण स्पष्टमपृच्छ्यमानात् निर्बोधात् किमपि न ज्ञातुं शक्यते। अतः प्रोवाच—"किं नाम वृत्तम् वीरेन्द्रसिंहस्य ?"

ब्राह्मणः प्रोवाच—"निहतः स नवाबकतलुखानेन।"

राजपुत्रस्य मुखं रक्तवर्णताम् गतम्। पप्रच्छ च स भोसमानम् "किमेतत्? किमेषः मलाकं कथयति ब्राह्मणः।"

भोसमानः गम्भीरया गिरा अभाषत—"सम्राट स्वयं राजद्रोहीति विचार्य्य प्राणदण्डमकार्षीत्।"

राजपुत्रस्य नयनयुगलं अग्निप्रोज्ज्वलम् जातम्।

भोसमानः पुनरपि पृष्टस्तेन—"अपरञ्च निवेदयामि। किमेतत् भवतोऽभिमतेन संवृत्तम्?"

भोसमानः प्रोवाच—"मदीयमन्त्रविरुद्धमेव।" राजकुमारः सुचिरं निस्तब्धस्तस्थौ।

भोसमानः लब्धावसरो दिग्गजमुवाच—"गम्यताम् त्वयाधुना।"

गमनोद्यतं दिग्गजं हस्ते धृत्वा निवार्य्य कुमारः पप्रच्छ—अपरस्तावत् शेषः सन्देशः। कुत्र खलु विमला?" ब्राह्मणो दीर्घं निश्वस्य सकरुणमुवाच—"विमलाधुना जाता सम्राजो भोगिनी।"

राजकुमारो विद्युच्चपलया दृष्ट्या भोसमानं निरीक्ष्य प्रोवाच—"किमेतत् सत्यम्?"

भोसमान उत्तरम् किमपि अदत्वैव ब्राह्मणमुवाच—"किमन्यत् "अनुतिष्ठतु, गच्छेदानीम्।"

राजपुत्रो तथा दृढ़तरं ब्राह्मणहस्तं दधार, यथा तस्य गमनशक्तिर्निवर्तित। उवाच च—"मुहूर्त्तं तिष्ठ। अपरमेकं तावत् वाक्यम् अस्ति।"

तस्य आरक्तलोचनं द्विगुणं अग्निप्रोज्ज्वलं बभूव।

अपरमेकं एव वाक्यम् अस्ति—"का तावत् तिलोत्तमावार्त्ता?"

ब्राह्मणः प्रत्यभाषत—"सापि सम्राजः भोगिनी संजाता। परिजनपरिहृता सुखेनैव तिष्ठति।"

राजकुमारः तथा वेगेन ब्राह्मणस्य हस्तं तत्याज, यथा स कथमपि पतनात् तस्थौ।

श्रोसमानः सलज्जं मृदु अभाषत—"अहं केवलं सेनापतिरेव।"
राजपुत्रेण प्रत्युक्तम्—"भवान् खलु पिशाचस्य सेनापतिः।"

( क्रमशः। )

## विविधकथा।

**वरटादंशनेन मृत्युः**—सिंहलदेशान्तर्गतविरागेननामक-स्थाने यथाक्रमं पञ्चवर्षदेशीयः षड्वर्षदेशीयः सप्तवर्षदेशीय-श्चेति त्रयो बालकाः कस्यचित् पादपस्य शाखायां विलग्नं वरटाचक्रं यष्टिसाहाय्येन भङ्क्त्वा तत्रत्यवरटापुञ्जेन समाक्रम्य तथा दष्टा, यथा ते त्रय एव अनतिचिरं कालकवलमासाः, बहुविधचिकित्सा-विधिभिरपि न तेषामणुमात्रोऽपि समभवदुपकार इति।

मन्तव्यम्—वङ्गदेशीयपल्लीग्रामेषु बहव एव गृहस्था वरटाचक्रात्-परित्यतवरटाशरीराणि संगृह्य वह्निप्रयोगेण मत्स्यान् संगृह्णन्ति, मधुमक्षिकाचक्रप्रभङ्गेन च मधूनि समासादयन्ति, तेषामस्मिन् विषये सावधानता परमवलम्बनीया, प्राचीनकाले तत्कर्म्मनिरतानां मनुष्याणां एवं प्रक्रियाविशेषाभिज्ञता आसीत्, यदवलम्बेन वरटा वा मधुमक्षिका वा दंशनेन शरीरमनिष्टमुपपादयितुं नाशकन्, तदिद-मेव मूर्खतायाः प्रकारान्तरं यदज्ञातव्यूहनिर्गमनमार्गस्य व्यूह-प्रवेश इति।

अमरदेशः—आमेरिकाप्रदेशे क्लाणमोरनामकं स्थानमस्ति। इदं पृथिव्यां परमस्वास्थ्यानुकूलं स्थानम्। अत्रत्यानां स्वास्थ्यमत्यर्थमुत्कर्षं भजते। अत्र त्रिषष्ट्यधिकाष्टादशशततमख्रीष्टीयाब्दात् परं न कोऽपि परलोकमाप्ताः। अत्रतेषु ये मृतास्तेऽपि मरणकाले स्थानान्तरस्था एव आसन् इति महदिदमाश्चर्य्यम्। (सञ्जिवनीतः)

मन्तव्यम्—भोः भोः क्लाणमोरवासिनः! सावधाना भवन्तु भवन्तः, यथाद्य पत्रिकामार्गेण भवतां निवासभूमिः समुत्कर्षातिशयः प्रख्याप्यते, तथा मन्ये नातिचिरमेव मरणशीलाः सांसारिणः क्लाणमोरनगरमाश्रयेयुः, तथात्वे भवतां अमरदेशनिवासो विघटेत। भवन्तस्तथा प्रयतवन्तो भवन्तु, यथा क्लाणमोरनगरमपहाय पदान्तरमपि न गन्तव्यम्। अथवा स्थानान्तरात्तत्र गमिष्यतां राजपाद्यकरभार एव भवतां हितं साधयेयुरिति।

अन्धयुवती—कुमारी ह्रेस्एङ्कारसन् नाम्नी काचित् अन्धयुवती स्कट्ल्याण्डस्थानान्तर्गतात् एडिनवार्ग विश्वविद्यालयात् उपाधिं लब्धवतीति श्रूयते। महिलानां सत्यपि पाश्चात्त्यदेशे विद्याप्रकर्षे न तथा अन्धतामनुभवन्ती काचित् महिला इतःपूर्व्वं लब्धविश्वविद्यालयोपाधिः समजनीति नूतनोऽयं वृत्तान्तः।

मन्तव्यम्—अथात्र वयं पृच्छामः किन्तु महिलाया अस्यास्तादृशोपाधिलाभे स्त्रीत्वमधिकृत्य नूतनत्वम्? अन्यथा वा? स्त्रीत्वमधिकृत्य नूतनत्वन्तु न सम्भवति इतःपूर्व्वं वङ्गादिनानाप्रदेशेष्वेव स्त्रीणामुपाधिलाभश्रवणात्, यदि अन्धत्वमधिकृत्य, तदापि तत्प्रतिवादिनो वयमास्महे, अस्माभिरपि अस्मत्परिचितेषु केषुचिदन्धेषु उपाधिलाभदर्शनात्। यदि स्त्रीत्वमन्धत्वञ्चेति एकत्रद्वयमधिकृत्य नूतनत्वं समुपपद्यते, तदा तथाविधस्य वृत्तान्तस्य विरलतया न प्रतिवदामः। किन्तु अत्र अस्माकमिदं वक्तव्यं, यद् अस्मत्परिचितेषु वङ्गीयेषु संस्कृत-

प्राप्ते सम्यपाण्डित्याः ये नाम जन्मान्धाः श्रीकाशीजीवनसांख्यतीर्थ-७मबद्रावरणमीमांसातीर्थप्रभृतयः, तेषां नाम विशेषेण पत्रिकायामारूढ़ञ्चेत् समदर्शिताया हस्तो दत्तः स्यात् इति।

**सौन्दरनन्दकाव्यम्**—( मूल्यमेकरूप्यकम् –प्राप्तिस्थानं गुरुदासचट्टोपाध्यायएण्डसन्स २०३।१।१ नं कर्णयोयालिसष्ट्रीट्, कलिकाता )। अश्वघोषविरचितं सौन्दरनन्दकाव्यं सुविदितमेव काव्यरसपिपासूनां विदुषां, तदिदं दुर्लभमपि पण्डितप्रकाण्डानां श्रीमतां हरप्रसादशास्त्रिमहामहोपाध्याय सि आइ इ महोदयानां प्राचीनग्रास्त्रादिरक्षानुकूलया चेष्टया अस्माभिः संस्कृतमयमुपलभ्यते, समधिगम्यते च परमा तृप्तिरस्य परमरमणीयस्य प्रबन्धरत्नस्य प्राचीनकविनिबन्धस्य पाठेन। तद्धि सौन्दरनन्दं नाम काव्यं संस्कृतभाषामयमिति कृत्वा न साधारणानां विज्ञानविषयतामुपलभ्य प्रीतिदाने समर्थमिति विज्ञाय सुप्रसिद्धलाहावंशकरीरेण श्रीयुक्तविमलाचरणलाहा एम् ए बि एल् महोदयेन तत् काव्यं वङ्गभाषया मूलानुक्रमनस्य केवलानुवादांशमयोऽयं ग्रन्थः साधारणेषु वङ्गभाषानिबद्धकाव्यरूपेण पठनाय प्राकाश्यं नीतः। महामानवीयग्रन्थेषु रमणीयतमस्य सौन्दरनन्दस्य अद्यापि नानुवादो दृष्टचरः, तदयमुद्यमः श्रीमतो लाहामहोदयस्य सुतरामस्माभिरभिनन्द्यते। अस्य च अनुवादग्रन्थस्य सर्व्वतः स्वारसिकत्वाभावेऽपि बहुष्वेव स्थानेषु मूलग्रन्थभावग्रहणकतया संस्कृतभाषाप्रियाणां बौद्धवृत्तान्तवेदनसमुत्सुकानां प्राचीनकाव्यकलारीतिं अनुबुभूषतां परममानुकूल्यं विदध्यात्, विशेषतश्च अत्र प्राचीनतत्त्वरत्नाकरभूतानां सर्व्वत्र सुप्रथितयशसां परमविदुषां महामहोपाध्यायविरुदालङ्कृतानां श्रीमतां हरप्रसादशास्त्रिपादानां सुविमलमतिप्रसूता प्रकृतप्राचीनतत्त्वा काचन भूमिका समलङ्करोति प्रारम्भं यया समनुशीलितया अश्वघोषस्य कवेः कीर्त्तिविस्तृतोदन्ताः केचन

परैरगम्याः समधिगम्यन्ते। यस्याश्च पाठेन बह्वन्येव प्रत्नतत्त्वानि परिव्यक्तमेव हृदये सन्दीप्यन्ते। तदयमनुवादग्रन्थः प्राचीनवस्तु-प्रेम्णैव प्रेमभाजनतायोग्यः सज्जनानाम्। अन्ते तावदिदं वक्तव्य-मापतति, यदत्र अनुवादकर्मणि श्रीमन्तोऽनुवादकमहोदयाः यावन्तं यत्नमास्थितवन्तस्तावन्मात्रो नैव निर्दोषं वस्तु सम्पादयितु-मीष्टे, तदतःपरं अतो विपुलतरेण यत्नेन तथाविधेषु कर्मसु प्रवृत्तिमन्तो नितरामुपहरन्तु प्राचीनतत्त्वानि तथाविधान्यस्माकम्।

---

# संस्कृतसाहित्यपरिषत्

इयं संस्कृतसाहित्यपरिषत् प्रतिभा रवेः।
भावालोकैर्मनःपद्मं प्रकाशयतु धीमताम्॥

---

१८४४ शकीय—माघे, ५म वर्षस्य १०म संख्या

---


## नक्षत्रम्।

(लेखकः—श्रीउपेन्द्रनाथसेनगुप्तकाव्यतीर्थः।)

अचिन्त्याव्यक्तरूपाय निर्गुणाय गुणात्मने।
समस्तजगदाधारमूर्त्तये ब्रह्मणे नमः॥

कास्ता? दक्षस्य कन्या, न हि न हि विदुषास्ता यशांसि स्फुरन्ति,
स्वर्गं प्राप्ता महान्त,-स्तदपि न नभसो दीप्तिमाला विकीर्णाः।
भ्रान्तोऽसि त्वं—विधातुर्नयनमणय, आ! मृण्मयास्ते यतो वै,
लोका वेत्थं मनीषा बुधकविगुणिनां तारकाश्चालयन्ति॥

स्वल्पे एव जनाः, अनल्पगम्भीरसौन्दर्य्यमण्डितनिशीथवक्षोविशोभनसुनीलसुषमाभूषितसंख्यातीततारकामालालङ्कृतकौसुमद्युतिकोमलस्वच्छविकीर्णवक्षोविडम्बिनि गगने प्रनिहितेक्षणाः सन्तः मनस उद्वेलतां निवारयितुं शक्नुवन्ति। नास्तिक्यकठोरीकृतधियोऽपि तथाविधस्य जगदंशमात्रस्य विचित्रसौन्दर्य्यगौरवं, स्थित्युत्पत्तिगतिकारणञ्च पर्य्यालोचयन्तः, नूनं विस्मयवारिधौ मज्जन्तोऽथ, चकितलोचनैरनिमेषैस्तत्सौन्दर्य्यं पिबन्तः स्वीकुर्व्वन्ति च स्वमनःसु समस्तजगदाधारमूर्त्तेः विश्वरूपस्यास्तित्वम्॥

अपि तथ्यनिर्णयतत्त्वानुसन्धित्सवो मानवाः सौन्दर्य्यमात्रमिदं

पिपासुभिर्नयनैः पिबन्तः, अथवास्य सौन्दर्य्यदिदृक्षालोलुपं चित्त-मवजित्य परतत्त्वमप्यस्य सयत्नमवगाहितुं यतन्ते च? नालं खल्वस्य रूपविभवमात्रं विद्वच्चित्तविमोहनाय। अत एव अरणातो-तादेव कालाद्विद्वांसस्तत्त्वान्यप्यस्य निरूपयितुं भृशमयतिषत एव॥

संख्यातीताः समाः समतीताः अस्मद्देशे यत् पूर्व्वं खलु सूर्य्य-सिद्धान्तः प्राणायि। गणितज्ञा ज्योतिर्व्विदश्च वराहमिहिरमुञ्जाल-भट्टोत्पलश्वेतोत्पलवारुणभट्टभोजराजभास्करकल्याणचन्द्रार्य्यभट्टलल्ला-चार्य्यब्रह्मगुप्तश्रीधरपद्मनाभादयः प्रत्येकं बहुशतवत्सरपूर्व्वं भारत-वर्षेऽस्मिन् प्रादुरासन्। बहुकल्पपूर्व्वस्थायिनश्च सर्व्वलोक नमस्या महर्षयः सरहस्यं ज्योतिःशास्त्रं प्रावर्त्तयन्। तथाचोक्तं वलभद्रेण साद्रायमरत्ने—

"सूर्य्यः पितामहो व्यासो वशिष्ठात्रिपराशराः।
कश्यपो नारदो गर्गो मरीचिर्मनुरङ्गिराः॥
लोमशः पौलिशश्चैव च्यवनो यवनो गुरुः।
शौनकोऽष्टादशश्चैते ज्योतिःशास्त्रप्रवर्त्तकाः॥"

परमस्माकं दौर्भाग्यं यत् तादृशानामपि महतां वंशधरा वय-मिदानीं ज्योतिःशास्त्रालोचनहतादराः संवृत्ताः, शास्त्रमेदमना-लोचनकर्क्कशं जातं, अत एव स्वल्प एव जनाः सुकुमारशास्त्राणि काव्यादीनि परित्यज्य ज्योतिर्व्विद्याशिक्षार्थं परिश्रममङ्गीकुर्व्वन्ति। ये तु किञ्चिन्मात्रं यत्नमस्मिन् विदधति, तेऽपि पौराणिकानां नवीनां तथा वैज्ञानिकानां मतविकल्पदुर्गमार्गेषु भ्रमन्तः परिश्रान्ताः—इतोभ्रष्टास्ततोभ्रष्टाश्च भवन्ति। साम्प्रदायिकमतविकल्पाश्च प्रबन्धान्तरे लोके प्रदर्शिताः। यातु—अहुभः वाग्विस्तरः, वयमिदानीं प्रकृत-विषयमनुसराम:।

अस्मिन् प्रबन्धे नक्षत्रशब्द उपलक्षणमात्रं, अत एव नक्षत्राण्यधि-कृत्य अन्यान्यपि ज्योतींषि—सन्दर्भेऽस्मिन्नालोचयिष्यन्ते। वाचाना-

देव सर्व्वे प्रायः प्रतिनियमेव गगनमण्डलमलङ्कुर्व्वन्ति ज्योतिर्विद्भिः नयनद्वारेण परिचिताः, किन्तु कति तावत् जानन्ति सरहस्यानि तेषां तत्त्वानि ? भवतस्तत्र द्वे श्रेणी—गगनपथे चाविभवतां ज्योतिर्मण्डलानाम्, नक्षत्रश्रेणिस्तारकाश्रेणिश्च॥ सर्व्वेषामेव चक्षुःप्रत्यक्षाणाञ्च केचित् नक्षत्राणि, केचिच्च तारकाः, अतः सर्व्वे खलु ते एतयोः विभागयोरन्तर्गताः। कस्तत्र नक्षत्राणां तारकाणाञ्च भेदः ? संज्ञाकृतः खलु विषयेऽस्मिन्नेवमुक्तवन्तः,—

न क्षीयते स्वस्थानान्न प्रच्यवतीति नक्षत्रं अर्थात् तारकाणां याः स्वायतनानि न त्यजन्ति परन्तु स्वस्वस्थानेषु अचला एव तिष्ठन्ति तासामेव नक्षत्रसंज्ञा। नक्ष गतौ इत्यस्माद्धातोस्तु नक्षत्रमिति प्रामादिकः नक्षत्राणां गतेरभावात्। जयति खलु कविः—यतः वैज्ञानिका अपि तारकासंज्ञां विधातुम् असुलभां विश्वमनोहारिणीं कविकल्पनां समाशिश्रियिरे,—सम्भवतीदं यत् संज्ञाप्रणेतुः खलु संज्ञाप्रणयनकाले इतस्ततस्तरङ्गसंक्षोभचपलफेनपुञ्जविस्फुरितविग्रहेण नीलाम्बुस्वामिना असंख्यतारकाविमण्डितनीलनभस औपम्यं मनसि उदियाय, तत एव स तॄ प्लवनतरणयोरित्यस्माद्धातोस्तारकेति पदं निर्ममे। यतः खलु तारकाः गतिशीलाः सुतरामेव समुद्रवक्षसि फेनपुञ्जवत् इतस्ततः प्लवन्ते। परिवर्त्तिनि काले कविकुलधुरन्धरः कालिदासोऽपि इमामेव शोभां मनस्यनुध्याय जनकनन्दिन्यै समुद्रशोभामाख्यातवतः रामचन्द्रस्य मुखद्वारेण जगौ—

"वैदेहि पश्यामलयाद्विभक्तं मत्सेतुना फेनिलमम्बुराशिम्।
छायापथेनेव शरत्प्रसन्नमाकाशमाविष्कृतचारुतारम्॥"

एवं सत्यपि—नक्षत्रसंज्ञा सर्व्वथाऽस्मानानुकूलयति, यतः गतिमत्योऽपि अश्विनीभरणीकृत्तिकाप्रभृतयस्तारकाः नक्षत्रमध्ये एव विनिविष्टाः॥ सुतरां संज्ञामिमामन्ये कृतवन्तः—यत्—

"यस्य चन्द्रमसा योगस्तन्नक्षत्रमुदाहृत'मिति।

अर्थात् गतिप्रभृतीनां सम्बन्धेन यानि चन्द्रमसा सम्बद्धानि तान्येव नक्षत्राणीति। कमपि विषयं निश्चिन्वतां जनानां मनांसि प्रथममेव तस्यैव विषयस्य प्रभवमधिकृत्य परिप्रश्नायन्ते, वयमपि नक्षत्रविषयकं किमपि निश्चिन्वाना: प्रथममेव कुतस्त्यानि खलु तानि तदेव जिज्ञासमाना: नितरामुत्सुकोभवाम:। नि:सन्देहं सर्वे ग्रहा: नक्षत्राणि च सर्व्वाणि यथापराण्यपि भूतानि तथा ब्रह्मण: अथवा प्रधानादेवागच्छन्, किन्तु तथापि अनेन तत्त्वमात्रेण मन: सन्तोषं नाधिगच्छति। ग्रहनक्षत्रादीनां सृष्टिप्रसङ्गे सूर्य्यसिद्धान्ते एवमुक्तं यत्—

"अथ सृष्ट्यां मनश्चक्रे ब्रह्माहङ्कारमूर्त्तिभृत्।
मनसश्चन्द्रमा जज्ञे सूर्य्योऽक्ष्णोस्तेजसां निधि:॥
मनस: खं ततो वायुरग्निरापो धरा क्रमात्।
गुणैकवृद्ध्या पञ्चैव महाभूतानि जज्ञिरे॥
अग्नीषोमौ भास्करेन्दू ततस्त्वङ्गारकादय:।
तेजो भूखाम्बुवातेभ्य: क्रमश: पञ्च जज्ञिरे॥
पुनर्द्वादशधात्मानं विभजेद्राशिसंज्ञकम्।
नक्षत्ररूपिणं भूय: सप्तविंशात्मकं वशी॥" इत्यादि—

अप्येष्यन्ति सन्तोषमाधुनिका एभिरेव वाक्यै: ? पाश्चात्त्या: सुधियो ग्रहनक्षत्रादीनां विषये भृशमालोचितवन्त:, अत्र खलु—कृताञ्जलिरहं विदुषां द्वयोरेव मतयो: सम्मेलनेन गठितं युक्तिमत्तमं किञ्चित् वक्ष्यामि, परन्तु तस्य यौक्तिकतायां विदाम् एव प्रामाण्यम्। सर्व्वभूतजनकस्याकाशस्य विशेषेण प्रवाहधर्म्मिण: समीरणस्योत्पादकस्य नित्यगतिमत्त्वधर्म्मवत्त्वं सांख्याचार्य्यैस्तथा वैशेषिकवादिभि: स्वीकृतमेव, आकाशमिदमाधुनिकानामिथारेण प्रायस्तुल्यं ( eather ) अस्मादेवाकाशाद्द्वयोरभिव्यक्ति:, आकाशवाय्वो: सङ्घर्षेण

( friction ) तेजस्तत्त्वस्य विकाशस्ततश्च तेजस आपो जज्ञिरे अनन्तरञ्च तासां शिकथरूपिणी चितिर्जाता ( preipihayn ) आसीच्च निःसन्देहं तारल्यधर्म्मावच्छिन्नं तेजोवारिणोः किञ्चिन्माध्यमिकं रूपम् अदृष्टशक्तिपरिचालितञ्च तद्रूपविशिष्टं वस्तुजातं चिरति-नियतमेव भ्रमदासीत्। तदनन्तरं कालेन यदा सङ्घातकठिना-वयवा चितिर्जज्ञे, तदा तत् कठिनं वस्तुजातं नियतभ्रमणेन वृहद्वर्त्तुलपिण्डस्याकारं प्राप, नियतघूर्णनेन खण्डशो विच्छिन्नताभूत्। अथातिवृहतः पिण्डद्वयस्य संघर्षो जज्ञे, सङ्घर्ष-फलेन तौ पिण्डौ जज्वलतुश्च, तयोरेवैकः खल्वस्माकं—स वरेण्यः सविताभ्यश्च सम्भवेत् अपरस्यां कस्यामपि दिशि गत्वा अपरं कमपि कमपि सौरलोकं निर्ममे। अयमेव स सविता यः खलु अस्मान् परिवृत्य तिष्ठतः सौरजगतः सविता नत्वपर इति वैज्ञानिकानां मते तत्शब्दस्य निरुढ़िः। सविता—जगत्प्रसवकर्त्तेत्यर्थः। पश्चात् भ्रमणवशात् अस्मादेव मिहिरात् अन्येऽपि सर्व्वे लोका मिमिहिरे। मिह क्षरणे इति धात्वर्थः, यस्मात् सर्व्वे लोकाः मिमिहिरे स मिहिरः अयमेव द्युतिरूपिण्याः तथा सर्व्वेषां जगतां सञ्ज्ञाविधात्र्याः संज्ञाया तथालोकस्य नित्यसहचारिण्याः अपि च विरहभाजाभिपन्नायाः समान-पतिकायाश्छायायाः पतिः। पूर्व्वमस्यासह्यं तेज आसीत् विश्वकर्म्मा भगवान् सर्व्वविश्वनियन्तैव मिहिरमेनं शानयन्त्रे आरोप्य अस्मात् जगन्ति भेदयित्वा चास्य तेजोह्रासं विदधौ। अथ सूर्य्यचरितानि अपराण्यपि जगन्ति लोकान् अपरान् यथा सूर्य्यात् तानि स्वयमजायत तथैवोत्पादयामासुः। तानि च ज्वलदग्निशङ्कासावयवानि कालेन शीतलतामापद्यमानानि जलादिभिः परिपूरितान्यभवन्। कानिचित् निःशेषशीतलतां तुषारमूर्त्तिञ्च भेजिरे, अपराणि कानिचित् यथा भूमौ तथैवासते, अपराणि कानिचित् इदानीमपि उत्तप्तायःपिण्डा-नीव वर्त्तन्ते।

एवमन्यान्यपि नक्षत्राणि तथा यावत्सङ्ख्यका ग्रहाश्च सर्व्वे जज्ञिरे। अस्ति च व्योम्नि कस्मिंश्चित् कस्मिंश्चिदपि प्रदेशे ग्रहाणा-मपि स्वर्गादिस्थितयोस्तेजोवारिणोः माध्यमिकरूपं वस्तु विभिन्ना-कारेण, यथाकालं तस्मादपि अन्ये ग्रहाः अपराणि च जगन्ति सम्भविष्यन्ति केचन पुनरित्थमपि भाषन्ते, तेषां मते योऽस्मदिन्दिव प्रतिभासमानश्छायामार्गोऽपि तथाविधानामेव जगदुपकरणभूतानां वस्तूनां संहतिरेव। नक्षत्रसम्बन्धिसमालोचनाप्रसङ्गमेव मनसि कति प्रश्नाः समुद्यन्ति यत्—कानि खलु द्रव्याणि तेषां उपादान-भूतान्यज्ञानानाम्, कथं तानि दीप्यन्ते, कथं शिरसि सन्तिष्ठते, कथं न पतन्ति, कथं न स्वस्थानेभ्यो भ्रश्यन्ति, कथं न प्रतिनिशं यथास्थानं दृश्यन्ते, एवमन्येऽपि बहवः। तत्र वाचः क्रमशक्तिस्वभावात् क्रमशः एव कथ्यते,—आदौ तावत् ग्रहनक्षत्रादीनामुपादानम्। जगदिद-मखिलमेव भौतिकम्, अत एव भूतेभ्योऽनान्तरधर्म्मि। किञ्चिदपि वस्तु समग्रेऽपि विश्वेऽस्मिन् नास्तीत्र। सुतरामेवाङ्गीकृतं तेषामपि भौतिकत्वम्! ननु वसुन्धरापीयं भौतिकेय, तत् किं न दृश्यते तस्यां कुत्रापि स्वर्णस्य कुत्र वा हीरकस्य कुत्र वा अभ्रस्य कुत्र वा लौह-स्यैवाधिक्यम्! तदा सम्भवेत् खलु यत् सर्व्वे ग्रहादयः यथा पृथिवी तथैव, अथवा तेषु केषुचित् स्वर्णस्य अन्येषु मरकतस्य अपरेषु च प्रवालस्याधिक्यं तत्तन्मयत्वं वा। किमत्रोत्तरं विधेयम्! सत्यामपि विविधग्रहप्रकोपप्रत्यूहव्यूहनिरासार्थं विविधरत्नधारणपद्धतीनां दान-व्यवस्थायां न प्रगल्भो वयं वक्तुं तथ्यरूपेण तेषाञ्च ध्वंसनेः अर्थः सम्बन्धम्। परन्त्विदानीं पाश्चात्यानां सुधियां प्रभावेण अनायासेनैव जानीमः ग्रहाणामुपादानानि। पृथक् पृथक् दह्यमानं वस्तु विभिन्नवर्णाः शिखाः उत्पादयति, अनेनैव सूत्रेण आकाशस्थज्योतिः-नक्षत्रादिभ्यो विनिःसृतान् रश्मिनिकरान् आलोकमुकुरेण वस्तुनिर्वाचक-यन्त्रेण विश्लेषयन्तः येभ्यो वस्तुभ्यस्ताद्युतयो विनिर्गतास्तान्यपि निर्वा-

रयन्ति। यन्त्रमिदं स्पेक्ट्राम् ( Spectrum ) नाम्ना परिचितम्। तथा अन्यैरप्युपायैः तथ्यानि निरूप्यन्ते, सन्ति तावदुल्कापिण्डानि यानि खलु वस्तुत एव ग्रहेभ्यः सदा पतन्ति। उल्कानां पातः खलु प्रतिनिशमेव यन्त्रयोगेन द्रष्टुं शक्यते। तासामुल्कानां क्षुद्रावयवत्वात् अनेका एव वियद्वर्त्मन्येव रेणुषु विलीयन्ते, काश्चन पुनः पृथिव्यां पतन्ति। आसामुल्कानां शकलानि समुद्रगर्भे प्राचुर्य्येण लभ्यन्ते। उल्कापिण्डानि खलु ग्रहाणामेवांशभूतानि—सुतरां लब्धशकलानां विश्लेषणेनापि साधारण्येन ग्रहाणामुपादानभूतानि निरूप्यन्ते। एभिरुपायैर्लब्धफलैः एतदेव ज्ञातं, यत् सामान्यतः—ग्रहनक्षत्रतारकादिषु, लोहाङ्गारनागचूर्णानां तथाधुना कारबन् हाइड्रोजेन्नाइट्रोजेन् तथा सोडियामाख्यानां ( Carbon, hydaogen, nitrogen x sodium ) मूलद्रव्याणामेवाधिक्यम्। अनन्तरं जिज्ञास्यं—कथं तानि दीप्यन्ते ? अपि सूर्य्यादयः ग्रहा हीरकादिवदुज्ज्वलावयवाः ? अथवा पृथिव्यादिवत् अनुज्ज्वलकलेवराः ? वैज्ञानिकाः खलु उत्तरमतमेव समर्थयन्ति, पूर्व्वमेवोक्तं सन्ति केचन ग्रहा इदानीमपि ज्वलदङ्गारसन्निभा उत्तप्ताः, अपरे च शीतलितकलेवराः, किन्तु नैषां सर्व्वेषामेव शीतलता उत्तप्तता वा औज्ज्वल्यं प्रति कारणम्।

सर्व्वा एव क्रियाः कारणानां समवायमपेक्षन्ते, नैकमपि कारणं विना क्रिया भवितुमर्हति, अत्रापि सर्व्वेष्वपरेषु। नक्षत्रादीनामौज्ज्वल्यविषयेऽपि एषैव कथा प्रयोज्या। तत्र सूर्य्यादीनां बहूनामेव ग्रहाणां स्वकमेवौज्ज्वल्यमस्ति, सन्ति चान्ये दीप्तिविरहिताः। तत्र दीप्तिमन्ति नक्षत्राणि सूर्य्यादिवत् ग्रहा वा पार्श्वस्थितानन्यानपि ग्रहप्रभृतीन् दीपयन्ति, सन्ति नक्षत्राणि सूर्य्यादिवत् ग्रहा वा पार्श्वस्थितानन्यानपि ग्रहप्रभृतीन् दीपयन्ति,—सुतरामनुज्ज्वला अपि ते प्रतिफलितभानुरश्मिमालाः मलिनविमलचन्द्र इव कान्तिमन्त एव

दृश्यन्ते। किन्तु यथा तथैव भवतु, किरणप्रतिवेश एव औज्ज्वल्यं प्रति प्रधानं कारणम्। सन्ति तत्र संख्यातीताः खेचरा येषां स्वकमौज्ज्वल्यं दीप्तग्रहान्तरेभ्यो विनिःसृतप्रतिफलितरश्मीनां दीप्तिरपि नास्ति, किन्तु तेऽपि दीप्यन्त एव। अस्य कारणं खलु ग्रहाणामालोकप्रतिवेशः। ग्रहान् संवेष्ट्य समीरणः सर्व्वत्रैव वर्त्तते अस्ति च ग्रहान् संवेष्ट्य दाहकवाष्पराशिः (Onygen) यत्र स्वल्पे तौ वर्त्तेते न तत् प्रदेशः नितरामेवोज्ज्वलो दृश्यते, सुतरां सर्व्वेऽपि ग्रहाः स्वभावदीप्ताः स्वभावतिमिरिता वा दीप्ता एव दृश्यन्ते। यत्र तु दाहकवाष्पस्याभावस्तत्र दीप्तोऽपि नभश्चरवायुमण्डलावगुण्ठित-विग्रहः नयनगोचरतां नैत्येव, किन्तु तथाविधं स्थानं प्रायेण विरलम्। परवर्त्तिनी जिज्ञासा खलु, कथं ते—विहायस्येव अन्ति-ष्ठन्ते, कथं वा न पतन्ति। अत्र—भास्करसिद्धान्तस्यैव प्रामाण्यम्। भास्करो वदति यत् तत्र किञ्चित् पतनमेव नास्ति। एतत्प्रसङ्गक्रमेण वियन्मण्डले स्थिता निरालम्बा पृथ्वी कथं न पतति, तस्य व्याख्यान-क्रमेण माध्याकर्षणमेव पतनकारणमित्याह। यत्—

"आकृष्टशक्तिश्च मही तया यत् खस्थं गुरु स्वाभिमुखं स्वशक्त्या।
आकृष्यते तत् पततीव भाति स मे समतात् क्व पतत्वियं खे।" इति—

अत्राकर्षणनियमसम्बन्धे गतिबलविज्ञानमपि किञ्चिदालोच्य-मिवाभाति। स्वीक्रियते चेत् सर्व्वेषामेव ग्रहाणामियमाकर्षणी शक्तिरस्त्येव, तदा सर्व्वं खलु परस्परमाकर्षयन्त्येव। किमत्र पतनम्? तत्र परिच्छिन्नवस्तुनः परिक्षेपबलेन प्रतिमुहूर्त्तमेव यावती गतिः सा प्रवृत्तिगतिः (Velocity) इति व्याख्यातारो व्याख्यान्ति। इयं परिवर्त्तनशीला। कथं—अस्ति च तत्र निवृत्ति-गतिः याः खलु परिच्छिन्नं वस्तु पृथिव्याः प्रतिमुहूर्त्तं समाकर्षति (accilarofion) इयमपरिवर्त्तिनी, परन्तु प्रवृत्तिगतेः परिवर्त्तन-साधिका। तत् किमपि वस्तु क्षिप्यते तदा, क्षेपमबलं ऊर्द्ध्वं नयति

तिर्य्यग्वा यस्यां कस्यामपि दिशि वा, परन्तु निवृत्तिगतिः सत्वरन्तु अधः समाकर्षति प्रतिमुहूर्त्तं प्रायो द्वाविंशतिहस्तवेगेन। ( 32 fot ) किञ्चिद्यं निवृत्तिगतिः न खलु सर्व्वत्रैव प्रभाववती, अस्ति च प्रदेशः, यत्र निवृत्तिगतेः प्रतिकूलधर्म्मा एतावानेव प्रबलो यत्—सा कथमपि परिच्छिन्नं वस्तु अध आनेतुं न शक्नोति। आधुनिका वैज्ञानिकाः पृथिव्या उपरिष्टात् पञ्चाशद्योजन ( mile ) परिमितं स्थानमेव वायोरवस्थानभूमिं निर्द्दिशन्ति, तत्र क्रमशः अधस्तादस्य आपेक्षिकगुरुत्वं गुरुतरम्, न खलु शक्नोति सर्व्वस्मादेव स्थानात् निवृत्तिगतिः वस्तूनि समानेतुम्। अस्माकं शास्त्राणि तु विभिन्नेषु प्रदेशेषु विभिन्नानां वायूनां अस्तित्वं संवादयन्ति। उक्तञ्च सिद्धान्तग्रन्थे—

"आवहः प्रवहश्च व तथैवानुवहः परः।
संवहो विवहश्च व तदूर्द्ध्वं स्यात् परावहः।
तथा परिवहश्चाद्र्धं वायोव सप्तनेमयः॥" इति—

अपि चात्र व्यासः—"नभसि यथा मेघाः श्येनादयो वायुवशाः कर्म्मसारथयः परिवर्त्तन्ते—एवं ज्योतिर्गणाः प्रकृतिपुरुषसंयोगानुगृहीताः कर्म्मनिर्म्मितगतयो भुवि न पतन्ति।

नक्षत्राणां ग्रहाणाञ्चापतनाय तेषां विभिन्नधर्म्मेषु वायुमण्डलेष्ववस्थानमेव कारणम्। परवर्त्तिजिज्ञास्यं कथं ते स्वस्थानेभ्यो न भ्रश्यन्ति? तेषामपतनस्य कारणं व्याचक्ष्महे प्रसङ्गेनैव व्याख्यातमेतत् प्राक्, पुनश्च तेषु परस्पराकर्षणमेव स्थिरतायाः नियामकमित्यपि वक्तुं युज्यत एव। अनन्तरजिज्ञास्यं तारकाप्रभृतयः कथं स्वासु कक्षासु भ्राम्यन्ति? केचित् वदन्ति यत्—यस्याः खलु अदृष्टशक्तेः सर्गादौ गतिरजायत, सर्व्वाणिव भूतानि गमनशक्तिमलभन्त—( attraeson of remulseon ) अण्डकदम्बकमपि तस्या एव गतिमलभत। उदाहरणेन चैटं

स्फुटीभविष्यति। तद्यथा—पूर्व्वमेवोक्तं यत्तेजोवारिणोः माध्यमिकं रूपं किञ्चिदप्यासीत्, तस्तु वस्तुजातं अदृष्टशक्तिपरिचालितं भ्रमदेवासीत्, पुनस्तस्मात्तु सूर्य्यसदृशाः भ्रमन्तो महाग्रहा जज्ञिरे, तेभ्यश्च वृहस्पत्यादयो ग्रहाः, तेभ्यश्च चन्द्रादय उपग्रहाः। जन्यजनकसम्बन्धात् सर्व्वे एवैषां स्वस्वजनकेभ्यो गतिशक्तिमलभन्तेति। अपरे च वदन्ति, यत् यस्मिन् खलु प्रदेशे ग्रहा अवस्थिताः, स खलु देशः भ्रमतो वायोः प्रवहस्य स्थानं, सुतरामेव ग्रहा भ्राम्यन्ति।

उक्तञ्च सूर्य्यसिद्धान्ते—

"भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः।
पर्य्यत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम्॥" इति—

सिद्धान्तशिरोमणौ च—

"भूमेर्बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्यम्।
तदूर्द्धगो यः प्रवहः स नित्यं प्रत्यग्गतिस्तस्य तु मध्यसंस्था॥
नक्षत्रकक्षाः खचरैः समेता यस्मादतस्तेन समाहतोऽयम्।
भपञ्जरः खेचरचक्रयुक्तो भ्रमत्यजस्रं प्रवहानिलेन॥" इति

इदानीन्तु ग्रहनक्षत्रादीनां संख्यापरिमाणावस्थानानि प्राधान्येन विज्ञापयितव्यानि। नक्षत्राणां ध्रुवे एव प्रधाने। तत्र द्वे ध्रुवे—विषुवरेखायाः अक्षकोटिद्वयमाक्रम्य—मेरुद्वयस्य चोपरिष्टात् स्थिते। पृथिव्या मण्डलाकारत्वादस्याः केन्द्रदेशाच्छ्राया ऋते कस्मादप्यन्यस्मात् स्थानात् द्वेऽपि तेनैव प्रेक्ष्येते। उक्तञ्च सिद्धान्तशिरोमणौ—

"निरक्षदेशे क्षितिमण्डलोपगौ ध्रुवौ नरः पश्यति दक्षिणोत्तरौ।
तदाश्रितं खे जलयन्त्रवत्तदा भ्रमद्भचक्रं निजमस्तकोपरि॥
उदग्दिशं याति यथा यथा नरो तथा तथा स्वान्नत ऋक्षमण्डलम्।
उदग्ध्रुवं पश्यति चोन्नतं क्षितेस्तदन्तरे योजनजाः पलांशकाः॥
सौम्यध्रुवं मेरुगताः खमध्ये याम्यञ्च दैत्या निजमस्तकोर्द्ध्वे।
सव्यापसव्यं भ्रमदृक्षचक्रं विलोकयन्ति क्षितिगाः प्रसक्तम्॥

अचले खल्वेते नक्षत्रे। आधारभूते चेते चौम्यकक्षाः। ध्रुवस्थानमन्तरेण ज्योतिर्विदः पदमात्रमपि प्रसर्त्तुं न शक्नुवन्ति। अन्यनक्षत्रसम्बन्धात् ध्रुवसम्बन्ध एव पृथिव्या बलवान्।

ध्रुवानन्तरं सप्तर्षिमण्डलमेवास्माकं दृष्टिं समाकर्षति। तेषामवस्थानविषये तु श्रीधर एवमाह—

"प्रागग्रशकटाकारं तारासप्तकं सप्तर्षिमण्डलम्। तत्र किञ्चिदुन्नतरेखास्थानीयो मरीचिः। ततः पश्चादानम्रयुगकन्धराकारो वसिष्ठः सभार्य्यः। ततः पश्चादीषदुन्नतरेखामूलस्थानीयोऽङ्गिराः। ततः पश्चात् चतुरस्रताराचतुष्के ऐशान्यामत्रिः, ततो दक्षिणतः पुलस्त्यः। पुलस्त्यात् पश्चिमतः पुलहः, तत उत्तरतः क्रतुः। ततो नक्षत्रचक्रमस्माकं जिज्ञासितव्यम्। तत्र सप्तविंशतिः नक्षत्राणि भवन्ति, एकेनाभिजिता तु तेषां संख्या अष्टाविंशतिरेव, यथोक्तं व्यासेन चन्द्रमस उपरिष्टात् द्विलक्षयोजनतो नक्षत्राणि मेरुं दक्षिणेनैव कालायनईश्वरयोजितानि सहाभिजिताष्टाविंशति"रिति।

( क्रमशः। )

# जातिबाधकविचारः।

( लेखकः—श्रीकालीपदतर्काचार्य्यः। )

( पूर्वतोऽनुवृत्तः। )

तादृशविशिष्टप्रतियोगितानिरूपकस्य च तादृशताहृशाभावस्य स्वप्रतियोगितावच्छेदकघटत्वाद्यवच्छिन्नाधेयतानिरूपिताधिकरणतया सहैव विरोधकल्पनात् घटानधिकरणे घटत्वावच्छिन्नाधेयतानिरूपिताधिकरणताया असत्त्वेन घटत्वावच्छिन्नप्रतियोगिताका-

भावस्येव पटाधिकरणे द्रव्यत्वावच्छिन्नाधेयतानिरूपिताधिकरणतया विरोधिन्याः सत्त्वेन न द्रव्यं नास्तीत्याकारकस्य द्रव्यत्वावच्छिन्न-प्रतियोगिताकाभावस्य प्रतीतिप्रसङ्ग इति सर्व्वं सुविशदम्। इत्यञ्च सर्व्वत्रैव वृत्तिपदार्थप्रतियोगिकाभावस्थले प्रतियोगितावच्छेदकाव-च्छिन्नाधेयतानिरूपिताधिकरणतया सह तादृशधर्म्मावच्छिन्नप्रति-योगिताकाभावस्य विरोधितायाः क्लृप्तत्वात् विशिष्टाभावस्थले वैशिष्ट्य-भावस्य अवच्छेदकत्वं नैव विचारसहतामवलम्बते, घटानधिकरणे पटाधिकरणभूतलादौ द्रव्यत्ववैशिष्ट्यावच्छिन्नाधेयतानिरूपिताधि-करणतया द्रव्यत्ववैशिष्ट्यावच्छिन्नप्रतियोगिताकाभावविरोधिन्याः सत्त्वेन द्रव्यत्वविशिष्टघटो नास्तीत्याकारकस्य द्रव्यत्ववैशिष्ट्यावच्छिन्न-प्रतियोगिताकाभावस्यापि प्रतीत्यनुपपत्तेः। स्वमते तु द्रव्यत्वविशिष्ट-घटो नास्तीत्याकारकस्य द्रव्यत्वविशिष्टघटाभावस्य द्रव्यत्ववैशिष्ट्यघटत्व-धर्म्मद्वयावच्छिन्नप्रतियोगिताकतया स्वप्रतियोगितावच्छेदकतादृश-धर्म्मद्वयावच्छिन्नाधिकरणतया सह द्रव्यवैशिष्ट्यमात्रावच्छिन्नप्रति-योगिताकस्य च द्रव्यत्वविशिष्टो नास्तीत्याद्याकारकाभावस्य द्रव्यत्व-वैशिष्ट्यनिष्ठावच्छेदकताकनिरूपकतानिरूपिताधिकरणतया सह विरोधात् द्रव्यत्वविशिष्टघटानधिकरणे तादृशपटाधिकरणे भूतलादौ न द्रव्यत्वविशिष्टघटो नास्तीत्यभावप्रतीतिरनुपपत्तिः, द्रव्यत्ववैशिष्ट्य-घटत्वधर्म्मद्वयावच्छिन्ननिरूपकतानिरूपिताधिकरणतायास्तत्र अवर्त्त-मानत्वात्।

एवमुभयाभावस्थलेऽपि न केवलमुभयत्वमेव प्रतियोगितावच्छेदक-मभ्युपगन्तुं शक्यते। घटपटोभयाभाववद्भूतलमिति प्रतीतिदशायां केवलेनोभयत्वेन रूपेण उभयवद्भूतलमिति प्रतीतेरपलापापत्तेः, न च प्रतियोगितावच्छेदकोभयत्वांशे तत्र तत्र घटपटोभयनिष्ठत्वादिकं प्रतियोगितावच्छेदकतावच्छेदकतया भासताम्, तत एव अभावस्य वैलक्षण्यस्य साधयितुं शक्यतया उभयवानिति प्रतीतौ तादृशधर्म्मस्य

प्रकारतावच्छेदकतावच्छेदकत्वाभावेन च प्रतीत्यपलापनिराकरण-सौकर्य्येण सामञ्जस्यमिति वाच्यम्, तथात्वे तादृशोभयनिष्ठत्वघटकतया घटत्वपटत्वादीनामवश्यप्रवेशेन महागौरवापेक्षया घटत्वपटत्वोभयत्वेषु त्रिष्वेव अवच्छेदकत्वकल्पने लाघवसम्भवात्। तथाच सति घटत्वपटत्वोभयत्वरूपधर्म्मतयावच्छिन्नप्रतियोगिताकस्य घटपटोभयं नास्तीत्यभावस्य ज्ञानं घटत्वपटत्वोभयत्वधर्म्मतयावच्छिन्नप्रकारकज्ञानं प्रत्येव विरोधीति स्थिते उभयत्रानिति प्रतीतेः केवलोभयत्वावच्छिन्न-प्रकारकत्वसत्त्वेन तादृशधर्म्मतयावच्छिन्नप्रकारकत्वाभावात् न निरुक्तोभयाभावप्रतीत्या तत्प्रतिबन्धः, प्रतिबन्धश्च घटपटोभयवानिति घटत्वपटत्वोभयत्वरूपधर्म्मतयावच्छिन्नप्रकारिकायाः प्रतीतेरिति।

तदन्यत्वव्यापकत्वस्यायं निष्कर्षो यथा—"स्वाधिकरणनिरूपित वृत्तितावद्भेदनिरूपितप्रतियोगितानिरूपितत्वनिष्ठावच्छेदकता भिन्ना सती या अवच्छेदकतात्वनिष्ठावच्छेदकता भिन्नावच्छेदकता तदनिरूपिका या तादृशावच्छेदकत्वनिष्ठाप्रतियोगिता तन्निरूपका-ऽभावः। सम्बन्धादीनां निवेशस्तु पूर्व्वदर्शितदिशा अवसेय एव, अन्यथा प्रागुक्तदोषग्रासादनिस्तारादिति।

अथ कलसत्वादौ जातित्वाभावसाधने स्वभिन्नजातिसमनियतत्व-घटकस्वभिन्नजातिपदेन पृथिवीत्वादीनामपि लाभात् तत्समाना-धिकरणभेदप्रतियोगितानवच्छेदकत्वस्य असम्भवेन स्वरूपासिद्धिरिति चेन्न स्वव्यापकत्वस्वव्याप्यत्वोभयसम्बन्धेन स्वभिन्नजातिविशिष्टत्वमेव बाधकत्वकल्पनया तद्दोषविरहात्; तत्र सम्बन्धघटकस्वपदेन तत्तद्व्यक्तीनामेव स्वत्वविशेषेण धर्त्तुं शक्यतया कलसत्वादिपक्षक-जातित्वाभावसाधनदशायां स्वपदेन घटत्वादीनामेव धारणात् स्वरूपा-सिद्धिदोषनिरासस्य शक्यत्वात्। सम्बन्धघटकं व्याप्यत्वञ्च तत्तद्व्यक्ति-त्वावच्छिन्नाभाववदवृत्तित्वं अभावश्च समवायसम्बन्धावच्छिन्नप्रति-योगिताको ग्राह्यः। अन्यथा संयोगसम्बन्धेन घटत्वगततद्व्यक्तित्वाव-

च्छिन्नाभाववति घटे वर्त्तमानत्वात् कलसत्वे घटत्वव्याप्यत्वस्य अभावेन स्वरूपासिद्धितादवस्थ्यात् प्रकृतसम्बन्धनिवेशे च समवायेन घटत्व-व्यक्त्यभावस्य घटे असत्तया तद्वति घटत्वाधिकरणातिरिक्ते च कल-सत्वस्यावृत्त्या नोक्तदोषः। अभाववत्त्वञ्च दैशिकविशेषणताविशेष-सम्बन्धेन अन्यथा घटत्वादिवृत्तितत्तद्व्यक्तित्वावच्छिन्नसमवायसम्बन्धा-वच्छिन्नप्रतियोगिताकाभावस्यापि कालिकेन सम्बन्धेन घटादौ वर्त्त-मानतया तन्निरूपितवृत्तितायाः कलसत्वादौ सत्त्वे न स्वरूपासिद्ध्यव-तारात्। स्वपक्षे तु घटत्वव्यक्त्यभावस्य स्वरूपसम्बन्धेनाधिकरणं न घटः, किन्तु पटादिरेव तद्व्यक्तित्वावच्छिन्नाधिकरणतया सह तद्व्यक्ति-त्वावच्छिन्नप्रतियोगिताकाभावस्य विशेषणताविशेषेण विरोधात्, घटे घटत्वव्यक्त्यधिकरणतायाः सत्त्वे न पटादौ च तस्या अभावेन तत्र च कलसत्वस्यावृत्तेः स्वभिन्नजातिसमनियतत्वरूपस्य बाधकस्य निराबाध-तया सिद्धेन स्वरूपासिद्धिशङ्कापि। अत्र वृत्तित्वं स्वरूपसमवायान्य-तरसम्बन्धावच्छिन्नं ग्राह्यं, तेन समवायसम्बन्धावच्छिन्नप्रतियोगिताक-घटत्वव्यक्त्यभाववति स्कन्दादौ कालिकेन सम्बन्धेन कलसत्वस्य वृत्तता न स्वरूपासिद्धिः, नापि घटत्वव्यापके पृथिवीत्वादौ घटत्वव्यक्त्यभाव-वन्निरूपितस्वरूपसम्बन्धावच्छिन्नवृत्तित्वाभाववत्त्वात् व्यभिचारः, नापि च हेत्वप्रसिद्धिशङ्का। वृत्तित्वाभावश्च स्वरूपसम्बन्धावच्छिन्न-प्रतियोगिताकवृत्तित्वसामान्याभावो वाच्यः। तन्निवेशरीतिरित्थं यथा——स्ववृत्तिद्वयावृत्तिधर्मनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानि-रूपिका या प्रतियोगित्वसम्बन्धावच्छिन्नावच्छेदकता स्वनिष्ठा तद्भिन्ना सती या अभावत्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपिका या अभावनिष्ठावच्छेदकता तद्भिन्ना सती या अधिकरणत्वनिष्ठाव-च्छेदकताभिन्नावच्छेदकता तदनिरूपिका या अधिकरणनिष्ठावच्छेद-कता तद्भिन्ना सती या वृत्तित्वनिष्ठावच्छेदकताभिन्नावच्छेदकता तदनिरूपिका या वृत्तित्वनिष्ठा स्वरूपसम्बन्धावच्छिन्नप्रतियोगिता-

तन्निरूपकः प्रभावः । जलत्वे तदृत्तिघटवृत्तित्वविशिष्टघटत्वव्यक्त्य-भाववदृत्तित्वस्य तादृशसामान्याभावासिद्धा जातित्वबाधानुपपत्तिकरणाय प्रथममनिरूपिकान्तम्, पृथिवीत्वादीनामपि जलवृत्तित्वविशिष्टघटत्वव्यक्त्यभाव-वदृत्तित्वात् . व्यभिचारवारणाय द्वितीयमनिरूपिकान्तम् । तथैव घटत्वव्यक्त्यभावाधिकरणजलादिवृत्तित्वाभावं घटत्वव्यक्त्यभावाधिकरणवृत्तित्वघटत्वोभयाभावादिकमादाय तद्दोषतादवस्थ्यवारणाय तृतीयं चतुर्थञ्च अनिरूपिकान्तमुपादेयमेव । वस्तुतस्तु उभयत्वेन रूपेण व्यापकत्वव्याप्यत्वयोः संसर्गतामपेक्ष्य व्यापकत्वे सति व्याप्यत्वस्य संसर्गत्वमेव लाघवादुपेयते, न च उभयत्वापेक्षया तत्र कीदृशं लाघवम्, तत्रापि सति सप्तम्याः सामानाधिकरण्यार्थकतया स्वव्यापकत्वसमानाधिकरणस्वव्याप्यत्वस्य पर्य्यवसाने प्रत्ययादिति वाच्यम्,तत्र कल्पे सामानाधिकरण्यस्य प्रवेशेऽपि उभयत्वकल्पापेक्षया लाघवावकाशात् तथाहि उभयत्वं अपेक्षाबुद्धिविशेषविषयत्वं न तु द्वित्वसंख्यव, "गुणादिर्निर्गुणक्रिय" इति नियमेन अभावरूपव्यापकत्वव्याप्यत्वयोस्तदसम्भवात्,न चायं अपेक्षाबुद्धिविशेषः "अयमेकः अयमेकः" इत्याकारकः इदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वावच्छिन्नेदन्त्वावच्छिन्नविशेष्यतानिरूपितैकत्वप्रकारताकत्वविशिष्टः, सामानाधिकरण्यन्तु समानाधिकरणवृत्तित्वमात्रमिति सुस्पष्टमेव लाघवमितरपक्षे । न च उभयत्वस्य संख्यात्वमनङ्गीकुर्व्वतामपि एकविशिष्टापरत्वरूपत्वे स्वीकृते न किञ्चिद्गौरवमुभयत्वेन सम्बन्धनिवेशेऽपि, परन्तु तत्कल्पे सामानाधिकरण्यसम्बन्धेनैव वैशिष्ट्यात् तुल्यतैवोभयोः पक्षयोरिति वाच्यं, घटत्वपटत्वोभयमित्यादि प्रतीत्या विरुद्धयोरपि पदार्थयोरुभयत्वस्य विषयीकरणात् उभयत्वप्रतीतेः सर्व्वत्र तुल्यत्वाच्च तथा स्वीकर्त्तुमशक्यतया तादृशापेक्षाबुद्धिविशेषविषयतारूपस्य तस्याङ्गीकारादिति धेयम् । अथ तथा निवेशे प्रतियोगितावच्छेदकभेदमन्तरेण अभावभेदस्यासम्भवात् सामान्याभावरूपस्य स्वभिन्नजातिव्याप्यत्वस्य स्वभिन्नजातिव्यापकत्व-

सामानाधिकरण्येन कस्यापि वैलक्षण्यस्य साधयितुमशक्यत्वेन खभिन्न-पृथिवीत्वादिव्याप्यघटत्वादिजातौ व्यभिचारो दुर्निवारतां धत्ते, पृथिवीत्वाधिकरणत्वाद्यन्तर्भावेण स्वभिन्नपृथिवीत्वादिजातिव्याप्यत्वे पृथिवीत्वादिजातिव्यापकत्वसामानाधिकरण्यस्य समन्वयेन घटत्वादावपि विशिष्टस्य वृत्तेरिति चेन्न अधिकरणव्यक्तिभेदेनापि अभावव्यक्तिभेदस्य अङ्गीकृततया पृथिवीत्वाधिकरणत्वादिवृत्तिताहृशव्यापकत्वसमाना-धिकरणा ताहृशव्याप्यत्वरूपा अभावव्यक्तिः पृथगेव घटत्ववृत्तिस्तु ङ-व्याप्यत्वरूपाभावव्यक्तिः, अत एव साध्याभाववदवृत्तित्वमिति व्याप्ति-प्रथमलक्षणे पूर्व्वनिबन्धृभिः कपिसंयोगी एतद्वृक्षत्वादित्याद्यव्याप्य-वृत्तिसाध्यकसद्धेतावव्याप्तिमाशङ्क्य साध्यवद्भिन्नसाध्याभाववदवृत्तित्वा-मिति द्वितीयलक्षणमुपन्यस्य तन्निराकरणमुपक्षिप्तम्। अधिकरण-भेदेन अभावभेदानभ्युपगमे एकस्यैव कपिसंयोगत्वाद्यवच्छिन्नप्रति-योगिताकस्य अभावस्य कपिसंयोगादिरूपसाध्यवद्भिन्नगुणादौ हेतुमति वृक्षादौ च वर्त्तमानतया कपिसंयोगी एतद्वृक्षत्वादित्यादौ द्वितीयलक्षणस्याप्यव्याप्तिरेव प्रसज्येत। न च एवमपि अधिकरण-भेदेन अभावभेदः सुकरः सम्पादयितु' यावदधिकरणगतस्य तत्तद-भावस्य ऐक्ये विद्यमानेऽपि विशिष्टाभावत्वावच्छिन्नाधिकरणताया विलक्षणतया लक्षणे साध्यवद्भिन्नसाध्याभावपदस्य साध्यवद्भिन्ने साध्या-भाव इति आधेयार्थकसप्तमीतत्पुरुषसमासनिष्पन्नत्वेन साध्यवद्भिन्नवृत्तित्व-विशिष्टसाध्याभावत्वावच्छिन्नाधेयतानिरूपिताधिकरणतानिरूपित-वृत्तित्वाभावरूपार्थलाभात् ताहृशविशिष्टाधिकरणतया एतद्वृक्षा-दावसत्त्वेन निरुक्ताव्याप्तिपरिहारस्य सुकरत्वादिति वाच्य', तथा सति साध्यवद्भिन्नवृत्तित्वविशिष्टवदवृत्तित्वमित्येतावन्मात्रस्यैव सम्यक्त्वे तल्लक्षणे गुरुतरसाध्याभावांशप्रवेशस्य वैयर्थ्यापत्तेरिति प्राचीननिबन्धे व्यक्तत्वात्, अत एव तत्र अधिकरणभेदेन अभावभेदाङ्गीकारमन्तरा नास्ति निस्तार इति चिन्त्यम्। ( सावशेषः )

# चन्द्रालोके ।

## तृतीयोऽङ्कः ।

( पूर्व्वतोऽनुवृत्तः । )

( शिक्षकः—शोधूर्व्वटिप्रवादकाव्यतीर्थः । )

### गङ्गातीरम् ।

शोभना—( साश्चर्य्यं ) तदो तदो,

सुभद्रा—तदो अदे क्खु पादाले कंवि महेसिं पेक्खिअ चोरं सम्भाविअ खनित्तएण इन्दु ं जाव उद्दा दाव सो वि महेसो अपणा·ग्गिना तानं भस्मावसेसाणं किदवम् । तदो उज्झारत्थं भधत्यम पुरिस एककक्रमेण वह्मसावमोक्खेककारणं गङ्गादेइं बहुसहस्सवस्साइं हिमालअपादान्ते तवो कदुअ विण्हु पादप्पसूदां गङ्गेदइं पुहिवीदले आणिअ ताणं पूव्वपुरिसाणं व्वह्ममावमोसणं किदवं ।

शोभना—देइ ! शान्दमुणिअणमाणस ंवि एव्वं अभारणकोवकलुषिदं त्ति सव्वं अदिमेत्तं दोसाअ ।

सुभद्रा—हञ्जे किं ण सुमरेमि खसुग्गरस्स मिअभावुत्तं ; ता सव्वं अदिदृस्स फलं ।

शोभना—देइ ! अदिगच्छेदि ण्हाणसमआ ; ता इध तित्थसिलादले परिच्छदादिअं ठाविअ अवगाहेदु ।

सुभद्रा—ता गेह्न मे पावारादिअं ; कहिं ण्हाणोवकरणाइं ।

शोभना—इमाणि क्खु तानि ।

सुभद्रा—हला अवि आणासि कुदा दानीं होवदो देइ ।

शोभना—देइ ! कहं ण आणामि सा क्खु किदावगाहा वक्खदले चिट्ठदि ।

सुभद्रा--( दृष्ट्वा ) हञ्जे पेक्ख पेक्ख कोण् क्खु एसो महाभाओ कादरो विअ वाप्फसलिलं मुञ्चन्दो सणोगदं सोआणलं मोहधूमेण पआसिअ अस्सिं गङ्गासलिले दुक्खभारदूब्भरं सरीरं विहादुं अहियादि।

शोभना—किं त्ति आअङ्कुअ इह्दा तदो पेक्खिअ विलम्बदि भोदी।

सुभद्रा—विवसाइ आसन्नअप्पदाणेण कखत्तिआणं जारिसो पुण्णसञ्चओ होदि ण तधा गङ्गाङ्काणेन अणोन केण वि जम्मेण तवसा वा ; ता तुमं चिट्ठ, अहं ज्जेव णं अनुसरेमि।

शोभना—तज्जाविदह्मि भअवदीए : ( दृष्ट्वा ) इध ज्जेव सो महाणुभाओ आअच्छदि।

सुभद्रा—ता एहि एअन्दे भविअ पेक्खह्म ( इत्येकान्ते स्थिते )

( ततः प्रविशति मार्त्ता राजा )

राजा—( दर्घं निःश्वस्य )

उत्तीर्णाः कति भूभृदर्णवनदीग्रामाटवीनाव्रतः
शक्राद्यष्टदिगीश्वराः कति गता याताः कति क्ष्माभृतः।
हा तैस्त्वरपि ताड़िता हतविधे ! अस्त्यपराधः कृता
येन क्रीड़नवद्विधाय नितरां संक्रीड़से मां चिरात्॥

कष्टं भोः कष्टम्, एवं पराभवदुःखव्रकर्षणानुदिनमतिक्षीयमाणकलेवरः कथमपि नाधुना जीवितुमुत्सहे। स्वभुजोपार्ज्जितयशःसूर्य्यदीधितिप्रदीप्तानां क्षत्रियाणां जीवनान्येव श्लाघनीयानीति शास्त्रकारा आमनन्ति। अन्यथा वीरसमरहोमानलबलीनामिव वसुन्धराभारभूतानामिव मादृशानामधन्यानां जीवनेन क उपयोगः सम्भविता। मया खलु मार्ज्जारभीतमूषिकवत् शत्रुभिया प्रतिकर्त्तुमक्षत्रियेण या समर्थेन सता भीतभीतेन सुरङ्गाद्वारेणापसृतं न मामावाशोचितं केवलमात्मत्राणाय ; धिङ्मां कापुरुषं क्षत्रियकुलपांशु-

लम्। ततश्च यदा दन्तवक्रशिशुपालजरासन्धादीन् विद्वेषिणो भूमिपालान् धार्त्तराष्ट्रांश्च साहाय्यप्रार्थनया शरणमभ्यगच्छम्, तदा तैरपि बलवत्प्रतिपक्षभयेन वा कौतुकेन वा निर्भर्त्सित आसम्। तत् क्वाधुना गच्छामि, किं करोमि, को मे शरणं भविष्यति। (सवाष्पं) हा जनक! कथमेतावतीं कुलपांशुलाय मे पुत्रत्वेनाङ्गीकृत्य राज्यभारं समर्पितवान्। सर्व्वथा हता मे मनोरथा नष्टाश्च जीविताशाः। (अग्रतो दृष्ट्वा) तदस्मिन्नेव गङ्गास्रोतसि निक्षिप्यात्मानं प्राणांस्त्यक्ष्यामि। (जानुनी पातयित्वा) भगवति भागीरथि! क्षमतां मे पापकलुषितात्मनो निमज्जनापराधम्। उर्व्वशि! देवि! प्रियतमे! जन्मान्तरेऽप्यविच्छेद्यसौहृद्या भवेति चिराकृतकोऽयं जनोऽनुरज्यताम्। (विचिन्त्य) अथवा का नाम त्वत्सङ्गमसुखाशा, यतः खलु नरकमिवात्मघातिनां भवत्यसूर्य्यम्पश्यं नाम तत् कथं देवभोग्यया तया सह मे मिलनम्। (आकाशे) अयि भो मदनुगताः प्रधानपुरुषाः! एवममातिविदितारं कापुरुषं राजानमिव मन्यमाना हताः स्थ वञ्चिताः स्थ। (बन्धनमुन्मोचयन्) प्रिये! गच्छ बलवन्तं कृष्णमन्यं वा कमपि महाभागम्, अहो शान्तिः!!! अधुना व्यर्थकामस्य मे जीवनं विडम्बनम्। (गङ्गाया मवतरति) तदिदानीमात्मानं निक्षिपामि। (सहसा परावृत्य) प्रिये! त्वामपहाय नोत्सहते पदं प्रयातुम्। (दृष्ट्वा) अश्रुमुखि! कथं त्वमप्येवं कातरासि? किं करोमि हताशस्य मरणमृते नान्यथा गतिः। तद्गच्छ। (प्राञ्जलिः) देवि! रविकुलदेवते! भागीरथि;

आजीवनं तव पदाम्बुजसेवकोऽहं
संसारदुःखजडितः कृतवांश्च यत् यत्।
तत्तत् क्षमस्व मरणाय कृतोद्यमस्य
देवि! त्वदीयमलिने विमले समीरे॥

सुभद्रा—( ससम्भ्रमं ) तुवर तुवर अज्ज ! एसु महाराओ असरणो भविअ अत्तिं ज्जेव भाइरहीसलिले अप्पाणं गच्छेदि विसज्जेदुं ।

शोभना—(अपसरोभूय) महाभाअ ! इअं असरणसरणा अज्ञाणं महादेइ कधेदि "इमादो दुव्ववसिदादो निव्वत्तेहि" त्ति ।

राजा—( दृष्ट्वा ) हा धिक् कष्टं स्त्रियोऽपि परिपन्थिन्यः ( विचिन्त्य ) अथवा स्वभावकरुणमय्यस्ता यत् किञ्चिदस्मान् व्याहरन्ति तस्मादङ्गनानामनभिमतमेव । ( जलावरणमभिनीय ) अहो मरणं नाम यथा सुखाय न तथा मादृशानां दुःखाय सम्पद्यते । तथाहि—

मानं सुखं सुकृतमभ्युदयं विलासं
यत्राप्नुवन्ति धनिनो बलशालिनो वा
न्याय्यस्य नास्ति गुरुता खलु, तत्र देशे—
मृत्युः सुखः परपदानतमानवृत्तेः ॥

तदन्तःसलिलं प्रविश्यात्मानमुत्मज्जामि । ( पराहृत्य ) देवि उर्व्वशि !! ( दीर्घं निश्वस्य )

धैर्यं धत्स्व मनोऽद्रिवत् स्थितिमतिप्रज्ञे !

[ विलम्ब्याचिरात्—

मृत्योर्मार्गमधः पदे ! प्रसरतं दृष्टे ! त्वमन्धोभव ।
संस्तब्धं भव बाहुयुग्म ! वधिरा जायस्व सम्यक् श्रुते !
पाप ! प्रस्फुर, धर्म्म ! लुप्य, मरणाश्लिष्ये हि मां रौरव !

( जलावतरणं नाटयति )

सुभद्रा—( उपगम्य पृष्ठे हस्तं निधाय च ) वच्छ ! एव्वं साहसं मा करेहि, अहं दे गदी सरणं अ भविस्सं त्ति पडिजाणामि । ( शोभनां प्रति ) हञ्जे सोहणे ! किं पेक्खसि महाभाअं वारेहि णं ।

राजा—( परावृत्य निर्व्वर्ण्य च ) भोः किमेतत्

किं कैलासपुरं वराभयकरा हित्वावतीर्णाम्बिका

किं वाऽस्मत्कुलदेवता किमु रमा किं भारती किं शची।

मां मृत्युव्यवसायिनं परिभवान्निर्व्वेददग्धाशयं

त्रातुं का त्वमुपागतासि विपदो विश्वासभङ्गाश्रयः॥

शोभना—महाभाअ ! एसा क्खु अह्माणं देइ इध भअदो सम्भवणं कन्दणसद्दं सुणिअ गङ्गासलिले अप्पाणं णिमज्जन्तं च पेक्खिअ कारुणिअदाए रक्खदि।

राजा—मातः ! स्त्रोऽतुलभकोमलया वाक्परम्परया यत् किञ्चिदधुना व्याहरति भवती तदस्मादृशेषु बलवत्प्रतिपक्षेषु सुदूरपराहतमेव।

शोभना—अह ! णेदं मिच्छाजप्पिदं, जदो पाण्डवकुलचूडामणि-धनञ्जयप्पिआ सुभद्दा सरणागदस्स अभअं दइअ ण उण हदप्पहिआ होदि।

राजा—(साश्चर्य्यं स्वगतं) अये ! किमियं देवी सव्यसाचिप्रिया; सत्यमेवैतत् योग्यां योग्येन योजयेद्विधिरिति।

नदी समुद्रेण घनेन विद्युत्

रात्रिः शशाङ्केन गुणेन शान्तिः।

छाया दिनेशेन दिनेन सन्ध्या

यथा तथेयं च धनञ्जयेन॥

शोभना—अज्ज तह वि किं चिन्तेदि।

राजा—(प्रकाशं) भद्रे ! सत्यमियमेव यदि सा सव्यसाचिप्रिया तदा बिभेमि अस्याः।

शोभना—कहं णाम।

राजा—पक्षाङ्गिभावेन ते हि पाण्डवाः शत्रव एव !

शोभना—अध को सो भअदो पडिवक्खो।

राजा—स हि द्वारकानाथो भगवान् वासुदेवः। अत्रमहती वार्त्ता विद्यते।

शोभना—अज्ज! एसा वि देइ से सोदरा जं णाम इध अन्नो करेदि तं संट्ठावेदुं जीअणं वि पणाइस्सदि।

सुभद्रा—हञ्जे! पुणो वि एव्वं वद मादा ण कदावि वच्छं सद्दूलमुहे निवारेदि।

राजा—(स्वगतं) यथाग्निभीता मुग्धा अभ्यग्निशलभाः पतन्ति, तथाहमपि कृष्णभयाद् जगत्परिभ्रम्य कृष्णस्वसारमाश्रयामि; तद्वचसि च विश्वसिमि। (विचिन्त्य) अथवा राजनीतिर्नाम दुरवगाहा।

तातं हन्ति सुतः पितापि तनयं स्वामी स्त्रियं स्त्री पतिं
शङ्का यत्र पदे पदे प्रियजनात्मानो विनाशं गतः।
सुच्यग्रोत्थमृगामृजां प्रवहति स्रोतस्वती च क्षणा-
द्विश्वासः किमु तत्र नातिविषमे कर्त्तुं मया शक्यते॥

(प्रकाशं) भद्रे! उच्यतां मदीयवर्त्तनेन; को नाम जलधि-मुत्तितीर्षुः प्लवमपहाय शिलामवलम्बते।

शोभना—कहं एव्वं आसङ्कदि अय्य।

सुभद्रा—हञ्जे, एव्वं वद पदितपावणसाक्खिणं कदुअ सव्वेमि पाण्डवकुलवहू मिच्छावाआणविवसं पदारेदि।

राजा—(श्रुत्वा सविस्मयं स्वगतं)

सात्रं ज्योतिर्मूर्त्तिमेषा ज्वलन्ती
दिव्या धारा क्षेत्रगङ्गाधिदेव्याः।
ज्योत्स्ना मूर्त्ता पूर्णचन्द्रस्य पुण्या
शान्तिः कीर्त्तिर्नीतिराशीयमेका॥

(प्रकाशं) नातःपरं किमपि मे वक्तव्यमस्ति; यथेवं तत् क्व मया गन्तव्यमादिशतु भवति!

सुभद्रा—अभअं अभअं सरणागदस्स ; जइ ण गोवणिज्जं ता कधेहि किं दे मह अदुणो भअं त्ति ।

राजा—मातः ! मातरि सन्तानस्य न किमपि गोप्यमस्ति, श्रूयताम् ।

सुभद्रा—अवहिदाह्मि ।

राजा—अहमस्मि दक्षिणामावन्तीपतिः । मा ऽहं कदाचिन्मृगयां गतः शापग्रस्तामप्सरूपां देवबालामुर्व्वशीं लब्धवान् । तदवगम्य भगवान् यदुवीरः कृष्णो मदनिकतकाननान्तःपाती चोटकोऽयं ममेति वाञ्छति ।

सुभद्रा—( स्वगतं ) अम्महे इअं ज्जेव मा देअस्स पुरुरवणो पत्ती एरिसीं अवत्थां गदा ?

( प्रकाशं ) भअवदि ! णमो दे ।

राजा—अथ तद्भयाद्भूमण्डलं पर्य्यटामि ; क्रमेण च दन्तवक्रशिशुपालजरासन्धप्रभृतिभिर्भूमिपालैः प्रत्याख्यातः सखिशालीमशरणो भूत्वास्मिन् भागीरथीनिर्म्मलसलिले दुर्व्विहमामान परित्यक्तुमागतः । अस्मिन्नेवावसरे आमवानमहानुभावाद्भवत्या निवारितवास्मि । अधुना तु भवत्याश्वासनयापि मे दृढं नष्टज्ञानमपि चेतो न धैर्य्यमवलम्बते ।

शोभना—महाराअ ! देइवअणेण दाणीं धोरो होहि मा क्खु दे उण विमण्णा भवे त्ति आमंसेमि ।

राजा—भद्रे ! क्व मे धैर्य्यं पराभवदुःखोद्विग्नस्य । तथाहि यस्य—

चित्तं मज्जति प्रयाति विलयं बुद्धिर्बलं नश्यति
यात्यस्तं किल राजनीतिहृदयव्याधाधिनाशस्तथा ।
दुःखं भाति सुखं विलुम्पति चिरात्स्वित्वं सपत्नायते
शोकाग्निर्हृदयं दहत्यतितरामुद्वेगधमायितः ॥

सुभद्रा—रक्ख ! मा दुक्खावेहि भअवदिवज्जए विज्जाए पोरुसेण ण किम्पि कादुं अरिहदि अणो। ( शोभनां प्रति ) हञ्जे ! सोहणि ! तुमं णं महाराअं एणां च बाहुश्रों पच्छामसोदलदले रुक्खमूले सोदलोवआरेण परिअरेहि ।

शोभना—जं देइ ! आणवेदि। ( राजानं प्रति ) इदो इदो महाराओ ।

( शोभनया सह साश्रो राजा प्रस्थितः । )

सुभद्रा—का दानीं इध चिट्ठदि ।

प्रतीहारी—( प्रविश्य ) भट्टिनि ! किं आणवेदि ।

सुभद्रा—अज्जउत्तं ( इत्यर्द्धोक्ते स्वगतं ) अहवा अहं ज्जेव उवगच्छेमि। ( प्रकाशं ) मा वहाणा भविअ चिट्ठ ।

प्रतीहारी—जं आणवेदि भट्टिणि। ( प्रस्थिता पुनः प्रविश्य ) एसो महाभाओ मज्झमपाण्डवो स आगच्छेदि। ( प्रस्थिता )

सुभद्रा—कुदो सो कुदो सो।

धनञ्जयः—( प्रविश्य ) प्रिये ! अलं सम्भ्रमेण ; अयं तहमागतः।

सुभद्रा—( सलज्जं तिष्ठति )

धनञ्जयः—प्रिये ! किमिदं श्रुतम् ; त्वया तत्रभवतोऽवन्ती नाथायाऽस्यो दत्त इति। तद्वितथमवितथं वा।

सुभद्रा—सच्चं क्खु एदं ।

धनञ्जयः—अपि त्वं न जानासि स यदुवीरो महाभागः केशवो नः सहाय इति येन च वयं देवीं मानुषोञ्च विरदमुत्तंमनायासेन समर्थाः ।

सुभद्रा—सव्वं आणामि ।

( क्रमशः )

# भारतीदशकम् ।

( लेखकः—आयुर्वेदाचार्यः श्रीहेमेन्द्रचन्द्रव्याकरणतीर्थः । )

( १ )

वेदानामिह या प्रसूतिरपि तद्वेदस्वरूपा भृशं
या वीणानिनदैः समस्तजगतां सुप्तिं हरेत्तत्क्षणात् ।
विद्या कल्पलतामभीष्टफलदां संशुद्धसत्त्वात्मिकां
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम् ॥

( २ )

यस्याः श्रीचरणारविन्दयुगलं नत्वा लुठन्मस्तकै-
र्देवैस्तत्परागरञ्जितकचैर्ज्ञानामृतं प्रार्थ्यते ।
या ब्रह्मास्यसरोजमध्यवसतिर्नारायणस्य प्रिया,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम् ॥

( ३ )

या कोटीन्दुकरप्रताननिविड़-स्निग्धोज्ज्वल-स्वप्रभा
भक्तानां हृदि सञ्चितान्धतिमिरं निर्मूलयेद्वीक्षणात् ।
यस्य ज्ञानदृशोः कटाक्षवशतो विश्वं हि देदीप्यते,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम्

( ४ )

नीलाम्भोजदलोपमाक्षिसुभगं भालस्थविन्दूकृत-
सिन्दूरारुणकान्तिपातवशतो व्याकोषवक्त्राम्बुजम् ।
या धत्तेऽम्बरमध्यवर्त्तिरविवद्भास्वत्किरीटोज्ज्वलं,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम् ॥

( ५ )

यस्याः श्रीचरणाब्धिपोतमतुलं प्राप्य विद्यार्थिनः
सर्व्वविज्ञानमहापयोधिसलिलानुत्तीर्य्य पारं गताः।
शश्वत्सुस्थिरयौवनां मृगमदामोदैर्दिशः प्लाविनीं
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम्॥

( ६ )

या विद्वद्हृदयाम्बुजातनिकरे मध्याह्नसूर्य्यायते,
मूर्खाणां जड़तासुघोरगहने सन्दीप्तदावायते।
भक्तेभ्यः सुमतिप्रदान-विषये या कल्पवृक्षायते,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम्॥

( ७ )

यत्पादाम्बुजचुम्बनाभिनिरतान् दृष्ट्वा कचान् चातक-
वृन्दं मत्तमहो सनीरजलदभ्रान्त्या भृशं धावति।
मुक्ताहारविभूषितस्तनभरैरानम्रवक्षःस्थलीं
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम्॥

( ८ )

याऽस्ते शुभ्रसरोरुहासनवरे खेलन्मरालीकुले,
हास्यैर्विश्वविकाशिनी त्रिजगतामानन्दभूः पावनी।
या विद्या-विभवैः कवित्वप्रतिभा-मुख्यैः सुतान् मण्डयेत्,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम्॥

( ९ )

या शक्तिर्मनसोऽपि नैव विषयो बुद्धिः स्मृतिश्च स्वयं,
वाग्रूपापि च वागतीतप्रकृतिर्नित्याप्यनित्या च या।

देवानामपि देवतां मतिमतां हृत्-कुञ्जसञ्चारिणीं
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम् ॥

( १० )

या "हेमेन्द्र"मनस्तडागविलसत्प्रेमावदाताम्बुजे
विद्वद्भृङ्गरतं निवेश्य चरणाम्भोजं कृपानूपुरम् ।
नित्यं वादयते कलाकुशलिनी सद्भाववीणामहो,
शब्दब्रह्ममयीं भजामि सततं तां मातरं भारतीम् ॥

## कायस्थजातितत्त्वम् ।

( लेखकौ—श्रीगौरपतिरायचतुर्धुरीणकाव्यतीर्थ. )
श्रीभूपतिरायचतुर्धुरीणकाव्यतीर्थय ।

पाठकमहाभागाः ! अद्य भवतां समीपे विचारार्थं किमपि वस्तु समुपस्थाप्यते, भवन्तः सदयमतत्यगुणदोषविचारं विधाय तत्सूचनमस्माकं प्रदास्यन्तीत्येवास्याः प्रवृत्तेरुद्देश्यं, नान्यत् इति सप्रश्रयं विज्ञाप्यते । तदत्र सकरुणं कञ्चन कालमेतदर्थं भवन्तः क्षपयन्ति चेत् कृतार्था भविष्यामः—

जातितत्त्वनिर्णयप्रकारः—

कस्याश्चन जातेः प्रकृततत्त्वनिर्णये कस्याश्चन जातेरुत्कर्षापकर्षनिर्णये वा कर्त्तव्ये अधस्तनास्त्रिविधा एव उपाया अवलम्बनीयाः— यथा—(१) तस्याः जातेः यथार्थशास्त्रनिर्दिष्टसृष्टिपर्य्यालोचनम् ( २ ) शास्त्रनिर्दिष्टवृत्तिनिर्द्धारणम्, पुरुषपरम्परागताचारव्यवहारादि-सामाजिकमर्य्यादापर्य्यवेक्षणञ्चेति ।

( १ ) आदौ तावत् चतुर्णां वर्णानामुत्पत्तिविचारे भगवान् मनुः स्वसंहितायां प्रथमाध्याये एकत्रिंशश्लोकमाह यथा—

"लोकानान्तु विवृद्ध्यर्थं मुखबाहूरुपादतः।
ब्राह्मणं क्षत्रियं वैश्यं शूद्रञ्च निरवर्त्तयत्॥" इति।

गरुड़पुराणे चतुर्थाध्याये पञ्चत्रिंशश्लोकादुपलभ्यते यथा—

"आस्याद् वै ब्राह्मणा जाता, बाहुभ्यां क्षत्रियाः स्मृताः।
ऊरुभ्यान्तु विशः सृष्टाः, शूद्रः पद्भ्यामजायत॥" इति।

पद्मपुराणे सृष्टिखण्डे तृतीयाध्याये पद्मयोनेर्ब्रह्मणो नवविधसृष्टिप्रकारस्तत्पौर्व्वापर्य्यञ्च सविशेषं वर्णितं। तत्र मानुषसृष्टिः सप्तमी, तद्विवृतिर्यथा—तृतीयाध्याये सप्तविंशत्यधिकशततमश्लोकात् एकत्रिंशदधिकशततमपर्य्यन्तश्लोकेषु "पुलस्त्य उवाच—सत्याभिध्यायिन पूर्व्वं सिसृक्षोर्ब्रह्मणः प्रजाः। अजायन्त कुरुश्रेष्ठ! सत्त्वोद्रिक्ता मुखात् प्रजाः॥ वक्षसो रजसोद्रिक्तास्तथान्या ब्रह्मणोऽभवन्। रजसस्तमसश्चैव समुद्रिक्तास्तथोरुतः॥ पद्भ्यामन्याः प्रजा ब्रह्मा ससर्ज कुरुसत्तम। तमः प्रधानास्ताः सर्व्वाश्चातुर्व्वर्ण्यमिदं ततः॥ ब्राह्मणाः क्षत्रिया वैश्याः शूद्राश्च नृपसत्तम! पदोरुवक्षःस्थलतो मुखतश्च समुद्गताः॥ यज्ञनिष्पत्तये सर्व्वमेतद्ब्रह्मा चकार ह। चातुर्व्वर्ण्यं महाराज यज्ञसाधनमुत्तमम्॥" इति।

चतुर्णां वर्णानां धर्म्मकर्म्मादिकमधिकृत्य तस्मिन्नेवाध्याये द्वात्रिंशदधिकशततमश्लोकादारभ्य द्विषष्ट्यधिकशततमश्लोकपर्य्यन्तपर्य्यालोचनया यादृशानि वस्तूनि प्रतिभान्ति, तत्समासो यथा—"यज्ञेन देवतानां परितोषात् वृष्टिर्भवति, ततश्च मानवानां परितृप्तिर्भवति, साधवस्तदर्थमेव नियतकल्याणसाधकान् यज्ञाननुतिष्ठन्ति, तेन च समुपायेन मानुषजन्मत एव स्वर्गापवर्गलाभे क्षमन्ते।

ब्रह्मणा समुत्पादिताश्चत्वार एव वर्णाः प्रथमतः निरवशेषं सदाचारनिरताः सर्व्वबाधाशून्याः स्वच्छन्दविहारिणः शुद्धान्तः-

करणाः शुद्धधर्म्मानुष्ठानपरायणाश्चासन्। तथात्वेन च अनायासमेव ब्रह्मपदं लब्धुमलमभवन्। किन्तु परतस्तत्र क्रमेण कालप्रभावतः पतनहेतुभूतकामक्रोधलोभमोहादिप्रसूतमधर्म्मबीजमुप्तमभूत्। राग-द्वेषादिसमाक्रमणेन च तासां प्रजानां स्वभावसिद्धाः सिद्धयः क्षीणात् क्षीणतरं भावं व्रजितुमारभन्त, पापतापसुखदुःखप्रभृतीनां अनभिभवनीयस्पर्शेन पराभूतास्ताः क्रमेण वृक्षदुर्गपर्व्वतदुर्गप्रभृतीनां समाश्रयणेन ग्रामनगरादिस्थापनया तेषु तेषु गृहादिनिर्म्माणेन च शीतातपादिक्लेशनिवारणाय प्राक्रामन्त। जीविकार्थञ्च नानाविधानुपायाननुशीलयन्त्यः विविधकर्म्मप्रकारानाविश्चक्रुः। तदीयचेष्टाबलेन क्रमात् धान्ययवगोधूममाषतिलादीनि शस्यानि ग्राम्या आरण्यकाश्च नानाविधा ओषधयः पृथिव्यां वृद्धिमगमन्। तदा प्रजापतिना वर्णानामाश्रमनिचयानाञ्च गुणं स्थानञ्च विशेषतो विचार्य्य धर्म्माधर्म्मौ लोकान्तरावस्थितिस्थानानि च सुव्यवस्थापिता-न्यभूवन्। वर्णाश्रमाचारमधिकृत्य प्रवर्त्तमानानां ततो निवर्त्त-मानानाञ्च कृते यथाक्रमं स्वर्गनरकादिव्यवस्थापि तेन तदानी-मुपपादिता। इति।

अथ ब्रह्मणो मानसप्रजासृष्टिप्रकरणे कायस्थजातिसमुत्पत्तिः श्रूयते। तद्यथा—तस्यैवाध्यायस्य चतुःषष्ट्यधिकशततमश्लोके—ततोऽभिध्यायतस्तस्य जज्ञिरे मानसाः प्रजाः। तच्छरीरसमुत्पन्नैः कायस्थैः करणैः सह॥ क्षेत्रज्ञाः समवर्त्तन्त गात्रेभ्यस्तस्य धीमतः।” इति।

( क्रमशः )

## श्रीश्रीशङ्करीसङ्गीतम् ।

चन्दनकुङ्कुमपङ्कचयैरनुलिम्पति कापि तदङ्गं,
उरसि दधति तयोरथ कापि कुसुमगुणमनिन्दितनङ्गम् ।
वादयते बहुविधमपि वाद्यं काचन कर्णविनोदम्
नृत्यति कापि च शिल्पविशेषविवर्द्धितमानसमोदम् ॥
भाषितमिति जयनारायणकविनाकलयत शुभगानम् ।
भक्तजनाः सततं कविनरपतिमानसतोषनिदानम् ॥

अत्रान्तरे तद्विपिनप्रवासिन-
स्तपोधना लोचनवारिवर्षिणः ।
सभक्तिभावेन तनूरुहाञ्चिता
वभाषिरे तौ जगदीश्वराविति ।

( तेथोटतालमालकोषरागेण गीयते । )

त्रिभुवनदैन्यनिरासे सततं सकरुणचित्तौ मोहमहा-
र्णवपतितान् दीनान् शरणविहीनान् ।
पापवारणवारणौ घोराङ्कुशपदकमलौ
पापिजनाग्रविगण्यान् विपथगकरणाधीनान् ।
तारयतं भवसिन्धोर्वारयतं कलिकलुषात् कुरुतं
पितरौ कृपया विषयवासविषयालुः ॥ ध्रुवम् ॥
नानापथविकलानां जगतीनाञ्च भवन्तौ सदयनसुप-
देष्टारौ श्रुतमिदमागमसूक्तम् ।
तत् किं नो दिशतोऽस्मान् प्रति कापथमथ ग्लानान्
कलुषकण्टकदलितान् मृषयत इति नदयुक्तम् ॥

काचन गतिरिह नास्ते मायानिगडविभक्तौ
युवयोः पदशरणमृते निगमोदितमिति तत्त्वम्।
अस्मान् यदि गतिहीनान् नो कृपयथ इह न तदा
केरपि घोषयितव्यं भवतोरगतिगतित्वम्॥
कृतपदयुगनतिना जयनारायणकविना
कविकुलमुदे भणितं गीतं कुरुतां सुमतिम्।
अचलमहीपतितनयाचरणसरोजं भजतां जनयतु
भवभयनिचयं सततं हरतु च कुमतिम्॥

इति स्तुतौ तौ वनचारिभिस्तै-
र्मनोऽनुकूलं वरमेव दत्त्वा।
एभ्यो महाविस्मयमागतेभ्य-
स्तिरोदधाते शुभदौ जगत्याः॥

आसोद्‌ब्रह्मकुलोद्भूतः शिवो नाम महामतिः।
तस्माज्जातो रामनाथस्ततः कौच इति स्मृतः॥
ततः शम्भुः समाजज्ञे सञ्जातश्च ततः पतः।
अजायत ततो रामस्तत्सुतो वामनोऽभवत्॥
कंसारिर्वामनाज्जातः श्रीधरश्च ततोऽभवत्।
यदुनाथस्ततो जज्ञे पाठकख्यातिमाश्रितान्॥
को ( गो ) पोकान्तस्तस्य पुत्रो रामकृष्णश्च तत्सुतः।
राजेन्द्रस्तनयस्तस्य विष्णुदेवस्ततोऽभवत्॥
दुलालश्चापि कन्दर्पो विष्णुदेवसुतावुभौ।
कन्दर्पात् कृष्णचन्द्रोऽभूत्तथा गोकुलचन्द्रकः।
अभवत् कृष्णचन्द्रस्य जयनारायणः सुतः।
अजायत सुतस्तस्य कालीशङ्करसंज्ञकः।
सुप्रज्ञाविषयानुरूपरचितं चेमङ्करं यन्मया,
सदुभक्ताय जयादिना द्विजनुषा नारायणेनाश्रितात्।

क्रूराकारणदुर्विवादघटनां पर्य्यस्यतां शङ्करी-
सङ्गीतं तदिदं सतां वितनुतां संशृण्वतां प्रीतताम् ।
इति श्रीश्रीशङ्करीसङ्गीते रासवर्णनं नाम द्वादशः सर्गः ।

शाके नागनिशीशशैलवदने पुस्तं व्यलेखीदिदं,
राधामोहनसेनकः पदयुगं काल्या विभाव्यानिशम् ।
सन्मित्रान्वयजस्य शुभ्रयशसा संप्राप्तवाबुध्वने-
र्नित्यं देवपुरीजभाज इह हि श्रीकालिदासस्य च ।
ऋर्थी याचकजालसानुफलदस्यामोददं सन्धियो,
दीनार्थव्रजदानलब्धयशसो दीनः समस्ताधनः ।
सत्प्रंगानगुणव्रजस्य गुणिनः शास्त्रव्रजग्राहिणः,
संस्तुत्ये त्वधुनासहिष्म रणभाक् श्रीकालिदासस्य च ।
भीमा भीमास्यमालाखिलखलदलना कालभीलदलश्रीः
माया जेता जयाशाशशिरुचिशुचिता हावभावप्रव्रद्धा ।
श्यामा वामा समाजो ज्वलदलकलनाकालकीनदलश्रीः
पायाद्वो रुचिदयार्द्रा शुचियारुचिता देवदेवस्य वद्धा ॥ *

समाप्तम् ।

* एषः श्लोकः पदपद्यस्थः ।

# शमामृतम्

( लेखकः—श्रीउपेन्द्रमोहनकाव्यतीर्थः। )

( १ )

दिनानि दण्डा इव यान्ति सत्वरं,
पक्षश्च यामार्द्ध इव प्रलीयते।
मासोऽप्ययो याम इवापचीयते
व्रजन्ति हा पक्षसमाः समाः क्षणम्॥

( २ )

आयुः पयोवुद्बुदवत् क्षणस्थिरं
कलेवरञ्चापि घटीव नश्वरम्।
कालश्च मा   रि इवाखुलोलुपः
समीपचर्य्यां लभते शनैः शनैः।

( ३ )

पलं पलं प्रत्यनया दिशा नरः,
क्रमेण मृत्योरतिथित्वमश्नुते।
तथापि पापेषु रतिं प्रतिक्षिपन्
न जातु पुण्याध्वनि पादमीहते॥

( ४ )

निधेहि धीमन् विहिते पदद्वयीं
विनिन्दिते वर्त्मनि मास्तु ते रतिः।
वंशानुरूपाचरणे धृतव्रतः,
सुकीर्त्तिभागेधि विधातृशासनात्॥

( ५ )

ध्वान्ते गृहान्तर्मनसा विचिन्तिते
किं नास्ति साक्षी तव कोऽपि दुष्कृते।

स वेद निःशेषमनुष्ठितं जने-
यऽनन्तनैर्व्यंगदेतदोच्यते ॥

( ६ )

अलं तदित्थं विहितार्थहेलया
कृतार्थयात्मानमुदारकर्म्मणा ।
प्रशस्तकार्य्येण यदायुषः क्षयो
न संशयः प्रत्युत वृद्धिरेव सा ॥

( ७ )

येषां प्रहृष्टाननकान्तिदृष्टये,
प्रेयानिवाभाति कृतान्तसङ्गमः ।
येषां सुखानां स्मरणेऽपि मानसं,
प्रमोदति प्रीणय तान् कुटुम्बिनः ॥

( ८ )

स्वयं सहित्वा भृशमाहितव्यथा-
मगाचरं लोकदृशां विलुम्पतः ।
न तावदेतैः प्रियदुःखविक्लवै-
वन्धुर्जलं वीक्ष्य तवानुशोच्यताम्

( ९ )

कामप्रवृत्तिः सहसा बलीयसी,
न ते पदं कारयतां कदध्वनि ।
सतामतः सङ्गमनेन मानसे,
कामावतारं प्रतिरुन्धि वन्धुरे ॥

( १० )

वृद्धोक्तिवस्तविजल्पितानि,
कृतं तदेतैरिति मावमंस्थाः

यविश्वतन्त्रस्थमदूरदर्शिनो
वृद्धाः प्रपश्यन्ति सुदीर्घदर्शनाः ॥

# "भट्टिकाव्यं तस्य रचयिता च"

( लेखकः—श्रीनगेन्द्रनाथसिद्धान्तरत्नः )

विषयविचारचतुरैः परिषद्धुरन्धरैर्निर्द्दिष्ट एव गूढविषयो विवेचितः प्रबन्धबन्धस्य विविधबुधजनबोधनस्तोषविधानाय। तथाच अशेषकलासमालोचनालोभनीयो लोकललामभूतः सुललितो विषयो "भट्टिकाव्यं तस्य रचयिता च इति।" तत्र तावत् आदावेव आदिमं वस्तु कवेर्नामेतिवृत्तादिकं निरूपणीयमिति प्रस्तावे अप्रस्तुतेतिहासादिप्रस्तावानां वस्तुत एवास्माकं वस्तुभ्रमो भविष्यतीति विभ्रान्ता इव यथाकथञ्चित् प्रस्तुमः।

अपूर्व्वप्रज्ञाप्रतिभोद्भासितैः पूर्व्वसूरिभिरपि काव्यस्यास्य कविः "भट्टिः" "भर्तृहरि"र्व्वा इत्यादिविकल्पनाजल्पनेन स्वल्पमेव समाकलितम् आकलनीयमिति विमर्शैरिव विगतहर्षैर्बभूवे। विशेषविधिविधानविबुधानाम् विगताज्ञानान्धकारनिकराणाम् आकराणामिव शास्त्रसागराणाम् अशेषकलासमालोचनेन लीलया एव खण्डितमतवादानां मल्लिनाथजयमङ्गलभरतमल्लिकानामपि काव्यस्यास्य टीकाकृतां विदामपि मतानैक्यमिति मतिहीना वयं कुत्र वर्त्तामः। ते च विदितसाहित्यादिशास्त्राः सदा वारमुख्यरीकृतदिग्विभागा मतवादखण्डनेन विगाढ़मानशास्त्रपारावाराः जयमङ्गलमल्लिनाथादयो भट्टिकाव्यस्य कविः भट्टिनामेति पद्यं समोचमाषया इत्या समोचन्ते। तथाच जयमङ्गलः "श्रीस्वामिसूनुः भट्टिनामा कविः रामकथाश्रयं महाकाव्यं चकार।" इति परिसमाप्तावपि "इति

श्रीस्वामिसूनोर्भट्टमहाब्राह्मणस्य कृतौ" इत्यादि। टीकाकृतामग्रणी-र्मल्लिनाथोऽपि" तत्रभवान् भट्टिनामा कवि" रित्यादि। भारतीवर-पुत्रस्य भारतकवेर्भरतमल्लिकस्य भारती पुनः "भर्त्तृहरिर्नाम कविः श्रीरामकथाश्रयं महाकाव्यं चकार" इत्यादि। अनादरमिदं वाक्यमिति काव्यटीकाप्रवीणस्य वयःप्राचीनस्य न जयमङ्गलस्य मतमेव आपाततोऽनुमातुम् अनुमोदयामः। तत्र च काव्यानां कमनीयं कवित्वोत्कर्षकारि साकरम् आलङ्कारिकवचनमपि कारणत्वेन आकारयामः। यथा "कवेर्वृत्तस्य वा नाम्ना" इत्यादि। समुपस्थितायां विधिव्यवस्थितव्यवस्थायां कथं तस्य अनवस्थितिमेव स्थितिस्थापकत्वे परिकल्पयामः। विधिविधानं यत्नेन पालयितव्यमिति ललितमेव समाकलितमुदाहरणम् कवेर्नाम्ना इदं काव्यमिति।

कापकाश्च न भिन्नमतयः केवल द्वावेव भर्त्तृहरिनामानौ आमनन्ति प्रमाणानां सर्व्वथा विरहेण तत्रास्माकम् अङ्गीकर्त्तव्यम्। इति-हासादिपथेन एवमेवास्माकं बुद्धिविषयः, यथा भुवो भर्त्ता एक एव भर्त्तृहरिरिति।

भर्त्तृहरिः एको भवतु, द्वौ वा भवताम्, का नो हानिः, तेनैव विरचितमिदं काव्यं इत्यपरेषाम् अकारणे अप्रामाण्ये च प्रश्ने, प्रश्न-मतार्थनिराकरणाय कारणान्तरम् अवश्यमेवाङ्गीकर्त्तव्यमिति तदेव आकारयामः। तथा च भुवो भर्त्ता भर्त्तृहरिः कारणान्तरकातरान्तः-करणो राजकार्य्ये उदासीनः सुखासीनः पुनरौदासीन्ये औदास्य-परिपूर्णमिव कोषकाव्यत्रयं तूर्णं विरचयामास। तच्च काव्यत्रयं शृङ्गार-शतकम्, नीतिशतकम्, वैराग्यशतकञ्च। कोषकाव्यानामेतेषां भङ्गेच असमान-रसभावत्वात् विभिन्नकालकलनीयत्वात् क्वचिद्गतपार्थ-क्यदर्शनाच्च एक एव कर्त्ता एतेषाम् इत्येवं कथयितुं न पारयामः। कोषकाव्यत्रयस्य कर्त्ता भर्त्तृहरिः लोकलोचनललामभूतस्य लोके अतुलनीयस्य विक्रमादित्यस्य विक्रमादिगुणशालिनो विलासलास्येन

प्रक्षीणमतिर्मतिमतामग्रणीः अग्रणीः पुनः अग्रगण्ये पथि वर्षमपि कालान्तरम् अकार्य्याण्यन्तरान्तरा अन्तरयामास। वलभीराजाश्रितस्य पूर्व्वम् आश्रयविरहितस्य भट्टेः कालात् विक्रमादित्यस्य कालोऽपि असमान एव।

षड्रिपुपरिभूते विक्रमादित्यभ्रातरि भर्त्तृहरौ एतावत्यपि किंवदन्ती, यथा किल भोगविलासविचक्षणस्य क्षणमपि दिनक्षपयोर्नास्ति विरामः रमणीजनासुलभरमणीयगुणायां निरक्तायामपि दृष्टिरमणीयायां स्वरमण्यां रममाणा आसक्तः। एवं स्त्रैणाय त्रितापहरणाव्ययमानमाय अनिशमेव राजकार्य्ये उदासीनाय तस्मै सहसैव संन्यासिना केनचित् प्रदत्तं यौवनस्य जीवनान्तकालेऽपि स्थापकं किञ्चित् फलम्। सफलमनोरथेन सन्ततमेव सन्तुष्टस्वान्तेन तेन तत्क्षणमेव तत् फलं संसारसारभूतायाः भार्य्यायाः हस्ते प्रदत्तं। नरपतौ विरक्ता सा अनुरक्ता पुनः पुरुषान्तरे अननुरक्तस्य उपपतेर्हस्ते प्रददौ, स च उपपतिर्हस्ते, सा पुनः राजाग्रसचिवस्य राज्ञे एव तत्फलमर्पितवती इति विस्मयव्याकुलो राजा स्वानुकूलमिव तत् परिदृष्ट्वा गवेषणया ज्ञातोदन्तः तदनन्तरमेव अन्तर्दाहमवाप। एवं तदा प्रभृत्येव सुचिराभ्यस्तेऽपि अभवे कार्य्यजाते अनभ्यस्तेन इव वीतस्पृहेन विगतलोभेन विपुलविलासविद्वेषमानसेन तेन राजसुतेन पूत एव अवधूताश्रम आशिश्रिये। एवं सति कोषकाव्यत्रयस्य कर्त्ता भूभर्त्ता, भट्टिकाव्यस्य प्रणेता भूभर्त्तुराश्रितः, भर्त्तृहरिः पूर्व्वं विलासलालसदास्येन दासीभूतो दुर्मतिरेवासीत्, पश्चाच्च विषमविषयविषविषयीभूतमतिः सुमतिमवाप, भट्टिकाव्यस्य कवयिता जन्मकालत एव करालकालकवलपरिरक्षके परमाराध्ये परमेश्वरे चरमेण विश्वासेन विश्वस्तः। विक्रमादित्यस्य अनुजातो भर्त्तृहरिः स्वत एव विक्रमादित्यसमसामयिकः, असौ खलु षट्खृष्टाब्दशेषभागे सप्तमखृष्टाब्दप्रथमभागे वा समुत्पन्नः। स खलु कोषकाव्यस्य प्रणेता,

असौ पुनर्मङ्गाजनगणमनोहरणचमस्य महाकाव्यस्य कवयिता, इत्यनयोरनायासेन वैषम्यदर्शनात् विवदमानानामपि सुखमेव मीमांस्यम्। कवित्वशक्तिसमाराधितस्य कोषकाव्यस्य कवयितु-रयमिष्टे अभीप्सन्तापप्रलापानां संलाप इव श्लोकान्तरमपि उपलभ्यते तथाच तत्कृते नीतिशतके।

"यां चिन्तयामि मनसा मयि सा विरक्ता
सा चान्यमिच्छति जनं स जनोऽन्यरक्तः।
अस्मत्कृतेऽपि परितुष्यति काचिदन्या
धिक् तञ्च ताञ्च मदनञ्च इमाञ्च माञ्च।"

भेदविचारचतुराणाम् चारुवचोनाम् कविभेदोऽपि मनसः रोचयतु पार्थक्यपरिकल्पनम्। तथाच कोषकर्त्ता—

"महेश्वरे वा जगतामधीश्वरे
जनार्द्दने वा जगदन्तरात्मनि।
न वस्तुतो मे प्रतिपत्तिरस्ति
तथापि भक्तिस्तरुणेन्दुशेखरे॥"

एतेन शिवभावभावितस्य शैवत्वम्, भट्टिकाव्यस्य कविः परम-भागवत इत्यत्र तद्भगवतो रामस्य चरितचित्रणमेव विचित्रं प्रमाणम्।

आदर्शजगति प्रदर्शितचरमत्वस्य लब्धितविशारदशारदस्य परम-पण्डितस्य महामहिम्नो विद्यासागरमहाशयस्य मतवादोऽपि विवद-मानान् भरतमल्लिकादीन् निरस्यति, सोऽपि "भट्टिकाव्यस्य रचयिता भट्टिः" इत्यादिमल्लिनाथजयमङ्गलभारतीमेव स्वीचकार। इति परेषां अयौक्तिकं मतं निराकृत्य काव्यस्यास्य कविः भट्टिरेवेति सिद्धान्तमेव सिद्धान्तयामः।

अशेषकलाविज्ञानिताऽनन्यसामान्योऽयं कविः असामान्यस्य स्वनामख्यातस्य महिममण्डितजगन्मण्डलस्य श्रीधरस्वामिनः सुत